The D. A.-V. College Sanskrit Series No. 14

# THE RAMAYANA

OF

# VALMIKI

( in the North-Western Recension )

## THE ARANYA-KANDA

*Critically edited for the first time from*

*Original Mss. and supplied with Indexes.*

by

BHAGAVAD-DATTA, B. A.

and

VISHVA-BANDHU SHASTRI, M. A., M. O. L.,

LAHORE.

1935.

# दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला

दयानन्दब्राह्ममहाविद्यालयाचार्यपदप्रतिष्ठितपूर्वेण दयानन्दमहा-
विद्यालयीयानुसन्धानालये विश्वेश्वरानन्दानुसन्धानालये
चाधिष्ठिताध्यक्षपदेन, एम्० ए०, एम्० ओ० एल्-
इत्युपाधिधारिणा

## विश्वबन्धुशास्त्रिणा

बहुभिर्विद्वद्भिः सङ्गत्य
सम्पादिता



तस्यां चायं

## चतुर्दशो ग्रन्थः

लवपुरम्
१९९२ वि०

# THE D. A.-V. COLLEGE
## SANSKRIT SERIES.

**Edited**

in conjunction with other scholars

BY


**VISHVA-BANDHU SHASTRI**, M.A, M.O.L

Director, D. A.-V. College Research Deptt. and
Vishveshvarananda Research Institute, formerly,
Principal, Dayananda Brahma Mahavidyalaya.


**Volume Fourteen.**


LAHORE

1935.




दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला सं० १४

अप्रकाशितचरं

पश्चिमोत्तरशाखीयं

# वाल्मीकीय-रामायणम्

तत्र चैतद्

## आरण्य-काण्डं

क्रमेण बी० ए० इति; एम० ए०, एम० ओ० एल० इति चोपाधिधारिभ्यां

भगवद्दत्तेन

विश्वबन्धुशास्त्रिणा

च

नानादर्शपुस्तकाधारेण संशोध्य, नैकविधोपयोगि-

सूचीनिवहेन चोपसंयोज्य

सम्पादितम्



लवपुरम्

१९९२ वि०

## Foreword.

About fifteen years ago, the D. A.-V. College Research Department, Lahore, undertook the work of editing and bringing out the N,-W. Recension of the Adi-Kavya of Aryavarta. Due to paucity of funds, however, the progress has been very slow. Indeed, when towards the end of 1927, the Ayodhya-Kanda had been done, the difficulty to continue the work was being considered insuperable. The situation was, however, saved by the timely help of the Government which was duly acknowledged in the preface to the Bala-kanda, published in 1931. But the hope expressed therein in regard to the continuity of the governmental subvention was not fulfilled with the result that it has again taken full four years to place the present volume in the hands of our readers.

I began editorial work on the Aranya-Kanda towards the middle of December last. The draft-collation of the whole text and the printing of the first 256 pages of the same had already been done under the supervision of my predecessor in office, Pandit Bhagavad Datta, B. A. I, for my part, have thoroughly revised and checked the last 156 pages of the text. As many as thirteen appendices have also been added at the end to facilitate and deepen further studies in the Ramayana. Of these, special attention has to be drawn to Nos. 10, 11 and 12 wherein figures of speech, peculiar grammatical forms and metrical irregularities as found in the text have respectively been noted. No. 13 comprises an anthology of Valamiki's wisdom as reflected in the pages of the present volume. And, lastly, an apology is

due to the readers for the presence of many blemishes of textual constitution as well as oversights of proof-reading. It may, however, afford some satisfaction to them to note that necessary corrections have been supplied in the end.

Main assistance in the production of this volume has been given by Pandit Prema-Nidhi Shastri. Pandit Pitambara Shastri has likewise been assisting in the preparation of the appendices and correction of proofs. I am grateful to them for this co-operation. I also thank Pandit Bhim Deva Shastri, M. A., M. O. L., Pandit Nathu Ram Shastri, Pandit Shiva Datta Shastri, and Pandit Ganeshamani Shastri, my assistants of the Vishveshvaranand Research Institute, for having been helpful in many ways in connection with the present work.

Out of the ten Mss. used in our edition of the Bala-kanda, three, namely, 'प', 'प्र,' and 'ट' have not been available for the present work. Of the remaining ones, namely, 'क', 'रा', 'त', 'ज', 'व'. 'ल', and 'श', 'त'. 'ल', and 'ज' have been referred to here as 'ल', 'म', and 'श्र' respectively. Another Ms 'च', which has been used here closely resembles 'श' in its textual constitution and the form of its readings and, also, in its affinity to the Bengal Recension. The number of Cantos as given herein is 77 instead of 82. This is due to the fact that it counts Cantos 13 and 14, 20 and 21, 29 and 30, 34 and 35 and 77 and 78 continuously as single ones. It was procured from Chiniot (Panjab) and is very old. It is in old Nagari and its readings on account of their clearness and correctness have not unoften a definite advantage over those found elsewhere.

Lahore.
July 15,1935.

VISHVA-BANDHU SHASTRI

# Contents ( विषयानुक्रमणी )



# Abbreviations ( सङ्केताः )

N = Nill = ( नास्ति )

पू = पूर्वार्धे = ( 1st. half of a verse )

उ = उत्तरार्धे = ( 2nd half of a verse )

व = वंगशाखीयं वाल्मीकीय-रामायणम् (Gorreson Edition)

दा = दाक्षिणात्यशाखीयं वाल्मीकीय-रामायणम् (Nirnaya sagar Press Edition Bambay 1911. )

ओम्

# वाल्मीकिय-रामायणम्

## * आरण्यकाण्डम् *

[वं-१,२,३]=[प्रथमः सर्गः]=[दा-अयोध्याकाण्डे११६-११८]

प्रतिप्रयाते भरते वसन् रामस्तपोवने ।
१] लक्षयामास सोद्वेगांस्तत्रारण्यनिवासिनः ॥ १ ॥ [ १
ये तत्र चित्रकूटस्य पुरस्तात् तापसाश्रमाः ।
२] राममासाद्य निरतां[2]स्तांश्चालक्षयदुत्सुकान् ॥ २ ॥ [ २
नयनै[1]र्भ्रुकुटी[3]भिश्च राममुद्वीक्ष्य शङ्किताः ।
३] अन्योन्यमभिजल्पन्तः शनैश्चक्रुः पृथक् कथाः ॥ ३ ॥ [ ३
तेषां त्वौत्सुक्यमालक्ष्य रामः शङ्कासमन्वितः ।
४] कृताञ्जलिरुवाचेदमृषिं कुलपतिं तदा ॥ ४ ॥ [ ४
कच्चिन् न भगवन् किञ्चित् पूर्ववृत्तमिदं कृतम् ।
५] दृश्यते वैकृ[4]तं येन विक्रियन्ते तपस्विनः ॥ ५ ॥ [ ५
प्रमदाजनमासाद्य कच्चिन् नावरजस्य मे ।
६] लक्ष्मणस्य विनिर्दिष्टं नानुरूपमिवात्मनः ॥ ६ ॥ [ ६
गुरुशुश्रूषणाचारा नित्यं भर्तृपरायणा ।

---

१. च म अ—राममुद्वीक्ष्य ।

२. च—निरतां० ।

३. भ च—भ्रूकुटीभिश्च ।

४. च—विकृतं ।

७] प्रमदाभ्युदितां[1] वृत्तिं सीता कच्चिन् न वर्तते ॥ ७ ॥[2] [ ७
अथर्षिर्जरयाविष्टस्तपस्वी[3] नियतेन्द्रियः ।
९] स वेपमान उत्थाय रामं वाक्यमथाब्रवीत् ॥ ८ ॥ [ ८
न चन्द्रमुख पश्यामो वृत्तिं दुश्चरितां त्वयि ।
१०] वर्तसे हि परां[4] वृत्तिं[5] तपस्विषु तपस्विवत् ॥ ९ ॥ [ N
११पू] नेह दीर्घायुषः कश्चिद्[6] दृष्ट्वा[7] न परितुष्यसि (ति?) ।
त्वं चेह गुरुसद्वृत्तो लक्ष्मणेन समन्वितः ॥१०॥ [ N
१२] कुतः कल्याणवृत्ताया जाताया विपुले कुले ।
वचनं तात वैदेह्यास्तपस्विषु विशेषतः ॥११॥ [ ९
१३] त्वन्निमित्तं वयं तात वसामः शुभदर्शन ।
१४पू] रक्षोभ्यस्तेन संवृत्ताः[8] कथयन्तो मिथः कथाः ॥१२॥ [१०
१५पू] रक्षांसि पुरुषादानि नानारूपाणि राघव ।
१७पू] एष पन्था महर्षीणां फलान्याहरतां वनात् ॥१३॥ [ N
१७उ] अनेन तु सुदुर्गं तत् प्रविशन्ति महर्षयः ।
N ] ऋषीणां कदनं कृत्वा जनस्थाननिवासिनाम् ॥१४॥ [ N
रावणावरजः कश्चित् खरो नामेति विश्रुतः ।

---

१. ब—प्रासादाभ्युचितां ।
च—प्रमदाभ्युचितां । ल—प्रमादाभ्युदितां ।
२. भ च—अतः परमधिकः पाठः—
रामस्य वचनं श्रुत्वा तापसास्ते तपोधनाः ।
परस्परमथालोच्य प्रत्यूचुस्तं न किञ्चन ॥
३. भ च—०स्तपसा ।
४. च—भूतदयापरं ।
५. च—पुरावृत्तिं ॥
६. च—कांचित् ।
७. कै—दृष्टावपरितुष्यति ।
८. च—संवृत्तो ।

१६पू] उत्साद्य[1] तापसान् सर्वान् जनस्थानकृतालयान् ॥१५॥ [११
उच्छिष्टं[2] वा प्रमत्तं वा तापसं धर्मचारिणम्[3] ।
१६उ] घ्नन्ति चास्मिन् महारण्ये तान् निवारय राघव ॥१६॥ [N
१८पू] रावणावरजः कश्चित् खरो नामेह राक्षसः । [N
धृष्टश्च जितकाशी च नृशंसश्च बलोत्कटः ।
१९] अवलिप्तो महाकायस्त्वां च तात न मृष्यति ॥१७॥ [१२
त्वं यदा प्रभृति ह्यस्मिन्नाश्रमे[4] तात वर्तसे ।
२०] तदा प्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥१८ [१३
दर्शनैस्तैर[5]तिक्रूरैर्महाभीषणकैरपि ।
२१] नानारूपैर्विरूपैश्च मुखैस्तै[6] र्भीमदर्शनाः[7] ॥१९॥ [१४
अप्रशस्तैरशुचिभिः सन्तर्ज्यन्ते तपस्विनः[8] ।
२२] दर्शयन्ति परां हिंसामनार्याः पुरतः स्थिताः ॥२०॥ [१५
गहनेष्वाश्रमान्तेषु लीना विकृतदर्शनाः[9] ।
२३] रमन्ते[10] तापसांस्तत्र वसन्तो ह्यल्पचेतनाः[11] ॥२१॥ [१६

---

१. कै—उन्माथ्य । रा—तन्माय ? ।
२. कै रा—तच्छिष्टं ।
३. व म—धर्मचारिणां ।
च—ब्रह्मचारिणां ।
४. कै—यस्मिन्नाश्रमे ।
व म अ—ह्यस्माश्राश्रमे ?
५. भ च—दर्शनैस्तै० ।
६. च—मुख्यैस्तै० । अ—मुखैस्त० ।
७. च—भीमदर्शनैः ।
८. भ—संदृश्यन्ते तपस्विभिः ।
९. अ—लीलाविकृतदर्शनाः ।
१०. भ—बाधतस्तापसां सत्र ।
च—बाधन्ते ताप० ।
११. भ—बासयन्तोल्पचेतनाः ।

अधिक्षिपन्ति स्रुग्भाण्डमग्निमेधांसि वारिणा ॥[1] [१७पू

२४] शोणितैर्बलिकर्माणि ध्वंसयन्ति कृतानि च ॥२२॥ [N

विश्वस्तानामविश्वस्तास्तापसानां तपस्विनाम् ।

२५] भैरवं कर्णमूलेषु विस्रजन्ति[2] महास्वनम् ॥२३॥ [N

कलशांश्च प्रमत्तानां हवने प्रत्युपस्थिते । [१७उ

२६] दर्भांश्चादाय[3] गच्छन्ति तर्जयन्ति च दारुणाः ॥२४॥ [N

तैर्दुरात्मभिराविष्टमाश्रमं त्यक्तुमिच्छवः[4] ।

२७] गमनायान्यदेशस्य नोदयन्त्यृषयो[5] हि माम् ॥२५॥ [१८

यत् पुरा राम मारीचप्रमुखा राक्षसा हि वै । [१९पू

N] कौशिका[भा]र्गवादीनां मुनीनां भावितात्मनाम् ॥[6] [N

N] दुःखं कुर्वन्ति ते पापास्त्यक्ष्यामो वयमाश्रमम् ॥२६॥ [१९उ

बहुमूलफलं चित्रमविदूरादितो वनम् ।

२९] पुराणमाश्रमं[7] चाहं श्रयिष्ये सगणः[8] पुनः ॥२७॥ [२०

३०पू] त्वय्यप्ययुक्तं स खरः पुरा राम प्रवर्तते ।[9] [२१

---

१. अ—प्राग्भाण्ड० ।

२. भ च—विसृजन्ते ।

३. च—दर्भानादाय ।

४. ल अ ब म—त्यक्तुमिच्छया ।

५. कै—नोदयन्नृषयो । भ च—नोदयन्मुनयो ।

६. च—नास्ति ।

७. च—पुराणाश्रमसंबाधं ।

८. ब—सगणं ।

९. कै रा भ च—अतः परमधिकः पाठः—[1]

सकलत्रस्य चोद्वेगं नित्ययुक्तः स राघव ।

सबान्धव इतो गच्छ यदि चित्तं प्रवर्तते ॥

---

१ कै—०स्य चोद्वेगे । रा—ऊकलत्र चो० ।

अ—सकलस्य चोद्वेगेन ।

३१उ] असतां रक्षसामेषां समीपे क्रूरकर्मणाम् ॥२८॥ [ N
राम कामं समर्थस्त्वं राक्षसानां विनाशने ।
३२] कर्तव्यो[1] न हि[2] विश्वासश्छलच्छिद्रा हि राक्षसाः ॥२९॥[ N
इत्युक्त्वा ते तु मुनयो रामं पद्मनिभेक्षणम् ।
३३] न शेकुरुत्तरैर्वाक्यैरवरोद्धुं[3] समुत्सुकाः ॥३०॥ [२३
अभिनन्द्य समापृच्छ्य समाश्वास्य च राघवम् ।
३४] स जगामाश्रमं त्यक्त्वा सकुलः कुलपो हि वै ॥[4]३१॥ [२४
स साध्यर्षिगणं रामः सुदूरमनुगम्य[5] च ।
N] प्रीतैर्महर्षिगणैः सर्वैः[6] समादिष्टो[7] न्यवर्तत ॥३२॥ [२५
ममाश्रमं विरहितं तापसैर्नियतेन्द्रियैः ।
N] संप्रीयमाणो बहुशः संप्रयुक्तः सुनिर्ष्ठुरम्[8]
N] विमृश्य[9] राक्षसं दृष्ट्वा रामोऽपि गमनोत्सुकः ॥३३॥ [२६

१. भ च—गन्तव्यो ।

२. भ—तु ।

३. ल अ भ च—॰रवरोद्धुं ।

४. भ च—अतः परमधिकः पाठः—

स चाश्रमस्तैर्मुनिभिः ससंगतै-
रनिश्वसन् दूरतया हतप्रभः ।
बभूव मौनव्रतचारिभिर्यथा
समुत्सुकैर्बालमृगैर्निषेवितः ॥
इत्यार्षे रामायणे आरण्यकाण्डे तासर्गः[1] ।

५. भ—सुदूरमभिगम्य ।

६. अ—सार्धम् ।

७. अ म व—समाश्लिष्टो । च—समादिश्य ।

८. कै रा ल अ भ म व—सनिष्ठुरम् ।

९. भ च—विवृद्धं ।

१ च—तापसवाक्यं ।

१, २] स च तेषु प्रयातेषु तपस्विषु विशेषतः ।
N] न तत्रारोचयद् वासं वैदेही च सुमध्यमा ॥३४॥ [सर्ग ११७,१
तस्माद्धैव गच्छाम इति सञ्चिन्त्य राघवः ।
४] प्रातिष्ठत ततः सार्धं सीतया लक्ष्मणेन च ॥३५॥ [४
अत्रेराश्रममासाद्य ववन्दाते महाभुजौ ।
५] स चास्मै भगवानत्रिः पितृवत् प्रत्यपद्यत ॥३६॥ [५
स्वयमासाद्य चासीनः सर्वं रामाय सत्कृतम् ।
६] स सौमित्रिं महाभागं सीतां च परिसान्त्वयन् ॥३७॥ [६
N] पत्नीं च तपसा वृद्धां सिद्धां शुद्धां तपोधनाम् ।
सान्त्वयामास धर्मज्ञां सर्वभूतहिते रताम् ॥३८॥ [७
७] अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
प्रतिगृह्णीष्व वैदेहीमित्याह मुनिपुङ्गवः ॥३९॥ [८पु
८] छन्दयस्व च कामैस्त्वं वैदेहीं धर्मचारिणीम् ॥४०॥ [N

---

१. म ब—अतः परमधिकः पाठः—

सा च मे स्मृतिरन्वेति तन्नित्यमनुशोचतः ।
स्कन्दावारनिवेशेन तेन चेह महात्मना ॥
करीषैश्चैव करिणामुपमर्दः कृतो महान् ।
लक्ष्मणस्तु प्रयातेषु तपस्विषु विशेषतः ॥

२. ब—महाभुजौ ।

३. रा—प्रतिपद्यत ? ।

४. म ब—स्वयमादिश्य ।

५. अ—सौमित्रे । म ब—सौमित्रम् ।

६. रा—कर्दवस्व ?

७. च—प्रकामैस्त्वं । कै—च कामैस्तै ।

रामाय चाचचक्षे[1] तां ब्राह्मणीं संशितव्रताम् । [८ उ
९] तीव्रेण तपसा युक्तां नियमैश्चाप्यलङ्कृताम् ॥४१॥
दशवर्षसहस्राणि यया[2] तप्तं महत् तपः । [१०
१०] अनसूया पुरा तात इयं मातेवं[3] तेऽनघ ॥४२॥ [N
दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ।
११] यया मूलफलं सृष्टं जाह्नवी च प्रवर्तिता ॥४३॥[4] [९
देवकार्यनिमित्तं च यया संत्वरमाणया ।
१२] दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥४४॥[4] [११
तामिमां पूर्वभूतानां नमस्कार्यां यशस्विनीम् ।
१३] अभिगच्छतु वैदेही सिद्धामक्रोधनां सतीम् ॥४५॥ [१२
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ।
१४] सीतामुवाच धर्मज्ञामिदं वचनमुत्तमम् ॥४६॥ [१४
सीते श्रुतं ते वचनं मुनेरस्य प्रभाषतः ।
१५] प्रियार्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् ॥४७॥ [१५
अनसूयेति या लोके कर्मणा ख्यातिमागता ।
N] तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम्[5] ॥४८॥[6] [N
सीता त्वेतद् वचः श्रुत्वा राघवस्य हितैषिणी ।
१६] तामत्रिपत्नीं धर्मज्ञां धर्मज्ञा सोऽभिचक्रमे[7] ॥४९॥ [१६

१. अ—चावचक्षे ।
२. ल भ च—यथा ।
३. के रा अ ब म—मातेव ।
४. च—नास्ति ।
५. अ—मनस्विनीं ।
६. म च नास्ति ।
७. भ—त्वाभिचक्रमे । छ—त्वाभिचक्रमे ।

१७पू] शिथिलां पलितां वृद्धां जरापाण्डुरमूर्धजाम् ।[1] [१७पू
१८उ] अभ्यवादयत क्षिप्रं ब्रुवन्ती मैथिली ह्यहम् ॥५०॥ [१८उ
अभिवाद्याथ वैदेही तापसीं धर्मचारिणीम् ।[2]
१९] बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥५१॥ [१९
ततः सीतां महाभागां सा दृष्ट्वा धर्मचारिणीम् ।[3]
२०] कुशलं सान्त्वयित्वैनां पर्यपृच्छयदनामयम् ॥५२॥[4] [२०
त्यक्त्वा राज्यं सुखं चैव मानं वृद्धिं च मानिनि[6] ।
२१] दिष्ट्याऽस्यनुगता रामं रोहिणीव निशाकरम् ॥५३॥ [२१
नगरस्थो वनस्थो वा पापवान् यदि वा शुचिः ।
२२] यासां स्त्रीणां प्रियो भर्ता तासां लोकाः सनातनाः॥५४॥[२२
अशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ।
२३] स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥५५॥ [२३
नातो विशिष्टं जानामि बान्धवं सुभृशं स्त्रियाः ।
२४] सर्वत्र योग्यं वैदेहि तपः कृतमिवाव्ययम् ॥५६॥ [२४

---

१. भ च—अतः परमाधिकः पाठः—
प्रयतां वेपमानाङ्गीं प्रवाते कदली यथा ।
तां तु सीता महाभागा अनसूयां धृतव्रताम् ॥
२. भ— धर्मचारिणी ।
३. कै रा—बद्धाञ्जलिं सान्त्वयित्वा ।
४. ल अ म ब—नास्ति ।
५. अ—राज्यसुखं ।
६. कै रा भ—भामिनि । च—भाविनि ।
७. म ब—लोकः सनातनः ।
८. भ च—वरिष्टं ।
९. भ च—पश्यामि । भ च—जानासि ।
१०. भ च—विमृशन् ।
११. ल अ भ म ब च—स्त्रियः ।

न त्वेनमनुगच्छन्ति[1] लोके गुणमसत्स्त्रियः[2] ।
२५] कामपृक्तस्वहृदया[3] भर्तृनाथा हि योषितः ॥५७॥ [२५
प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि ।
२६] अकार्यवशमापन्नाः स्त्रियो न तु पतिव्रताः ॥५८॥ [२६
त्वद्विधास्त्वद्गुणैर्युक्ता[4] दृष्टलोकपरावराः[5] ।
२७] स्त्रियः[6] स्वर्गं[7] प्रवेक्ष्यन्ति[8] यथा पुण्यकृतस्तथा ॥५९॥ [२७
N] त्वद्विधाः[9] कतिचित् सीते लोके सन्ति पतिव्रताः ॥६०॥[ N
इत्येवमुक्ता वैदेही भगवत्यानसूयया[10] ।
३,१] प्रतिपूज्य वचो हृष्टा वक्तुं समुपचक्रमे ॥६१॥ [११८, १
नेदमाश्चर्यमार्ये यत् त्वमेवमभिभाषसे[11] ।
२] विदितं हि[12] ममाप्येतद् यथा नित्यं गुरुः पतिः ॥६२॥[२
यद्यप्येष[13] भवेद् भर्ता ममार्ये धनवर्जितः ।
३] अद्वैव[14] ह्यनुवर्तव्यस्तथाऽप्येष [15]पतिर्मया ॥[16]६३॥ [३

---

१. ख—त्वमेवमनुगच्छन्ति ।
२. कै—गुणमस० । रा—गुणमसत्स्त्रियः ।
३. भ च—कामसंपृक्तहृदया ।
४. कै—तद्विधास्तु गुणैर्यु० ।
५. भ च—दृष्टा लोकपरावरे ।
६. म ब—स्त्रियं ।
७. भ ख—स्वर्गे ।
८. भ च—प्रविश्यन्ते ।
९. कै—तद्विधाः ।
१०. भ च —०त्यानुसूयया ।
११. अ—त्वमेवमतिभाषसे । भ च—त्वमेवमनुभाषसे ।
१२. भ च—तु ।
१३. भ च—यद्यप्येव ।
१४. भ —०वमुपवर्तव्य० ।
१५. म ब—मति० ।
१६. ब—अद्वैधमुपगन्तव्यस्तथाप्येष भवेन्मया ।

किं पुनर्यो गुणैः श्लाघ्यः सानुक्रोशो जितेन्द्रियः ।
४] स्थिरानुरागो धर्मात्मा पित्रोः प्रियतरः सदा ॥६४॥ [४
यां वृत्तिं वर्तते रामः कौसल्यायां[१] दृढव्रतः[२] ।
५] तामेव नृपपत्नीनामन्यासामपि[३] वर्तते ॥६५॥ [५
सकृद्दृष्टास्वपि[४] स्त्रीषु नृपेण नृपवत्सलः ।
६] मातृवद् वर्तते वीरो मानमुत्सृज्य मानदः ॥६६॥ [६
आगच्छता[५] च विजनं भयावहमिदं वनम् ।
७] समर्पितं हि यच्छ्वश्वा[६] हृदये[७] तत्[८] स्थितं मम ॥६७॥ [७
पाणिग्रहणकाले च यदाग्निगुरुसन्निधौ ।
८] अन्वशासत् पिता वाक्यं यन्मां तदपि मे हृदि ॥६८॥[८
नवीकृतं च तत् सर्वं वाक्यैस्ते[९] ब्रह्मचारिणि ।
९] पतिशुश्रूषणान्नान्यत् तपो नार्या विधीयते ॥६९॥ [९
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ।
१०] तथैवारुन्धती याता पतिशुश्रूषया दिवम् ॥७०॥ [१०
वरिष्ठा[१०] सर्वनारीणामेषामार्ये[११] दिवं गता ।

---

१. भ च—कौशल्यायां ।

२. भ च—महायशाः ।

३. भ च—नृपनारीणाम० ।

४. भ च—सकृत्स्पृष्टास्वपि ।

५. भ च—आगच्छन्तं च ।

६. ल अ म च—यत्तत्र । व भ—नास्ति ।

७. भ—हृदयेन ।

८. भ—पुण्यतमे ।

९. रा—वाक्येऽत्र ब्रह्म० । भ च—वाक्यैस्ते धर्मचारिणि ।

१०. अ म व—वसिष्ठा ।

११. भ च व—०नारीणामेषाप्यार्ये ।

११] रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥७१॥ [११
एवंविधाश्चाप्यपराः स्त्रियो भर्तृदृढव्रताः ।
१२] ताश्च लोके महीयन्ते शुभे पुण्येन कर्मणा ॥ ७२॥ [१२
ततोऽन[1]सूया संहृष्टा श्रुत्वा वचनमुत्तमम् ।
१३] शिरस्याघ्राय चोवाच मैथिलीं हर्षगद्गदा ॥७३॥ [१३
उपपन्नं च युक्तं च वचनं तव मैथिलि ॥
१४] प्रीता[2] चास्म्य[3]द्य ते किं नु[4] वचनं करवाण्यहम् ॥७४॥ [१४
नियमैर्विविधैराप्तं तपोयोगजमस्ति मे ।
१५] यत् संस्मृत्य[5] बलं सीते छन्दये त्वां शुचिस्मिते ॥७५॥ [१५
१६उ] कृतकृत्या[6]ऽवदत् सीता तपोबलं[7]समन्विताम् ॥७६॥ [१६उ
सा त्वेवमुक्ता धर्मज्ञा [8]तथा प्रीततराऽभवत् ।
१७] अब्रवीच्चापि सफलं हर्षं सीते करोम्यहम् ॥७७॥ [१७
इदं दिव्यं वरं माल्यं वस्त्राण्याभरणानि च ।
N] अङ्गराग[9]श्च वैदेहि महार्हं[10] च विलेपनम् ॥७८॥ [१८

---

१. भ म च—ततोनुसूया ।
२. ला—प्रीता चास्त्यद्यतो । भ—प्रीता चास्ति द्यतः ।
म ब—प्रीता चास्मभ्यसे । च— प्रीता चास्मि यतः ।
३. भ—ते ।
४. ला—ब्रूहि किं ।
५. भ—सांश्रित्य । च—संस्मृत्य ।
६. भ च—कृतमित्यब्रवीत् ।
७. कै रा ल अ ब भ—तपोवनस० ।
८. कै रा भ च—तया ।
९. अ भ च—अंगरागं । म—अंगरागैश्च ।
१०. ला अ—ममार्हं ।
म ब—समार्हं ।

मया दत्तमिदं सीते भूषणैरपि[1] वर्जिता ।
१७] तथा रूपमसंक्लिष्टं[2] नित्यमेव भविष्यति ॥७९॥ [१९
अङ्गरागेण दिव्येन लिप्तेन[3] जनकात्मजे ।
१८] शोभयिष्यसि भर्तारं विष्णुं श्रीरिव[4] रूपिणी ॥८०॥ [२०
सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा ।
२१] मैथिली प्रतिजग्राह प्रीतिदायमनुत्तमम् ॥८१॥ [२१

इत्यार्षे[5] रामायणे आरण्यकाण्डे[6] अनसूयाप्रीतिदायो
नाम प्रथमः[7] सर्गः ॥१॥

---

१. भ च—भूषणैरपि ।
२. म ब— ०पसमंक्लिष्टं ।
३. भ च—लिप्तांगी ।
४. भ—श्रीर्विष्णुमिव । च—श्रीविष्णुमिव ।
५. कै—इतिश्री आर्षे ।
६. भ—नास्ति ।
७. कै रा ला भ म ब च—नास्ति ।

प्रतिगृह्य तु तं[1] सीता प्रीतिदायमनुत्तमम् ।
१ ] कृताञ्जलिपुटा धीरा तामुपास्त तपोधनाम् ॥१॥ [२२
तां तु सीतामुपासीनामनसूया[2] दृढव्रता ।
२ ] वचनं वक्तुमारेभे शुभं[3] कमललोचनाम् ॥२॥ [२३
स्वयंवरे किल प्राप्ता त्वमेतेन यशस्विनि[4] ।
३ ] राघवेणेति वै सीते कथा[5] श्रोत्रमुपागता[6] ॥३॥ [२४
तां कथां श्रोतुमिच्छामि विस्तरेणैव मैथिलि ।
४ ] यथाऽनुभूतं कात्स्न्र्येन तन्मे त्वं वक्तुमर्हसि ॥४॥ [२५
एवमुक्ता तु[7] तां सीतां विरराम तपस्विनी ।
५ ] तामुवाच ततः सीता श्रूयतामितिथो वचः ॥५॥ [२६
N] यथावृत्तमिदं सर्वं तत् ते वक्ष्यामि तापसि ॥६॥ [N
मिथिलाधिपतिर्वीरो जनको नाम वीर्यवान्[8] ।
६ ] क्षत्रकर्मण्यभिरतो न्यायतः शास्ति मेदिनीम् ॥७॥ [२७

---

१. भ च—तत् ।

२. भ च—०मनुसूया ।

३. भ च—सीतां ।

४. भ च—यशस्विना ।

५. रा भ च—तथा ।

६. व—श्रोतुमुपागता । ला—श्रोतुमिवागता ।

७. म ला—सीतां तां ।

८. भ च—धर्मवित् ।

स गतो धर्मसंवर्तं[1] काले किल पिता मम ।
७] पत्नीभिः सह धर्मात्मा ददर्श महदद्भुताम्[2] ।।८।। [N
अन्तरिक्षेण गच्छन्तीं दिव्यैरूपां[3] मनस्विनीम् ।।
८] मेनकां[4] वै ह्यप्सरसं[5] द्योतयन्तीं दिशो दश ।।९।। [N
९पू] दृष्ट्वा[6] तां रूपसंपन्नां मन्मथस्य रतीमिव ।
N] बभूव मुदितो राजा दृष्ट्वा तां वामलोचनाम् ।।१०।। [N
N] स मन्मथशराविद्धः पिता मम तदाभवत् ।
९उ] मनुष्यसदृशी बुद्धिस्तस्यासीद् धैर्यनाशिनी ।।११।। [N
अस्यां नाम समुत्पाद्यं[7] दांपत्यं[8] कीर्तिवर्धनम् ।
१०] ममापत्यविहीनस्य महान् हि स्यादनुग्रहः ।।१२।। [N
अन्तरिक्षे च वागुच्चैरुच्चचार[9] तदा किल ।।
११] प्राप्स्यस्यपत्यमस्यास्त्वं सदृशं रूपसंपदा ।।१३।। [N
तस्य लाङ्गलहस्तस्य कर्षतः[10] क्षेत्रमण्डलम्[11] ।

---

१. कै भ—धर्मसत्कर्तुं ( इत्यपरकरशोधितः पाठः ) वस्तुतस्तु धर्मसंवर्तमित्येव रम्यः पाठः ।
ल—धर्मसंवर्तुं । म—धर्मसंवंतं ?
ब—धर्मसंवर्ते । च—कर्मसत्कर्तुं ।

२. भ च—महदद्भुतं ।

३. रा—दिव्यरूपं ।

४. म ला ल—मीनकां ।

५. ल भ च ब—ह्यप्सरसां ।

६. भ च—तां दृष्ट्वा ।

७. भ च—समुत्पद्ये० ।

८. ला—०दापत्यं । च—०दपत्यं । म—०दम्पत्यं ।

९. च—वागुच्चैरुच्चरन्मानुषी ।

१०. कै रा ल अ भ ला च—कृषतः ।
म—कृष्यतः ।

११. ला—क्षेत्रमुत्तमम् ।

१२] अहं किलोत्थिता भित्त्वा जगतीं[1] नृपसन्निधौ ॥१४॥ [२८
स मां दृष्ट्वा नरपतिर्मुष्टिं विक्षिपतीं मुहुः[2] ।
१३] पांसुवेष्टित[3]सर्वाङ्गीं विस्मितो जनकोऽभवत्[4] ॥१५॥ [२९
अनपत्येन च स्नेहादारोप्याङ्कमहं स्वयम् ।
१४] ममेयं तनयेत्युक्त्वा[5] स्नेहश्च मयि पातितः ॥१६॥ [३०
अन्तरिक्षे च वागुक्ता मानुषी किल मां प्रति । [३१पू
१५] सदुन्दुभिरिवाचिन्त्या पुष्पवृष्टिपुरःसरा ॥१७॥ [N
मेनकायां[6] समुत्पन्ना कन्येयं[7] मानुषी तव ॥
१६] भविष्यति नृलोकेऽस्मिन् राजन् गुणनिदर्शनम् ॥१८॥ [N
विदार्य क्षेत्रवसुधां यस्मात्[8] सीतेव चोत्थिता ॥
१७] तस्मात् सीतेति नामास्याः[10] ख्यातिं यास्यति भूतले[9] ॥१९॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलेश्वरः[11] ।

---

१. अ—जयन्ती ।

२. भ च—पुनः ।

३. भ च—॰गुण्ठित॰ ।

४. रा—भवेत् ?

५. भ—तनयेत्युक्ता ।

६. म—मेनिकायां ।

७. म—कनीयं ?

८. च—यस्मादियं ।

९. च—लोकेषु ।

१०. च भ—से सुता । म पुस्तके 'ते सुता' इत्यस्य स्थाने 'भूतले' इत्याद्यनन्तरः पाठः ।

११. म—मिथिलेश्वरः । च—मिथिलाधिपः ।

१८] वृद्धिं चावाप परमां[1] मामवाप्य नराधिपः[2] ॥२०॥ [३०
देव्यै प्रदत्ता चेष्टायै ज्येष्ठायै पुण्यकर्मणा ।
१९] तया[3] संवर्धिता चास्मि[4] स्निग्धया मातृसौहृदात् ॥२१॥ [३३
पतिसंयोगयोग्यं[5] च वयो दृष्ट्वैव[6] मे पिता ।
२०] चिन्ताम[7]भ्यगमद् दीनो वित्तनाशादिवाधनः ॥२२॥ [३४
सदृशाच्चावकृष्टाच्च[8] लोके कन्यापिता वरात् ।
२१] प्रधर्षणामवाप्नोति[9] शक्रेणापि समो यदि ॥२३॥ [३५
२२पू] [10]तं धर्षणाधिं दूरस्थं निशम्य स च पार्थिवः ।
२३पू] अयोनिजां च[11] मां दृष्ट्वा नाध्यगच्छत्[12] स निश्चयम्[13] ॥२४॥ [३७पू
२२उ] चिन्तार्णवस्य पारं स नाससादाप्लवो यथा । [३६उ
२३उ] सदृशं चानुरूपं[14] च महीपालः[15] पिता मम ॥२५॥ [३७उ

---

१. भ च—विपुलाम् ।
२. भ—जनाधिपः ।
३. भ—तया च वर्धिता ।
४. च—चाहं ।
५. ल अ म—०योगं च । च—पतिसंयोगसुलभं ।
६. भ—दृष्ट्वा च ।
७. च—ध्यानमभ्यगमद् ।
८. अ—०शाच्चाथकृष्टश्च ।
९. च—प्रधर्षणमाप्नोति वज्रिणापिसमो भुवि ।
१०. च—तां धर्षणामदूरस्थामवेक्ष्यात्मनि पार्थिवः ।
११. च—च हि ।
१२. भ म—नाधिगच्छति निश्च० ।
१३. च— च चिंतयन् ।
१४. भ च—मेनुरूपं ।
१५. भ—वसुधाधिपतिः पतिः ।

तस्य बुद्धिरियं जाता चिन्तया[1]नस्य धीमतः ।
२४] स्वयंवरं तनूजायाः करिष्ये इति च स्थिरा[2] ॥[3]२६॥ [३८
यजमानस्य यज्ञे वै वरुणेन महात्मना ।
२५] दत्तं धनुर्वरं प्रीत्या तूणीरौ चाक्षयौ तथा ॥२७॥ [३९
न चाल्यते मनुष्यैश्च प्रमाणं गौरवाधिकम् ।
२६-२८] यन्न शक्ताश्चालयितुं समस्ता मनुजाधिपाः॥[4]२८॥ [४०
स्था[5]पयित्वा तदा चापं पित्रा मे व्याहृतं व[6]चः ।
२९] समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥२९॥[7] [४१

---

१. च—दह्यमानस्य चिन्तया ।

२. म—स्थिता ।

३. च—स्वयंवरे वरयिष्ये सीतायाः इति धर्मतः ।

ला—स्वयंवरं तनूजायाः करिष्यामीति निश्चयः ।

४. च—पुरुषाणां शतं साग्रं यदुद्वहति गौरवात् ।

तेजोयुतानां बलिनां तरुणानां च धीमतां ॥

यत्तन्मनोरथेनापि ह्नितसत्त्वबलानुगैः ।

न शक्यं सहसा वोढुं ? ( ढुं ) कुतः सत्त्वं न चेतुसा ? ॥

तथैव चारोपयितुं सर्वैरेव नराधिपैः ।

अन्यैश्च पुरुषैर्लोके न नाम्यस्व ? विकत्थनैः ॥

५. भ—इमं तु स्थाप्य तच्चापं ।

६. भ—तदा ।

७. च—तद्धनुर्मे पिता स्थाप्य सर्वानाहूय मन्त्रिणः ।

तेषां मध्येप्युवाचेदं तदा वचनमूर्द्धि ? ( र्जि ) तं ।

य इदं[1] धनुरुद्यम्य राजा सज्यं[2] करिष्यति ।
३०] सुताया मेऽद्य सीतायाः स वै[3] भर्ता भविष्यति ॥३०॥ [४२

इत्यार्षे[4] रामायणे आरण्यकाण्डे सीताजन्मवर्णनं[5]
नाम द्वितीयः[6] सर्गः ॥२॥

---

१. अ—यस्त्विदं ।
म—यात्तुदं ? ।
२. अ म—सज्जं करि० ।
रा—सत्यं करि० ।
च—सज्यमेकेन पाणिना ।
३. च—करिष्यति च सीतायाः स तु ।
४. कै रा—आर्षे ।
५. म—०न्मवर्णनो । च—सीतावर्णनो ।
६. कै रा ल भ म ब—नास्ति ।

स्वयंवरनिमित्तं तु स्थापयित्वा महद् धनुः ।
३१] पित्रा मे प्रेषिता दूता राज्ञां विक्रान्तयोधिनाम् ॥१॥ [N
आहूता मत्कृते पित्रा यथावत् समुपस्थिताः[6] ।
३२] वरार्हा वरदाः सर्वे राज्ञा चैवं सुसत्कृताः ॥२॥ [N
स्वयंवरगृहं तच्च समन्तान्मे नराधिपाः ।
३३] प्रविश्याद्योतयंल्लक्ष्म्या द्रष्टुं स्प्रष्टुं च कार्मुकम् ॥[12] ३॥ [N
हस्तिहस्तपरीणाहं तच्च दृष्ट्वा महद्धनुः ।
३४] निषेदुर्भूमिपास्ते समुद्वीक्ष्य परस्परम् ॥४॥ [N

---

१. च— च ।
२. कै रा ल भ अ ब म—तस्थौ स्थाप्य ।
ब—तस्थौ प्राप्य । च—नास्ति ।
३. च—तदायुधम् ।
४. च—विक्रमशालिनाम् । ला—देशेषु सर्वेषु ।
५. रा—आहूतास्मै सत्कृते पि । कै—पुस्तके तु संशोध्य
"आहूताः, सत्कृता मान्याः" इति पाठः कृतः ।
६. च—आहूतास्ते यथाकालमुपाजग्मुर्नराधिपाः ।
७. भ—सर्वे राज्ञा । च—स्वयं राज्ञा ।
८. च—च सत्कृताः ।
९. ल—ताश्च ।
१०. भ—समाक्रान्ताः । च—समस्तास्ते ।
११. भ—प्रविशन् द्योतयंल्ल० ।
१२. च—विविशुर्द्योतितं लक्ष्म्या ददृशुस्तच्च कार्मुकम् ।
१३. भ—तद्वद् दृष्टं । च—तते दृष्ट्वा ।
१४. च—०र्भूमिपाः सर्वे ।

तच्चै[1] दृष्ट्वा धनुर्दिव्यं गौरवाद् गिरिसन्निभम्।[2]
३५] अभिवाद्याभ्युँपाजग्मुरशक्तास्तस्य पूरणे ॥५॥ [४३
तैत: स्वयंवरे भँग्ने प्रतियातेषु राजसु।
३६] पिता मे व्यथितो दीनश्चिन्तॆां भूयोऽध्यगच्छॆत ।।[७]६।। [N
अथ दीर्घस्य कालस्य राघवोऽयं महाद्युतिः।
३७] मृगयामटते वीरो लक्ष्मणश्च महायशाः ।।[७]७।। [४४
३८उ] निवर्तमानेनैतेन गौरवं धनुषः श्रुतम्।[१०]
N] जातकौतूहलो भर्ता मम रामस्तदाऽभवत् ।।८।। [N
३९उ] ततोऽभिगम्य पितरं मम रामोऽभ्यवादयत्।[११]
४०पू] इक्ष्वाकोर्हि[१२] पितुस्तस्य वयस्यो हि[१३] पिता मम ।।[१४]९।। [N

---

१. अ—तत्र।
२. च– तत्ते धनुर्द्धरं दृष्ट्वा दुर्द्धरं गिरिगौरवम्।
३. च—आभिवाद्य नृपा जग्मु०।
४. भ—स्वयंवरेषु भग्नेषु।
५. ब—भूयश्चिन्तां।
६. कै—भूयोधिगच्छत ?।
ल अ ब—भूयोप्यगच्छत।
७. च—पिता वरं मे सदृशं चिन्तया नाध्यगच्छत।
८. ब—राघवस्य।
९. च—काकपक्षधरो धन्वी पूर्णचन्द्र इवोदितः।
१०. च—यजतो मे पितुर्यज्ञं जनकस्य महात्मनः॥
उपायाद्धनुषः श्रुत्वा गौरवं वीर्यमेव च।
विश्वामित्रेण सहितो गाधिपुत्रेण धीमता॥
११. च—आभिगम्य ततो रामः पितरं मेभ्यवादयत्।
१२. भ—ऐक्ष्वाकोस्तु।
१३. म—वयस्योपि।
१४. च—पितुर्ममास्पदं गत्वा ज्ञात्वा नाम च तत्वतः।

४०उ] कुशलानामयं पृष्टः पूर्वं रामेण धीमता ।
४१पू] पित्राऽपि च तथा राम[1]स्ततो[2] रामोऽब्रवीद् वचः[3]॥१०॥[N
मनुष्यशतसंधार्यं[4] धनुस्तत्र च[5] यत्[6] प्रभो ।
४२] तन्मे कौतूहलं द्रष्टुं तोलितुं चापि पार्थिव ॥[7] ११॥ [N
अथ पाणौ गृहीत्वै[8]नं पिता मे जगतीपतिः ।[9][10]
४३] जगाम तद्गृहं यत्र धनुर्दिव्यं व्यतिष्ठत ॥[11] १२॥ [N
विस्मितश्चाभवद् राजा पिता मे स महायशाः ।[12]
४४] रामश्च[13] तद्धनुर्दृष्ट्वा तोलयामास वीर्यवान् ॥१३॥ [N
तेनारोपयता वेगान्मध्ये भग्नं च[14] तद् धनुः ।
४५] तस्य शब्दोऽभवद् भीमः पततश्चाशनेरिव ॥१४॥ [४९

---

१. च—रामः ।
२. च—स्मयमानस्ततोऽब्रवीत् ।
३. च—अतः परमधिकः पाठः—
जनकं मन्त्रिणां मध्ये वचोवोचत्तदान्तरे ।
४. च—०शतसंबाधं ।
५. च—किल ।
६. च—आगतं ।
७. म—नास्ति ।
८. भ च—गृहीत्वा तं ।
९. च—जगतः पतिः ।
१०. म—नास्ति ।
११. च—जगाम देशं तं यत्र दिव्यं तिष्ठति तद्धनुः ।
१२. च—स पितुर्दर्शयामास तद्धनुः प्रियदर्शनः ।
लक्ष्मणं चैव रामं च दृश्यतामिति चाब्रवीत् ॥
१३. च—ततश्च ।
१४. भ च—महद्धनुः ।

बहवस्तत्र पुरुषा मोहिताश्च महीं गताः ।
४६] धनुषस्तस्य शब्देन वर्जयित्वा[1] जनत्रयम्[2] ॥१५॥ [N
राघवं लक्ष्मणं चैव राजानं पितरं च मे ।
४७] इतरश्च जनः सर्वो नै [3]धैर्यं कुरुते हृदि ॥१६॥ [N
राघवस्य तु तं दृष्ट्वा पिता मे विक्रमं तदा ।
४८] परितुष्टोऽभवद् राजा जनको नृपसत्तमः ॥१७॥ [N
ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना ।
४९] भार्यार्थमुद्यता[4] दातुमादाय[5] जलभाजनम् ॥१८॥ [५०
दीयमानां च स मां प्रतिजग्राह राघवः ।
५०] श्रुत्वा[6] चैवाययौ तत्र ह्ययोध्याऽधिपतिः प्रभुः ॥१९॥ [N
ततः[7] श्वशुरमामन्त्र्य मम तं[8] पृथिवीपतिम् ।
५१] धर्मपत्नी नरेन्द्रेण दत्ता रामाय धीमते ॥२०॥ [५२
ममैव चानुजा बाला ऊर्मिला[9] प्रियदर्शना ।
५२] भार्याऽर्थं लक्ष्मणस्यापि पित्रा दत्ता स्वयं मम ॥२१॥ [५३

---

१. कै रा ल अ—हर्षयित्वा ।
२. अ—जगत्त्रयम् ।
३. ल—धनैर्यम् ? इति भ्रममूलः पाठः ।
४. कै—भार्यार्थमुदिता ।
५. भ च—दातुमुद्यस्य ।
६. भ—अविज्ञाय पितुः छंदमयोध्याधिपते(:) प्रभुः ।
अस्य पाठस्य स्थाने केनापि मूलस्थः पाठः
प्रान्तभागे लिखितः ।
च—अपि ज्ञापयितुं छंदमयोध्याधिपतेः प्रभुः ।
७. भ—तत्र ।
८. अ—स मतं । च—संमतं ।
९. ल—तुर्मिला ।

एवं दत्ताऽस्मि[1] रामाय पित्रा तस्मिन्[2] स्वयंवरे ।
५३] अनुरक्ता[3] च[4] भावेन पतिं वीर्यवतां वरम् ॥ [५४
N] वनं चैवानुयाताऽस्मि रामं मे हृदयस्थितम्[5] ॥२२॥ [N
अनसूया[6] तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ।
५, १] पर्यष्वजत बाहुभ्यां शिरस्याघ्राय[7] मैथिलीम् ॥२३॥[११६, १
२उ] व्यक्ताक्षरपदं दिव्यं स्वच्छन्दादिव[8] भाषितम् ।
त्वया मम प्रीतिकरं कथितं पुत्रि पुष्कलम् ॥२४॥ [२ पू
३] रामं च कथयन्त्यास्ते दृढं मधुरभाषिणि । [२ उ
४पू] रविरस्तं गतः[9] सीते प्राप्ता च रजनी शुभा ॥२५॥ [३ पू
दिवि[10] संविप्रकीर्णानामाहारार्थं च मैथिलि ।
५] समागतानां नीडेषु[11] पक्षिणां[12] श्रूयते स्वनः ॥२६॥ [३ उ
एते तेऽप्यभिषेकार्द्रा विप्राः कलशपाणयः ।

---

१. अ—दत्ताय ।
२. भ—तत्र ।
३. रा—अनुरक्ताञ्च ।
४. च—रामो ।
५. कै रा—हृदये स्थितम् । च—हृदयस्थितः ।
६. भ च—अनुसूया ।
७. रा—शिरसाघ्राय ।
८. भ—मच्छन्दादिव ।
९. रा—गतास्मीति । भ च—गतः श्रीमान् ।
१०. रा—दिव्यसंविप्रकीर्णाना० ।
अ म च—दिवसं विप्रकीर्णा० ।
भ—दिवसे विप्रकीर्णा० ।
११. च—तीर्थेषु ।
१२. रा भ च—श्रूयते पक्षिणां ।

६] सहिताश्चापवर्तन्ते सलिलाप्लुतवल्कलाः ॥२७॥ [४
अग्निहोत्रेष्वृषीणां च हुतेषु विधिपूर्वकम् ।
७] कपोताङ्गारुणो धूम्रो दृश्यते पवनोद्धतः ॥२८॥ [५
अन्यवर्णा अपि नगा नीलीभूताः समन्ततः ।
८] विप्रकर्षाच्च देशस्य दृश्यन्ते मेघसन्निभाः ॥२९॥ [६
रजनीचारिणश्चापि प्रवर्तन्ते समन्ततः ।
९] तपोवनमृगाश्चापि वेदीदर्भेषु शेरते ॥३०॥ [७
संप्रवृत्ता निशा सीते नक्षत्रसमलङ्कृता ।
१०] ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यते द्योतितेऽम्बरे ॥३१॥ [८
गम्यतामनुजानामि रामस्यानन्तरा भव ॥
११] कथयन्त्या हि मधुरं त्वयाऽस्मि परितोषिता ॥३२॥ [९
अलंकुरु च तावत् त्वं प्रत्यक्षं मम मैथिलि ।
१२] प्रीतिं जनय मे वत्से दिव्यालङ्कारभूषिता ॥३३॥ [१०
सा ततः समलङ्कृत्य सीता सुरसुतोपमा ।

---

१. च—०ताश्चाप्यवर्तंते ।
२. रा भ म च—अग्निहोत्रे ऋषीणां० ।
३. भ च—अल्पवर्णा स्वपि ।
४. म—नागा ।
५. कै रा ल अ म ब—नास्ति ।
६. भ च—तपोवने मृगाश्चैव ।
७. ल—द्योतिते स्वरे ।
भ—द्युदितोम्बरे ।
च—द्युदितोत्थ १ ( म्ब ) रे ।
८. च—अलंकुरुष्व ।
९. च—सुरसुतोपिता ।

१३] अभिवाद्यर्षिपत्नीं तां राममभ्याजगाम ह ॥३४॥ [११
दिव्याभरणसंयुक्तां वसानां पीतमम्बरम् ।
१४] राघवः प्रेक्ष्य वैदेहीमनसूयामपूजयत् ॥३५॥ [१२
न्यवेदयत तत् सर्वं सीता रामस्य विस्तरम् ।
१५] प्रसादं च तपस्विन्या वसनाभरणस्रजः ॥३६॥ [१३
प्रहृष्टस्त्वभवद् रामो लक्ष्मणश्च महायशाः ।
१६] मैथिल्याः सत्क्रियां दृष्ट्वा मानुषैस्तां सुदुर्लभाम् ॥३७॥ [१४
ततस्तां शर्वरीं पुण्यां प्रीतः शशिविराजिताम् ।
१७] अर्चितस्तापसैः सर्वैरुवास रघुनन्दनः ॥३८॥ [१५
तस्यां रात्र्यां व्यतीतायामभिषिक्ता हुताग्नयः ।
१८] आपृच्छन्त ततः सर्वे तापसास्तं मनीषिणः ॥३९॥ [१६
ऊचुस्ते सकलं रामं तापसा वनचारिणः ।
N] वनस्यास्य च सञ्चारं राक्षसैः समभिद्रुतम् ॥४०॥ [१७

---

१. अ—रामपार्श्वं जगाम ।
२. रा ल अ म ब—॰रणसंयुक्ता ।
३. ल अ म ब—वसाना ।
४. भ च—॰मनुसूया॰ ।
५. भ च—वै ।
६. कै—तात्क्रियां ।
७. भ च—ततः स ।
८. ल अ भ म—सर्वैरुवाच ।
९. कै रा भ—रात्रौ ।
१०. च—वचनं ।
११. अ म—कामं ।

अतीव तैः प्राञ्जलिभिस्तपस्विभि-
द्विजैः कृतस्वस्त्ययनः परन्तपः ।
वनं सभार्यः प्रविवेश राघवः
२३] सलक्ष्मणश्चन्द्र इवाभ्रमण्डलम् ॥ ४१ ॥ [२१

इत्यार्षे रामायणे आरण्यकाण्डे अत्र्यनुज्ञा
नाम तृतीयः सर्गः ॥ ३ ॥

---

१. भ—अथैव । वस्तुतस्तु 'अथो स' इति प्रवनः पाठः ।
च—अथो स ।
२. भ—नास्ति ।
३. के रा ल भ म व—नास्ति ।

प्रविश्य स महारण्यं दण्डकारण्यमात्मवान् ।
१] ददर्श रामो धर्मज्ञस्तापसाश्रममण्डलम् ॥ १ ॥ [१
कुशचीरैः समाकीर्णं ब्राह्मया लक्ष्म्या समन्वितम् ।
२] यथा प्रदीप्तं दुर्धर्षं गगने सूर्यमण्डलम् ॥ २ ॥[2] [२
शरण्यं सर्वभूतानां सुसंमृष्टनिवेशनम् । [३पू
३] पूजितं चोपनृत्तं च नित्यमप्सरसां गणैः ॥ ३ ॥
विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः । [४
४] समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् ॥ ४ ॥
सुरम्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम् । [५
५] मूलैश्चापि परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ५ ॥ [६उ
फलमूलाशनै दान्तैश्चीरकृष्णाजिनाम्बरैः ।
६] सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्वृतम् ॥ ६ ॥ [७

---

१. रा—दुर्दर्शं । भ च—दुर्दर्शं ।

२. भ—नास्ति ।

३. ब—चोपवृत्तं ।

४. रा—सुग्भंडैर० ? । भ—स्नग्भांडै० ?

५. भ—फलमूलोपशोभितैः ।
च—फलमूलोपशोभितम् ।

६. भ च—मूलैर्वापि ।

७. भ च—वै ।

८. रा—फलमूलाशनन्दांते ?

९. ळ—शीरकृष्णा० ?

बलिहोमार्चितं पुण्यं [1]ब्रह्मघोषनिनादितम् । [६पू

७] शीर्णपर्णकृताहारैः[2] शोभितं परमर्षिभिः ॥ ७ ॥ [८पू

तद् ब्रह्मसदनप्रख्यमृषिसंघनिषेवितम् ।

८] ब्रह्मभूतैर्महाभागैर्ब्राह्मणैरुपशोभितम् ॥ ८ ॥ [८उ

९उ] तं दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ।

१०पू] अभ्यगच्छन्महातेजाः सज्यं[3] कृत्वा महद्धनुः ॥९॥ [९

दिव्यज्ञानोपसंपन्ना[4] रामं दृष्ट्वा तपोधनाः ।

११] अभ्यगच्छन्त संहृष्टा वैदेहीं च तपस्विनीम्[5] ॥१०॥ [१०

नवं सोममिवोद्यन्तं तं दृष्ट्वा धर्मचारिणम्[6] ।

१२] मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् धृतव्रताः ॥ ११ ॥ [११

रूपं वेशं[7] तथा[8] लक्ष्मीं सौकुमार्यं[9] सुवेशताम्[10] ।

१३] ददृशुर्निर्मितं[11] धात्रा रामस्य वनवासिनः ॥ १२ ॥ [१३

राघवं[12] चैव सीतां च नेत्रैरनिमिषैरपि ।

---

१. अ म—पुण्यघोषनि० ।

२. भ—पर्णाशिभिर्यताहारैः ।
च—शीर्णपर्णव्रताहारैः ।

३. भ च—सज्जं ।

४. भ—दिव्यज्ञानोपसंपन्नं ।

५. कै रा अ भ म च—यशस्विनीम् ।

६. अ म—व्योमचारिणम् ।

७. च—वेषं ।

८. भ च—ततो ।

९. च—सुकुमार्यं ।

१०. भ च—सुवेषताम् । म—निवेशताम् ।

११. च—निर्मितां ।

१२. च—राघवौ ।

१४] आश्चर्यभूतं ददृशुः सर्वे ते ब्रह्मवादिनः[1] ॥१३॥ [१३
अथ ते वै महात्मानः[2] सर्वभूतहिते रताः ।
१५] अतिथीन् पर्णशालायां तान् निवेश्य यथाविधि ॥१४॥ [१४
ततो रामस्य सत्कृत्य विधिवत् पावकोपमाः ।
१६] आजह्रुः सलिलं पुण्यं सहिता धर्मकोविदाः ॥१५॥ [१५
पुष्पमूलफलं[3] वन्य[4]माश्रमांश्च महर्षयः ।
१७] निवेदयित्वा धर्मज्ञास्ततः[5] प्राञ्जलयोऽब्रुवन् ॥१६॥ [१६
शर्मदाता जनस्यास्य शरण्यश्च महायशाः[6] ।
१८] पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥१७॥ [१७
दण्डश्चैवं[7] चतुर्भागः प्रजा रक्षति राघव ।
१९] राजा तस्मात् परान् भोगान् भुङ्क्ते लोकनमस्कृतः॥१८॥[१८
ते वयं भवता रक्ष्या भवद्विषयवासिनः ।
२०] नगरस्थो वनस्थो वा त्वं नो राजा रघूद्वह[8] ॥१९॥ [१९
न्यस्तदण्डा वयं राम जितक्रोधा[9] जितेन्द्रियाः ।
२१] रक्षणीयास्त्वया सर्वे गर्भरूपास्तपोधनाः[10] ॥२०॥ [२०

---

१. भ च—ब्रह्मचारिणः ।
२. भ च—महाभागाः ।
३. भ च—पुष्पं मूलं फलं ।
४. अ म—वाक्यमा० ।
५. भ च—रामाय ततः ।
६. ला—महामते ।
७. भ च—इन्द्रस्यैव ।
८. भ च—रघूत्तम ।
९. म—जितक्रोधजिते० ।
च—शांतक्रोध ।
१०. म—गच्छरूपा० ? ।

एवमुक्त्वा फलैर्वन्यैः पुष्पैर्[1]वन्यैश्च राघवम् ।
२२] अन्यैश्च विविधैर्भक्ष्यैः सलक्ष्मणमपूजयन् ॥२१॥ [२१

स तु मुनिवरलब्धसत्क्रियस्
त्रिदशपतिस्त्रिदशैरिवार्चितः ।
स[2]सुखमवसदाश्रमे तदा
२३] जनकसुतासहितो महायशाः ॥ २२ ॥ [N

इत्या[3]र्षे रामा[3]यणे आरण्यकाण्डे तापसाश्रमनिवासो
नाम च[4]तुर्थः सर्गः ॥४॥[5]

---

१. भ च—०मूलैश्च ।
२. कै अ म च—सुसुखमव० ।
रा—स्वसुख० ? ।
३. कै—आर्षरामा० ।
४. कै रा ल भ म व—नास्ति ।
५. भ—इत्यार्षे आरण्यके ।
च—इत्यार्षे आरण्यकाण्डे ।

अथ ते तापसाः सिद्धा रामं वैश्वानरप्रभाः ।
N] न्यायवृत्त्या यथान्यायं तर्पयामासुरीश्वरम् ॥१॥[2] [N
N] पूजितः स तु तैस्तत्र रजनीमवसत् सुखम् ॥२॥ [२
कृतातिथ्योऽथ रामस्तु हर्युदिते सूर्यमण्डले ।
१] आमन्त्र्य च मुनीन् सर्वान् वनमेव जगाम ह ॥[5] ३॥ [१
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ।
२] क्रूरवृक्षलतागुल्मं दुर्दर्शसलिलाशयम् ॥ ४ ॥ [२
विकूजमानशकुनिं झिल्लिकागणनादितम् ।
४] लक्ष्मणानुचरो रामो वनमुग्रं ददर्श ह ॥ ५ ॥ [३
वनमध्ये तु काकुत्स्थस्तस्मिन् घोरमृगावृते ।
५] ददर्श गिरिदृगाभं पुरुषादमवस्थितम् ॥ ६ ॥ [४
वक्रनासं विरूपाक्षं दीर्घास्यं निर्नतोदरम् ।

---

१. कै रा ल भ ब—तर्पयित्वा मुनीश्वर ।
अ म—तन्मयित्वा ? ।
२. दाक्षिणात्येष्वयं पाठः प्रथमसर्गस्यैव द्वाविंशः श्लोकः ।
३. अ म—संततैस्तत्र । भ च—स तु तत्रैव ।
४. भ—रामश्चाभ्युदिते ।
५. भ च—आमन्त्र्यर्षिगणान् सर्वान् वनमेव व्यगाहत ।
६. कै रा—झिल्लीकरयाना० ।
म—चिल्लीकगण० । अ ब ल—झिल्लीक० ।
७. च—०मृगायुते ।
८. भ च—गिरिशृंगाभं ।
९. भ च—निर्यातोदरम् ।

६] दीप्तजिह्वं महाकायं मृगव्यालनिबर्हणम् ॥७॥ [५
अष्टौ सिंहानुपासृज्यं शूलाग्रे रुधिरोक्षितान् ।
७] सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥८॥ [७
वसानं चर्म वैयाघ्रं वसारुधिरभूषितम् ।
८] त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥९॥ [६
स रामं लक्ष्मणं दृष्ट्वा सीतां च शुभलक्षणाम् ।
९] अभ्यधावत् सुसंक्रुद्धो लेलिहान इवान्तकः ॥१०॥ [८
स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ।
१०] अङ्केनादाय वैदेहीं परिक्रम्य ततोऽब्रवीत् ॥११॥ [९
युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ।
११] प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ ॥१२॥ [१०
कथं वां तापसाभ्याशे वासः प्रमदया सह ।
१२] अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ ॥१३॥ [११
अहं वनमिदं दुर्गं विराधो नाम राक्षसः ।
१३] चराम्यव्याहतो नित्यं मुनिमांसानि भक्षयन् ॥१४॥ [१२
एवमुक्त्वा तु तौ वीरौ विराधो वनगोचरः ।

१. भ च—मृगव्याड० ।
२. भ च · सिंहानुपासज्य ।
३. कै रा ल अ म व—मूलशब्दो न कश्चित् शूलार्थं ध्वनयति ।
४. च—रुधितोक्षितान् ? ।
५. भ च—०ररूषितं ।
६. अ म—व्याधितास्य० ।
७. भ च—चैव दृष्ट्वा सीतां तथैव च ।
८. अ ल म व—लोकहार ।
९. च—इवान्तकं ? ।
१०. रा—चराम्यवाहतो ।
ल—चरामि व्याप्तो ।

१४] अङ्केनादाय वैदेहीं खमुत्पत्य ततोऽब्रवीत् ॥१५॥ [N
इयं नारी वरारोहा मम भार्या भविष्यति ।
२३] पापयोर्युवयोश्चापि पास्यामि रुधिरं मृधे[1] ॥१६॥ [१३
इत्युक्त्वा वचनं घोरं सीतां जग्राह राक्षसः ।
N ] अङ्कमारोप्य वैदेहीं[2] प्रहसन्नग्रतः[3] स्थितः ॥१७॥ [N
तस्यैवं ब्रुवतो धीरं विराधस्याङ्कमाश्रिता ।
२४] सीता प्रावेपत त्रस्ता प्रवाते कदली[4] यथा ॥१८॥ [१४
तां दृष्ट्वा राघवः सीतां विराधस्यङ्कगां स्थिताम्[5] ।
२५] अब्रवील्लक्ष्मणं रामो मुखेन परिशुष्यता ॥१९॥ [१५
पश्य सौम्य[6] नरेन्द्रस्य जनकस्यात्मजामिमाम् ।
२६] मम भार्यां सदाचारां[7] ज्येष्ठां दशरथस्नुषाम् ॥२०॥ [१६पू
अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम् ।
२७] विचेष्टमानां[8] घोरस्य राक्षसस्याङ्कगां शुभाम् ॥२१॥ [१६उ
तस्यैवं वदतश्चैव राघवस्य मनस्विनः ।
N ] उवाच राक्षसो हृष्टः सौमित्रिं[9] मित्रनन्दनम् ॥२२॥[10] [सर्ग३,१

१. ल ब—मृम ?
२. भ च—चैवेनां ।
३. कै रा ल ब—प्रहरन्नग्रतः ।
४. रा—कदले ।
५. भ च—शुभाम् ।
६. कै ल म ब—सोम्य ।
७. भ च—शुभाचारां ।
८. कै रा ल म ब—चिवेष्टमानां ।
९. अ—सौमित्रं ।
१०. भ च—तस्यैवं ब्रवतो धृष्टं विराधस्य महात्मनः ।
उवाच रामः संहृष्टः सौमित्रिं मित्रनन्दनम् ॥

१५उ] कौ युवां ब्रुवतं क्षिप्रं कुत्र चैव गमिष्यथः ॥ २३॥ [२
तमुवाच ततो रामो राक्षसं क्रूरदर्शनम् ।
१६] आपृच्छन्तं महात्मा वै इक्ष्वाकुकुलनन्दनः ॥२४॥ [३

पश्य लक्ष्मण वैदेहीं दीनां नष्टप्रचेतनां ।
यदभिप्रेतमस्मासु प्रियं वीर कृतं च यत् ।
कैकेयास्तत्समृद्धं वै क्षिप्रमद्यैव लक्ष्मण ॥
या न तुष्यति राज्येन पुत्रस्यादीर्घदर्शिनी ।
ययाहं सर्वभूतानां हितः प्रस्थापितो वनम् ॥
अद्येदानीं सकामास्तु सा माता मम कैकयी ।
परामर्षो(र्शो?)त्तु वैदेह्या न दुःखतरमस्ति मे ॥
पितुर्विनाशं सौमित्रे राज्यस्य हरणं तथा ।
परामर्ष(र्श?)श्च वैदेह्याः चित्तमुन्मथयन्ति मे ॥
तथा ब्रुवति काकुत्स्थे बाष्पशोकपरिप्लुते ।
अब्रवील्लक्ष्मणः क्रुद्धो निश्वसन्निव पन्नगः ॥
अनाथ इव लोकानां नाथस्त्वं वासवोपमः ।
मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥
शरेणाभिहतस्याद्य मया क्रुद्धेन राघव ।
गतायुषो विराधस्य मही पिबतु शोणितम् ॥
राज्यकामे महाक्रोधो भरते योभवन्मम ।
विराधे तं प्रमोक्ष्यामि वज्री वज्रं यथाचले ॥
मम भुजबलवेगनिर्जितस्य पततु शिरोऽस्य दुरात्मनो भुवि ।
विनिपततु ततोऽस्य जीवितं धरणितले व्रजतो विघूर्णितस्य ॥
इत्यार्षे रामायणे विराधदर्शनं नाम सर्गः ।
अथोवाच पुनर्वाक्यं विराधः परुषं वने ।

१. अ—ब्रुवतां ।
२. भ च—आत्मानं पृच्छतः सर्वं कौ युवां क्व गमिष्यथः ।
३. कै रा ल अ म व—अपृच्छंतं ।

१ च—नष्टप्रचेतसा । २ च—सदामर्षो तु ।
३ च—राज्यापहरणं । ४ च—रामायणे अरण्यकाण्डे ।

१७उ] क्षत्रियौ जातिसम्पन्नौ विद्धि[1] नौ वनचारिणौ ।
१८पू] त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डके[2] ॥२५॥ [४
तमुवाच विराधस्तु रामं सत्यपराक्रमम् ।
१९] हन्त शंसामि ते राजन् निबोध मम राघव ॥२६॥ [५
पुत्रः किलाहं जगतो माता मम शतह्रदा ।
२०] विराध इति मां प्राहुः[3] पृथिव्यां सर्वराक्षसाः ॥२७॥ [६
उत्सृज्य प्रमदामेतामनवेक्षौ[4] यथागतौ ।
२२] त्वरमाणौ पलायेथां[5] नान्यथा[6] जीवितं भवेत् ॥२८॥ [८
N ] तं रामः प्रत्युवाचेदं रोषसंरक्तलोचनः ।
७,१उ] राक्षसं विकृताकारं विकृतं[7] पापचेतसम् ॥२९॥ [९
क्षुद्र[8] धिक् त्वां सुहीनार्थं[9] कालमन्वेषसे ध्रुवम् ।
८,२] नैनां प्राप्स्यसि तिष्ठ त्वं न मे जीवन् विमोक्ष्यसे[10]॥३०॥[१०
N ] तयोः कथयतोरेव रामराक्षसयोस्तदा ।
८,१पू] लक्ष्मणः क्रोधसंरब्धो धनुर्जग्राह वेगवान्[11] ॥३१॥ [N
ततः सज्यं[12] धनुः कृत्वा लक्ष्मणो निशिताञ्शरान्[13] ।

१. के रा ल अ म ब च—विधिज्ञौ ।
२. भ च—दण्डकान् ।
३. भ च—मामाहुः ।
४. अ—०तामनवेक्ष्य । भ च—०तामनवेक्ष्यौ ।
५. भ च—पलायेतां ।
६. भ च—नान्यतो ।
७. के रा—राक्षसं । भ च—विराधं ।
८. च—क्षुद्रं ।
९. भ च—धिक्तेस्तु हीनार्थं ।
१०. रा अ—विमोक्षसे ।
११. म—वेदवान् ।
१२. अ भ च—सज्जं । म—सृज्यं ।
१३. भ च—निशितां छरान् ।

३] सुशीघ्रमथ[1] संयोज्य[2] राक्षसे वै न्यपातयत् ॥३२॥ [११
ते शरीरं विराधस्य[3] भित्त्वा बर्हिण[4]वाससः ।
४] निपेतुः शोणितादिग्धा धरण्यां पावकप्रभाः ॥३३॥ [१३
स नदित्वा महानादं[5] शूलं शक्राशनिप्रभम्[6] । [१५पू
५] चिक्षेप परमक्रुद्धो[7] लक्ष्मणाय महात्मने[8] ॥३४॥ [N
तच्छूलं वज्रसङ्काशमन्तरिक्षगतं महत् ।
६] द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥३५॥ [१६
ततस्तृतीयं विमलं रुक्मपुंखविभासितम् ।
७] हृदि रामो विराधस्य निचखान शरोत्तमम् ॥३६॥ [N
स रामशरनिर्भिन्नो[9] विसृज्य जनकात्मजाम् ।
८] निपपात[10] गतप्राणो विराधः कालचोदितः ॥३७॥ [N
स भीतो दीनया वाचा सफेनं रुधिरं वमन् ।
९] उवाच रामं संहृष्टः प्राञ्जलिश्चलितेन्द्रियः ॥३८॥ [N
कौसल्या[11] सुप्रजा राम त्वया पुत्रेण तारिता ।
१०] वैदेही च महाभागा लक्ष्मणश्च महायशाः[12] ॥३९॥ [सर्ग४,१५

---

१. म—स शीघ्रमथ । भ—स शीघ्रमपि । च—सुशीघ्रमपि ।
२. भ च—संयम्य ।
३. म—विराटस्य ।
४. भ—बर्हिण० । च—बर्हिणलक्षणाः ।
५. म—महाभागं ।
६. म—चक्राशनिप्रभं । च—शक्रध्वजोपमम् ।
७. भ—परमक्रोधो ।
८. भ च—समाहितः ।
९. भ च—रामेण शरनिर्भिन्नो ।
१०. भ च—पपात स ।
११. भ च—कौशल्या ।
१२. भ च—महारथः ।

विदितो[1]ऽसि मया पूर्वमायानेव नरर्षभ ।
११] युवां कोपयता वीरौ मया सीता हृता प्रभो ॥४०॥ [N
अभिशापादहं घोरात् प्रविष्टो राक्षसीं तनुम् ।
१२] तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन वै ॥४१॥ [१६
प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः । [१७
१३] एष त्वद्यन्तवाङ्शापो[2] भविष्यति महाबल ॥४२॥ [N
यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ।
१४] ततः प्रकृतिमापन्नो भवनं स्वं गमिष्यसि[3] ॥४३॥ [१७उ
N ] अनुपश्रूयमाणं[4] मां क्रुद्धो वै[5] व्याजहार सः ।
१५पू] इति वैश्रवणो राजा रम्भासक्तं शशाप ह ॥४४॥ [१८
१६उ] तव प्रसादान्मुक्तोऽहमभिशापात् सुदारुणात् ।
भवनं स्वं गमिष्यामि स्वस्ति तेऽस्तु महाभुज ॥४५॥ [१९
१७] अध्यर्धयोजने तात महर्षिः सूर्यसन्निभः ।
इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥४६॥ [२०
१८] तं शीघ्रमभिगच्छ त्वं स ते श्रेयोऽभिधास्यति ।
अवटे चापि मे राम प्रक्षेप्तव्यं[6] कलेवरम् ॥४७॥ [२१
१९] रक्षसां गतजीवानामेष[7] धर्मः सनातनः ।
अवटे[8] ये निधीयन्ते तेषां लोकाः सनातनाः ॥४८॥ [२२

---

१. अ म—विधितोसि ।
२. म च—त्वद्यन्तवांछापो ।
३. अ—स्वां भजिष्यसि वै तनुं ।
(अस्मिन्पाठे अतः पूर्व—'मापन्नः, इति विसर्गान्त एव पाठः स्यात्)
४. म च—अनुपस्थीयिमानं ।
५. कै—मां ।
६. म—प्रक्षिप्तव्यं ।
७. म च—गतसत्वानामेष ।
८. रा—अवठे ।

२०] एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ।
बभूव स्वर्गतो भूयस्त्यक्त्वा देहं महीतले ॥४८॥ [२३

२१] तं समुद्यम्य सौमित्रिर्विराधं पर्वतोपमम् ।
गम्भीरमवटं कृत्वा निचखान परन्तपः ॥४९॥ [N

२२] ततो दीनां परिष्वज्य समाश्वास्य च मैथिलीम् ।
उवाच लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ॥५०॥ [सर्ग५, १

२३] कष्टं वनमिदं दुर्गं न चैं स्मैं वनकोविदाः ।
२४उ] अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ॥५१॥ [२

ततश्च तौ लाघवचित्रकार्मुकौ
निहत्य रक्षः प्रतिलभ्य मैथिलीम् ।
विरेजतुर्हर्षयुतौ महावने
२५] दिवि स्थितौ चन्द्रदिवाकराविव ॥५२॥[सर्ग४,३४

इत्यार्षे रामायणे आरण्यकाण्डे विराधवधो
नाम पञ्चमः सर्गः ॥५॥

---

१. अ—गभीरम० । रा—गंभीरमवठं ।
२. भ च—अब्रवील्लक्ष्मणं ।
३. भ च—नचास्म ।
४. भ च—ततस्तु ।
५. भ च—कांचनचित्रकार्मुकौ ।
६. कै रा—आर्षे ।
७. कै रा ल भ म ब—नास्ति ।

हत्वा महाभीमबलं विराधं तं महाजवम् । [१पू
१] आश्रमं शरभङ्गस्य विराजन्तं[1] प्रजग्मतुः ॥१॥ [३पू
तस्य देवप्रभावस्य धर्मे संभावितात्मनः । [३उ
२] समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥२॥ [४पू
विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभम् । [४उ
३] असंस्पृशन्तं वसुधां ददर्श विबुधाधिपम्[2] ॥३॥ [५उ
स्वप्रभाभरणं[3] देवं विरजोऽम्बरधारिणम् ।
४] तद्विधैरेव पुरुषैः पूज्यमानं महात्मभिः[4] ॥४॥ [६
शीघ्रगै र्हरिभि र्युक्तमन्तरिक्षगतं रथम् ।
५] ददर्श पुरतश्चास्य[5] तरुणादित्यसन्निभम्[6] ॥५॥ [७
पाण्डुराभ्रसितं[7] तस्य[8] चन्द्रमण्डलसन्निभम् ।[9]
६] ददर्शावस्थितं[10] छत्रं चित्रमाल्योपशोभितम् ॥६॥ [८

---

१. कै रा अ—विराजन्तौ ।

२. अ—वसुधाधिपम् ।

३. अ—सुप्रभाभरणं ।
भ च—स्वप्रभाभरणैर् ।

४. ला—महर्षिभिः ।

५. ल—पुतरश्चासु ।

६. ल ब भ—गुरुणादि० ।

७. भ—पाण्डुराभ्रनिभं ।

८. अ भ म—चास्य ।

९. च—नास्ति ।

१०. भ च—बभूवावस्थितं ।

चामरव्यजने[1] चास्ये रुक्म[2]दण्डे महाधने ।
७] गृहीते वरनारीभ्यां व्यराजेतां[3] च मूर्धनि ॥७॥ [९
गन्धर्वामरसिद्धाश्च बहवश्चोत्तमर्षयः ।
८] अन्तरिक्षगता देवा वचनैश्च[4] तमस्तुवन् ॥८॥ [१०
९] तमुदीक्ष्य[5] रामस्तु सौमित्रि[6]मिदमब्रवीत् ॥९॥ [११ उ
ये हया[7]ः पुरुहूतस्य पुरा शक्रस्य मे श्रुताः ।
१०] अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥१०॥ [१२
इमे च पुरुषव्याघ्र ये तिष्ठन्त्यभितो रथम् ।
११] पर[8]ःशता[9]ः कुण्डलिनो युवानः खड्गपाणयः ॥११॥ [१४
उरोदेशेषु[10] सर्वेषां[11] निष्का[12] ज्वलनसन्निभाः ।
१२] रूपं बिभ्रति सौमित्रे पञ्चविंशतिवर्षवत् ॥१२॥ [१६
एतद्धि किल देवानां वयो भवति नित्यदा ।
१३] यथेमे पुरुषव्याघ्रा[13] दृश्यन्ते प्रियदर्शनाः ॥१३॥ [१७

---

१. अ च—चामरव्यजनेनास्य ।
२. भ च—चन्द्रमण्डलसन्निभे ।
३. भ च—विधूयेतां ।
४. भ च—वाग्भिरग्र्याभिरीडिरे ।
५. भ च—तमुदीक्ष्याथ ।
६. अ—सौमित्रमि० ।
७. कै—हरयः ।
रा—हयः ?
८. अ—पराः । भ च—परं ।
९. च—शतां ।
१०. कै रा ब—तरोदेशेषु ?
११. भ च—सर्वेषु ।
१२. भ च—सर्वे ।
१३. ल—पुरुषव्याघ्र ।

इहैव[1] सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण ।
१४] यावज्जानाम्यहं व्यक्तं क एष द्युतिमान् रथे ॥१४॥ [१८
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति ।
१५] अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥१५॥ [१९
ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः ।
१६] शरभङ्गमनुज्ञाप्य[2] विबुधानिदमब्रवीत् ॥१६॥ [२०
यामः[3] शीघ्रतरं रामो यावन्मां नाभिभाषते[4] । [२२
१७] कृतार्थमेनं ध्वस्तारिं द्रक्ष्यामि नचिरादिव[5] ॥१७॥ [२३पू
कर्म त्वनेन कर्तव्यं महदन्यैः सुदुष्करम् । [२३उ
१८] निष्ठां नयति[6] यावच्च[7] ततो[8] मां द्रष्टुमर्हति[9] ॥१८॥ [२१उ
इति वज्रभृदामन्त्र्य मानयित्वा च तं मुनिम् ।
१९] रथेन हरियुक्तेन ययौ दिवमरिन्दमः ॥१९॥ [२४
प्रतियाते[10] ततः शक्रे[11] राघवस्तमृषिं तदा ।
२०] अग्निहोत्रमुपासीनं शरभङ्गं ददर्श ह[12] ॥२०॥ [२५
तस्य पादौ स संगृह्य सानुजः सह सीतया ।

---

१. भ च—सहैव ।
२. अ ल भ म ब च—शरभङ्गमनुप्राप्य ।
३. अ—यामं ।
४. अ—नाभ्यभाषत । ब—नाभिभाषसे ।
म—नाभिभाषत ? ।
५. भ च—द्रष्टाहमचिरादिव ।
६. कै अ—निष्टानयाति । रा ल ब म—निष्टाः यति ।
७. कै रा ल अ ब म—यावत्तं ।
८. ल अ ब म—तावन्मां ।
९. म—द्रक्ष्यमर्हति ।
१०. ल ब—प्रतिप्रयाते ।
११. ल ब—तश्चक्रे ?
१२. भ च—शरभङ्गमुपागमत् ।

२१] निषसाद महाप्राज्ञो मुनिना स सं[1]मन्वितः ॥२१॥ [२६
ततः शक्रोपयानं तं पर्यपृच्छत राघवः ।
२२] शरभङ्गश्च तत् सर्वं राघवाय शशंस ह ॥२२॥ [२७
मामेव वरदो राम ब्रह्मलोकं निनीषति ।
२३] जितमुग्रेण तपसा दुष्प्रा[2]पमकृतात्मभिः ॥२३॥ [२८
अहं तु त्वा[3] नरश्रेष्ठ वर्तमानं च दूरतः ।
२४] ब्रह्मलोकं न गच्छामि ह्यनभ्यर्च्य प्रियातिथिम् ॥२४॥ [२९
अक्ष[4]या नरशार्दूल जिता[5] लोकाः श्रुता[6] मया ॥
२५] ब्राह्मं च नाक[7]लोकं च प्रतिगृह्णीष्व राम तम्[8] ॥२५॥ [३१
२७उ] एवमुक्तो महाप्राज्ञः सर्वशास्त्रविशारदः ।
२८पू] ऋषिणा शरभङ्गेण रामो वचनमब्रवीत् ॥२६॥ [३२
२८उ] अहमेवार्जयि[9]ष्यामि स्वयं लोकान् महामुने ।
२९उ] आवासं त्वहमिच्छामि निर्दिष्टमिह[10] कानने ॥२७॥ [३३
राघवेणैवमुक्तस्तु शतक्रतुबलेन वै[11] ।
३०] शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद् वचः ॥२८॥ [३४

---

१. कै—समार्चितः । रा—समर्पितः । भ च—समर्चितः । अ म—समदर्शितः ।
२. भ च—दुष्प्राप्यमकृतात्मभिः ।
३. कै रा अ भ च—त्वां ।
४. भ—सत्कृत्या ।
५. अ—जितलोकाः ।
६. भ च—सतां ।
७. भ च—नाकपृष्ठं ।
८. भ च—तान् ।
९. म—अहमेवाजायिष्यामि ?
१०. अ—निर्दिष्टमिव ।
११. च—नास्ति ।

सुतीक्ष्णमभिगच्छ[1] त्वं राम शीघ्रं तपस्विनम् ।
३१] रमणीये वनोद्देशे स ते वासं विधास्यति ॥२९॥[2] [३६
एष पन्था महाराज मुहूर्तं स्थीयतामिह ।
३२] यावज्जुहोमि गात्राणि जीर्णां त्वचमिवोरगः[3] ॥३०॥ [३८
ततोऽग्निं[4] स समाधार्य हुत्वा चैव समन्ततः[5] ।
३३] शरभङ्गो महाप्राज्ञः प्रविवेश हुताशनम् ॥३१॥ [३९
तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः ।
३४] जीर्णां त्वचं तथाऽस्थीनि यच्च मांसं सशोणितम्[6] ॥३२॥ [४०
स तु पावकसङ्काशः कुमारः समपद्यत ।
३५] उत्थायाग्निचयात् तस्माच्छरभङ्गो व्यरोचत ॥३३॥[7] [४२
स पुण्यकर्मा भवने द्विजर्षभः
पितामहं सानुचरं ददर्श ह ।
पितामहश्चापि निरीक्ष्य तं द्विजं
३७] तपस्विनं स्वागतमित्युवाच ह ॥३४॥ [४४

इत्यार्षे[8] रामायणे[9] आरण्यकाण्डे[10] शरभङ्गदर्शनं[11]
नाम षष्ठः सर्गः[12] ॥ ६ ॥

---

१. ल—सुतीक्ष्णमभ्यगच्छ । अ म—सुतीक्ष्णमुपगच्छ । २. च—नास्ति ।
३. कै रा—त्वचमिवोरगाः । ४. ल—ग्निममादाय ?
ब म—ग्निं स समादाय ।
५. भ च—सुमन्त्रतः । ६. भ च—च शोणितम् ।
७. भ च—अतः परमधिकः पाठः—
स लोकानाहिताग्नीनां ऋषीणां पुण्यकर्मणाम् ।
देवानां चाप्यतिक्रम्य ब्रह्मलोके व्यरोचत ॥
८. कै—आर्षे । ९. रा—श्रीरामायणे ।
१०. कै भ च—नास्ति ।
११. भ च—०दर्शनो ।
१२. कै रा ल भ ब म—नास्ति ।

शरभङ्गे दिवं प्राप्ते मुनिसंघाः[1] समन्ततः ।
१] अभ्यगच्छन्त काकुत्स्थं रामं ज्वलनतेजसम्[2] ॥१॥ [१
वैखानसा वालखिल्याः पृश्नयोऽथ मरीचिपाः[3] । [२पू
N ] मुनयः सलिलाहारा वायुभक्षास्तथैव च ॥२॥ [ N
२] अश्मकुट्टा दशतपाः पत्राहाराश्च तापसाः । [२उ
दन्तोलूखलिनश्चैव दण्डकारण्यवासिनः[4] ॥३॥ [३पू
३] ऋषयो[5] हि महात्मानो ज्वलनार्कसमप्रभाः ।[6]
आकाशनिलयाश्चैवं तथा स्थण्डिलशायिनः[7] ॥४॥ [४
४] तथोर्द्ववसना[8] दान्ताः तथैवावस्त्रधारिणः[9] ।
सजपाश्च महात्मानस्तथा पञ्चतपा[10] द्विजाः ॥५॥ [५
५] चतुर्मासकृताहारा[11] निराहारास्तथैव च ।

---

१. ल भ—मुनिसंगाः ।
२. भ च—ज्वलिततेजसम् ।
३. च—मरीचिणः ।
४. ब—नास्ति ।
५. ल अ म—ऋषयश्च ।
६. ब—नास्ति ।
७. म—स्थंडिलय० ।
८. ल अ ब म—तथोद्‌वसनाश्चैव ।
भ—यथोद्‌वसनायस्तास् ।
च—तथोद्‌वसनायस्तास् ।
९. अ म—तथैव वस्त्रधारिणः ।
१०. ल अ ब म—पंचतपस्विनः ।
११. भ—चातुर्मास्यकृताहारा ।
च—चातुर्मास्या कृताहारा ।

वृक्षसक्ताग्रपादाश्चै[1] ये चरन्ति महत् तपः ॥६॥ [N
६] अदर्शनेन ये धर्मं चरन्ति नियतव्रताः ।
N] एकाङ्गुष्ठेन तिष्ठन्ति ये च भूताविहिंसकाः[2] ॥७॥ [N
शष्पभक्षाः पयोभक्षा निर्दिष्टफल[3]भोजिनः ।
N] फलाहारे च निर[4]रता वायुभक्षास्तथापरे ॥८॥ [N
७३] एते चान्ये च धर्मज्ञा मुनयो धर्मवत्सलाः[5] ।
शरभङ्गाश्रमे राममभिजग्मुः समाहिताः[6] ॥[7]९॥ [६
८] अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् ।[8]
ऊचुः प्राञ्जलयः सर्वे सान्त्वपूर्वमिदं वचः ॥१०॥ [७
९] त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथः ।
प्रधानश्चर्षिनाथश्च देवानामिव वासवः ॥११॥ [८
१०] विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ।
पितृभक्त[9]श्च नगरे नागराणां[10] मनोरमः[12] ॥१२॥ [९
त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् ।

---

१. च—वृक्षासक्ताग्र० ।

२. ल—भूताः विहिंसकाः । भ च—भूतेष्वहिंसकाः ।

३. ल ब—निर्वृष्टफल० ।

४ ल अ—विनिरता ।

५. च—रामं सत्यपराक्रमम् ।

६. भ—समागताः ।

७. च—नास्ति ।

८. च—नास्ति ।

९. भ च—पितृभक्त्या ।

१०. रा—नराणां च ।

१२. भ च—मनोहरः ।

N ] अर्चित्वा यच्च[१] वक्ष्यामस्तन्नस्त्वं[२] कर्तुमर्हसि ॥१३॥ [२०

११३] अधर्मो हि महांस्तस्य भवेदिह महीपतेः[३] ।
यो हरेद् बलिषड्भागं न च रक्षेत पुत्रवत् ॥१४॥ [११

१२] यो राजा स्वानिव [४]प्राणानिष्टांल्लोकान् सुतानिव ।
नित्ययुक्तः सदा रक्षेत् सर्वान् विषयवासिनः ॥१५॥ [१२

N ] प्राप्नोति शाश्वतीं राम कीर्तिं त्रैलोक्यपावनीम्[५] ।
ब्रह्मस्थानं समासाद्य तत्र चापि महीयते ॥१६॥ [१३

N ] यः करोति परं धर्मं मुनिर्मूलफलाशनः ।
तस्माद् राज्ञस्तु षड्भागः [६]प्रजा धर्मेण रक्षतः ॥१७॥ [१४

१६] सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ।
त्वन्नाथोऽनाथवद् राम राक्षसैर्हन्यते[७] सदा ॥१८॥ [१५

१७] पश्य राम शरीराणि मुनीनां भावितात्मनाम् ।
हतानां राक्षसैर्घोरैर्गतानां वसुधातले ॥१९॥[८] [१६

१८] पम्पातीरे निवसतामनुमन्दाकिनीमितः[९] ।[८]
चित्रकूटालयानां च क्रियते कदनं महत् ॥२०॥ [१७

१९] तथैव[१०] तत्र मृष्यन्ते[११] विप्रकारं तपस्विनाम् ।
क्रियमाणं वने घोरे राक्षसैः क्रूरकर्मभिः ॥२१॥ [१८

---

१. भ च—तव ।
२. भ च—स्त्वं च नः ।
३. भ च—महीपते ।
४. भ च—प्राणैरिष्टां०
५. भ च—त्रैलोक्यभाविनीं ॥
६. भ च—प्रजां ।
७. भ च—०र्वध्यते ।
८. च—नास्ति ।
९. अ—० मन्दाकिनीसिता: ?
१०. कै रा ळ भ च—तवैव ।
भ च—न चैव ।
११. भ च—मृश्यन्ते ।

२०] ततः स्म शरणार्थं[1] त्वां शरण्यं वयमागताः ।
२१पू] परिपालय नो राम सर्वानेव धनुर्धर ॥२२॥ [१९
रामस्तेषां वचः श्रुत्वा तापसानां यशस्विनाम्[2] ।
२२] इदं प्रोवाच धर्मात्मा सर्वानेव कृताञ्जलिः ॥२३॥ [२१
नैवमर्हथ मां वक्तुमहमेव सलक्ष्मणः ।
२३] तपोवृद्धान् वयोवृद्धान्[3] शरण्याञ्[4]शरणागतैः[5] ॥२४॥ [२२
इदं च दण्डकारण्यं नानासत्त्वनिषेवितम् ।
२४] भवतामर्थसिद्ध्यर्थमागतोऽहं सलक्ष्मणः ॥२५॥ [२३
तस्य मेऽद्य वने वासो भविष्यति तपस्यतः[6] । [२४
२५] संरक्षतो[7] मुनिगणान् निघ्नतो[8] राक्षसान् युधि ॥२६॥ [N

वरं प्रदायाथ स तापसाना-
मिक्ष्वाकुवंशप्रभवो महात्मा ।
महर्षिभिस्तैः सहितस्तु[9] राम-
२६] स्ततः सुतीक्ष्णाश्रममाजगाम ॥२७॥ [२६

इत्यार्षे[10] रामायणे[11] आरण्यकाण्डे[12] अभयप्रदानिको नाम सप्तमः[13] सर्गः ॥ ७ ॥

---

१. भ—रक्षणार्थं ।
२. भ च—तपस्विनाम् ।
३. म—वयोवृद्धाः ।
४. भ च—शरण्यान् ।
५. अ—शरणागतान् ।
६. भ च—तपस्विनः ।
७. कै—संरक्षितो ।
८. च—विघ्नतो ।
९. भ—सहितैस्तु ।
१०. कै—आर्षे ।
११. रा—श्रीरामायणे ।
१२. भ च—नास्ति ।
१३. कै रा ल भ ब म च—नास्ति ।

स[1] राघवः सह भ्रात्रा वैदेह्या च परन्तपः ।
१] सुतीक्ष्णस्याश्रमपदं जगाम सहितो द्विजैः[2] ॥१॥ [१
तौ गत्वा दूरमध्वानं नदीं तीर्त्वा महाबलौ ।
२] महद् ददृशतुर्नीलं गिरिमाश्रित्य काननम् ॥२॥ [२
ततस्तदिक्ष्वाकु[3]वृषौ सततं विविधैर्द्रुमैः ।
३] काननं तौ[4] विविशतुस्तौ सीताऽनुगतौ तदा ॥३॥ [३
प्रविश्य च वनं घोरं बहुपुष्पफलद्रुमम् ।
४] आश्रमं तौ ददृशतुश्चीरमालापरिष्कृतम् ॥४॥ [४
तत्रतापसमासीनं महात्[5]मानं जटा[6]धरम् ।
५] रामः सुतीक्ष्णं विधिवत् तपोवृद्धमपूजयत् ॥५॥ [५
रामोऽहमस्मि भगवंस्त्वां दिदृक्षुरिहागतः ।
६] त्वामभि[7]वन्दे धर्मज्ञ महर्षे सत्यविक्रम ॥६॥ [६
स निरीक्ष्य ततो वीरं[8] रामं दशरथात्मजम् ।
७] उपाजिघ्र[9]त्ततो मूर्ध्नि वचनं चेदमब्रवीत् ॥७॥ [७

---

१. अ—राघवः सह वै भ्रात्रा ।
ब म—राघवः सह भ्रात्रा वै ।
२. भ च—सह तै द्विजैः ।
३. भ—॰तमिक्ष्वाकु॰ । च—॰स्वामि ?
४. भ—तद्विविश॰ ।
५. म—तु ।
६. भ च—मलपंकजटाधरम् ।
७. भ च—तं माऽभिवद ।
८. ल अ ब म—वीरो ।
९. कै रा ल अ ब म—उपाजिघ्रंस्ततो ।

स्वागतं ते महाबाहो राम शस्त्रभृतां वर ।
८] चित्रकूटमुपारूढो राज्याद् भ्रष्टः श्रुतोऽसि मे[1] ॥६॥ [८
प्रतीक्षमाणस्त्वामेव नारोहामि नृपोत्तम ।[2]
९] देवलोकमितो वीर त्यक्त्वा देहं महीतले ॥८॥ [९
इहोपस्थाय काकुत्स्थ देवराजः शतक्रतुः ।
N] सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा ॥१०॥ [११
तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ।
N] मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥११॥ [१२
तमुग्रतपसं रामो महर्षिं सत्यवादिनम् ।
N] प्रत्युवाच महात्मानं ब्रह्माणमिव वासवः ॥१२॥ [१३
अहो प्राप्तं महच्छ्रेयो यद् दृष्टो भगवानिह ।
N] तथा समाख्याहि च मे वसेयं यत्र धार्मिकः ॥१३॥ [N
कुशलो भगवानत्र सर्वभूतहिते रतः ।
N] आख्यातः शरभंगेन गौतमेन महात्मना ॥१४॥ [N
अहमेवार्जयिष्यामि स्वर्गलोकान् महामुने ।
N] आवासं त्वहमिच्छामि व्यादिष्टमिह कानने ॥१५॥ [१४
एवमुक्तस्तु रामेण महर्षिर्लोकपूजितः ।

---

१. म—ते । २. अ—अतः परम्—
देवलोकमितो वीर नारोहामि नृपोत्तम । इत्यधिकः पाठः ।
३. क अ म—देवलोक० ।
४. के रा ळ अ ब म—देवराजं शतक्रतुम् ।
५. ब—सर्वं लोका ।
६. के रा ळ ब म—जिता चाहं । अ—जितांश्चाहं ।
७. ब—मत्प्रसादात् । ८. ब—महर्षिः ।
९. अ ब—मया श्रयो ।
१०. अ ब—स्वयं लोकान्म० । म—स्वर्गलो० ?

७] दानशीलैस्तपोदान्तैर्विधूमैरिव पावकैः ॥७॥ [७
८पू] अविषह्यांशुरादित्यो यावन्नासौ प्रवर्तते ।
N] अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥८॥ [८
८उ] तावदिच्छामहे गन्तुमनुज्ञां देहि नः प्रभो ।
९] ववन्दाते तदा वीरौ राघवौ सह सीतया ॥९॥ [९
तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः ।
१०] संश्लिष्य गात्रैर्गात्राणि ततो वचनमब्रवीत् ॥१०॥ [१०
अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह ।
११] सीतया चानया सार्धं छाययेव सुवृत्तया ॥११॥ [११
पश्याश्रमपदं दिव्यं दण्डकारण्यवासिनाम् ।
१२] तेषां तपस्विनां तात तपसा भावितात्मनाम् ॥१२॥ [१२

---

१. भ च—धर्मशीलै० ।
२. रा अ—अविषह्यां पुरा० ल ब—०षह्यं पुरा० ।
म—अविषह्यां सुरादित्यो ।
३. अ च—आमा० ।
४. कै—०वा पथिवर्तिनः । रा—प्राप्ये चैव वर्तिनः ।
ल म व—प्राप्येव···वर्तिनः । अ—०वावशवर्तिनः ।
५. भ च—गन्तुं प्रत्युवाच मुनिस्तदा ।
६. ल—णावक्काप्य । म—०णावुक्कापि ।
७. ला—तौ वंदाते तथा श्रुत्वा मुनिना भाषितं वचः ।
उत्थाप्य मुनिस्तौ संश्लिष्य वचनं तमुवाच ह ॥
८. कै—अनिष्टं ।
९. कै रा ब अ म ब—मम० । ला—सीतया लक्ष्मणेन च ।
१०. ल ब—भूय एव ।
११. ला—नास्ति ।
१२. रा—पश्या० । ला—०श्रमाणि दिव्यानि ।
१३. रा—तत्र ।

तं प्राप्य फलमूलानि पुष्पितानि वनानि च ।
१३] प्रशान्तमृगयूथानि शान्तपक्षिगणानि च ॥१३॥ [१३
N] फलमूलावनम्राणि वृक्षाणि विविधानि च । [N
फुल्लपङ्कजषण्डानि पुष्पितानि वनानि च ॥ १४॥ [१४पू
१४] कारण्डवविकीर्णानि तडागानि सरांसि च । [१४उ
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
१५] रमणीयान्यरण्यानि मयूराभिरुतानि च ॥१५॥ [१५
गम्यतां वत्स सौमित्र भगवाँनपि गच्छतु ।
१६] आगन्तव्यं च नो द्रष्टुं पुनराश्रममण्डलम् ॥१६॥ [१६
एवमुक्तस्तथेत्याह राघवो लक्ष्मणान्वितः ।
१७] प्रदक्षिणं मुनिं कृत्वा गमनायोपचक्रमे ॥१७॥ [१७
ततः शुभावुभौ तूणौ धनुषी चाक्षयैः शरैः ।
१८] सीता ददौ तयोर्भ्रात्रोः खड्गौ च विमलौ शुभौ ॥१८॥ [१८

---

१. अ—०खंडानि ।

२. च ला—नास्ति ।

३. ल ब—सङ्काकानि ।

४. ला—नास्ति ।

५. भ च—०प्रस्रवणानि ।

६. ल ब च—०याण्यरण्यानि ।

७. भ—भवानपि च ।

८. भ च—वनं ।

९. ला—तथेत्युक्त्वा प्रणम्याथ गमनायोपचक्रमे ।

१०. च—ततस्तु तावुभौ ।

११. रा—च क्षयैः ।

१२. भ ब च—ददौ सीता ।

१३. भ च—षड्गौ ।

ववन्द[1]तुस्ततस्तौ तु तत्सर्वं सुसमा[2]हितौ ।[3] [N

N] ततो निर्ययतु[4]र्वीरौ तावुभौ रामलक्ष्मणौ ॥१९॥ [१९३

प्रस्थितौ धृतचा[5]पौ तु तौ निशम्यार्थं[6] जानकी । [N

हृदयङ्ग[7]मया वाचा भर्तारमिदमब्रवीत् । [N

N] प्रणामपूर्वं वाक्यज्ञा समाहितमनोगतिः ॥२०॥

इत्यार्षे रामायणे आरण्य[8]काण्डे सुतीक्ष्णाश्र[9]मनिवासो

नाम नवमः[10] सर्गः ॥९॥

---

१. भ—बबन्धतुः । च—ववंदाते त० ।

२. कै रा ल अ म ब—तु समा० ।

३. ला—नास्ति ।

४. कै रा ल अ म—निर्याय० ।

५. कै रा ल म—धूतचापौ । ब—धूतपायौ ।

६. भ च—निशाम्याथ ।

७. कै रा अ म—०यांगमया ।

८. भ च—नास्ति ।

९. भ च—दण्डकारण्यवासो ।

१०. क रा ल भ म ब च—नास्ति ।

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
१] उवाच मैथिली रामं वाक्यं वाक्यविशारदा ॥१॥[1][2] [१
N] अयं धर्मः सुतीक्ष्णेन प्राप्यते विधिना महान्[3][4][5] । [२पू
३उ] त्रीण्येव व्यसनान्यस्य कामजानि भवन्ति हि[6] ॥२॥ [३उ
मिथ्यावाक्यं परतरं तस्माद् गुरुतरं त्विह[7] ।
४] परदाराभिगमनं प्राणिद्रोहश्च रौद्रता ॥३॥ [३उ
तच्च शक्यं महाबाहो प्राज्ञैर्वोढुं[8] जितेन्द्रियैः ।
५] तव वश्येन्द्रियत्वाच्च जानामि शुभदर्शन[9] ॥४॥ [N
मिथ्यावाक्यं न ते भूतं[10] न भविष्यति च प्रभो ।
६] कुलेऽप्यसम्मतं स्त्रीणां परेषां धर्मदूषणम्[11] ॥५॥ [४

---

१. रा च—विशारद ।

२. ला—नास्ति ।

३. च—अयं ।

४. भ च—धर्मं ।

५. भ च—महद् ।

६. भ च—तु ।

७. के—०तरं त्विदम् । रा ल अ म व—०तरादिदम् । भ—०तमं त्विह ।

८. अ म ला—प्राज्ञो वोढुं । भ—प्राज्ञैर्वोढुं । च—प्राज्ञै वोढुं ।

९. के रा ल म व ला—०दर्शनम् ।

१०. के रा ल—शक्यं ।

११. अ म ला—नास्ति ।

तृतीयं यदिदं रौद्रं परप्राणविहिंसनम् ।

७] निर्वैरं क्रियते मोहात् तव चेदमुपस्थितम् ॥६॥ [९

८उ] प्रतिज्ञातं [तः?] त्वया वीर दण्डकारण्यवासिनम् ।

मुनीनां रक्षणार्थाय वधः सदसि रक्षसाम् ॥७॥ [१०

९] एतन्निमित्तं विजने दण्डकेऽध्युषितं पुरा ।

प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥८॥ [११

१०] ततस्त्वां प्रस्थितं ज्ञात्वा मम चिन्ताऽऽकुलं मनः ।

स्वद्वृत्तं चिन्तयन्त्याश्च तव निःश्रेयसं परम् ॥९॥ [१२

११] न रोचते मे गमनं दण्डकानां महामते ।

कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥१०॥ [१३

१२] त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनेचरः ।

दृष्ट्वा वनचरान् कांश्चित् ततः कुर्याः शरक्षयम् ॥११॥ [१४

१३] क्षत्रियाणामिह धनुर्हुताशस्येन्धनानि च ।

१४पू] तत्समीपे स्थितं तेजो बलं मूर्च्छयते शुभम् ॥१२॥ [१५

१५उ] पुरा किल महाबाहो तपस्वी सत्यवाक् शुचिः ।

---

१. ल ब—परप्राणि० ।

२. कै अ म ब च—विजनं । रा—व्यजनं ल—विजिनं ।

३. कै रा ल अ म ब—दण्डकाध्युषितं ।

४. अ—त्वया ।

५. ल अ म ब—नास्ति ।

६. च—चिंतयत्याश्च ।

७. भ म ब च—वदंत्या ।

८. ला—परंतप ।

९. भ च—तत्समीपं ।

१०. ल ब—हुतं ।

११. च—सत्यवां ।

कस्मिंश्चिदभवत् पुण्ये वने बहुमृगद्विजे ॥१३॥ [१६
१६] तस्य[1] केनचिदाहृत्य निशितः खड्ग उत्तमः[2] ।[3]
संन्यासविधिना दत्तः पुण्ये तपसि वर्तता[4] ॥[5]१४॥ [१८
१७] स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ।
वने विहरते[6] नित्यं रक्षन् प्रत्ययमात्मनः ॥१५॥ [१९
१८] यत्र गच्छत्युपादातुं मूलानि[7] च फलानि च ।
न विना याति तं खड्गं रक्षन् प्रत्ययमात्मनः[8] ॥१६॥ [२०
१९] नित्यं शस्त्रं परिवहन् क्रमेण स तपोधनः ।[9]
चकार रौद्रां[10] स्वां[11] बुद्धिं त्यक्त्वा तपसि[12] निश्चयम् ॥१७॥ [२१
२०] ततः स धर्माभिमतः[13] प्रमत्तो धर्मकोविदः ।[14]
तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥१८॥ [२२
२१] स्नेहाच्च बहुमानाच्च स्मारये न च शिक्षये । [२४उ
न कथञ्चिदसत्कार्यं गृहीतधनुषा त्वया ॥१९॥ [२५पू

---

१. ल अ म ब—तेन ।
२. कै रा ल अ म ब—समणः ।
३. भ च—प्रासं वसतस्तस्य रक्षयन् स ल मानवान् ।
४. कै रा अ भ म —वर्ततः ।
५. ला—नास्ति ।
६. कै रा ल अ भ म—विहृतो ।
७. ल—तत्रानि ।
८. भ च—न्यासं परस्य तत् ।
९. म—नास्ति ।
१०. च—रौद्रिं ।
११. कै रा ल अ म ब—तां ।
१२. च—तपसि ।
१३. कै रा—॰भिसृतः । भ च—रौद्राभिमतिः ।
१४. ला—नास्ति ।

२२] न युक्तास्ते त्वया हन्तुं राक्षसा दण्डके[1] स्थिताः ।
अपराधं विना वीर स्वर्लोकं[2] परिमार्गता ॥२०॥ [२५ उ
२३] क्षत्रियाणां तु[3] सर्वेषां वनेषु निरतात्मनाम्[4] ।
धनुषा[5] कार्यमेतावदार्तानां परिरक्षणम् ॥२१॥ [२६
२४] क्व च शस्त्रं क्व च वनं क्व च क्षात्रं[6] तपः क्व च[7] ।
व्याविद्धमिदमस्माभिरेष धर्मस्तु पूज्यताम्[8] ॥२२॥ [२७
२५] अनार्या[9] कलुषा बुद्धिर्जायते शस्त्रसेवनात् ।
पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥२३॥ [२८
२६] अक्षया[10] तु भवेत् प्रीतिः श्वश्रूश्वशुरयोर्मम[11] ।[12]
२७उ] यदि राज्येऽपि संत्यक्ते भवेस्त्वं[13] निरतो[14] मुनिः ॥२४॥[२९
धर्मादर्थः प्रभवते धर्मात् प्रभवते सुखम् ।
२८] धर्मेण लभते स्वर्गं धर्मसारमिदं जगत् ॥२५॥ [३०

---

१. कै रा अ म ला—दण्डकास्थिताः । ल ब—०कास्थिताः ।
२. च—स्वर्लोकं ।
३. म च—च ।
४. भ च—नियतात्म ।
५. भ च—धनुषां ।
६. भ च—क्षत्रं ।
७. भ च— क्व वा तपः ।
८. रा—पूजिताम् ।
९. कै रा ल अ म—अनार्यं ।
१०. कै रा अ म—अकृपा ।
११. भ च—शस्त्राणामिति भावये ।
१२. ला—नास्ति ।
१३. च—भव त्वं ।
१४. ल—विरतो ।

आत्मानं नियमै[1]ः सर्वैः कर्षयित्वा[2] प्रयत्नतः[8] ।
२९] प्राप्यते निपुणो[3] धर्मो न सुखाल्लभते[4] सुखम् ॥२६॥ [३१
नित्यं शुचितपाः सौम्य भज[5] धर्मं[6] तपोधन ।
३०] सर्वं हि विदितं लोके तव[9] राघव तत्त्वतः ॥[7]२७॥ [३२
स्त्रीचापलादेतदुदाहृतं मे
धर्मं हि वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन
३१] यद् रोचते ते[10] कुरु तन्नरेन्द्र[11] ॥२८॥ [३३

इत्यार्षे रामायणे आरण्य[12]काण्डे सीतावाक्यं
नाम दशमः[13] सर्गः ॥१०॥

---

१. के रा अ म — नियतैः ।
२. च — कर्शयित्वा ।
३. रा — निपुणं ।
४. भ — लभ्यते ।
५. के रा भ — भव । ल अ म — भवे । ब — भवेः ।
६. के रा ल अ म ब — धर्मे । भ — धर्मी ।
७. के रा ल अ म ब — न च ।
८. भ च — यत्नतः ।
९. ला — नास्ति ।
१०. भ च — तव ।
११. भ च — वै नरेन्द्र ।
१२. भ — दण्डकारण्यनिवासे । च — दंडकारण्यं ।
१३. के रा ल भ म व च — नास्ति ।

वाक्यमेतत् तु वैदेह्या व्याहृतं भर्तृभक्तया ।
१] धर्मयुक्तं निशम्याथ रामः सीतामुवाच ह ॥१॥ [१
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
२] कुलं व्यपदिशन्त्या च धर्मज्ञं[1] मिथिलेश्वरम्[2] ॥२॥ [२
किं तु[3] वक्ष्याम्यहं सीते त्वयैवोक्तमिति प्रिये ।
३] क्षत्रियैर्धार्यते चापं[4] नार्तशब्दो[5] भवेदिति ॥३॥ [३
ते चार्ता[6] दण्डकारण्ये मुनयः संशितव्रताः[7] ।
४] मां सीते स्वयमागम्य[8] शरण्याः शरणं गताः ॥४॥ [४
वसन्तो धर्मनिरता वने मूलफलाशनाः ।[9]
५७] न लभन्ते सुखं निद्रां राक्षसैः क्रूरकर्मभिः ॥५॥ [५
सर्वकालं च[10] नियता नियमैर्विविधैर्वने[11] ।[12]

---

१. अ—धर्मज्ञे ।
२. अ—मिथिलेश्वरि । भ—० लेश्वर । च मैथि० ।
३. च—च ।
४. ल—चापो । ब—चापे ।
५. भ च—मार्त० ।
६. ला—चापि ।
७ च—संसिव्रता ।
८. ल अ म ब—० मागस्य ।
९. कै रा ल अ म ब —नास्ति ।
१०. भ च—हि ।
११. कै रा ल अ म ब—० विविधैर्वनैः ।
१२. ला—नास्ति ।

६] भक्ष्यन्ते राक्षसैर्घोरैर्[1]नरैरक्तामिषाशिभिः ॥६॥ [६
ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
७] अस्मानभ्यवपद्यैवं[2] मामूचुर्द्विजपुङ्गवाः[3] ॥७॥ [७
मया तु वचनं श्रुत्वा तेषामेव मुखोद्गतम् ।
८] उक्तमेतद् वचस्तेषु तन्मे शृणु वरानने ॥८॥[4] [८
प्रसीदन्तु भवन्तो मे पीडा[5] चैवातुला मम ॥९॥[6] [९पू
९] यदीदृशैरहं विप्रैः[7] कर्मस्थैर्यैरुपस्थितः ।
किं करोमीति च मया व्याहृतं जनसंसदि[8] ॥१०॥ [९उ
१०] सर्वैरथ समागम्य वागियं समुदीरिता ॥११॥ [१०
राक्षसैर्दण्डकारण्ये बहुभिः कामरूपिभिः[9] ।
११] अर्दिताः स्मो भृशं राम तेभ्यो रक्षस्व राघव ॥[10] १२॥ [११
होमकाले[11] च संप्राप्ते पर्वकाले च ते सदा ।
१२] धर्षयन्ति सुदुर्धर्षा राक्षसाः पिशिताशनाः[12] ॥१३॥[13] [१२

---

१. ल व—०र्घोरैः क्रूररक्ता० ।
२. ल व—०द्यैवं । ला—तेस्मानभ्यवपद्यैव ।
३. अ ल—०र्मुनि० ।
४. भ च—अतः परमधिकः पाठः—
संप्राप्तास्त्वां वयं राम पीडिताः शरणार्थिनः ।
५. भ च—प्रीतिः ।
६. भ च—नास्ति ।
७. भ च—विप्रैरुपस्थयैरुप० ।
८. भ—जनसंपदि ।
९. ला—पी ॥ता स्मो मृशाबक ।
१०. ला—रामं रक्षस्व तेभ्यो वै त्वं शूरो राजपुंगवः ।
११. रा—हंसकाले ।
१२. कै रा अ म—०ताशिनः ।
१३. ला—नास्ति ।

राक्षसैर्भक्षितानां च तापसानां महात्मनाम् ।
१३] गतिं मृगयमाणानां भवान् नः परमा गतिः ॥१४॥[1] [१३
कामं तपःप्रसादेन शप्तुं[2] शक्ता निशाचरान् ।
१४] चिरार्जितं तु नेच्छामस्तपः खण्डयितुं वयम् ॥१५॥ [१४
बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव ।
१५] तेन शापं न मुञ्चामो भक्ष्यमाणा निशाचरैः ॥१६॥ [१५
तानर्द्यमानान् रक्षोभिर्दण्डकारण्यवासिनः[3] ।
१६] रक्ष त्वं सहितो भ्रात्रा अनाथा हि वने वयम् ॥१७॥[4] [१६
मया तु तद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम् ।
१७] ऋषीणां दण्डकारण्ये संश्रुतं लोकसाक्षिकम् ॥१८॥ [१७
स संश्रुत्य न शक्ष्यामि[5] दण्डकारण्यवासिनाम्[6] ।
१८] मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे[7] सदा ॥[8] १९॥ [१८
अप्यहं जीवितं जह्यां त्वां[9] वा सीते सलक्ष्मणाम्[10] ।

---

१. भ च—अतः परमधिकः पाठः—
कामं तपःप्रसादेन भवान्नः परमागतिः ।
२. भ च—शक्ताः शप्तुं ।
३. कै रा ल अ म व—०वासिभिः ।
४. च—तानर्द्यमानान् रक्षोभिर्दण्डकारण्ये संश्रुतं लोकसाक्षिकम् । मध्ये त्रुटितः पाठः ।
५. कै रा—रक्ष्यामि । ल अ—रक्षामि । व म—रक्षामि । च—शक्ष्यामि ।
६. रा भ—० सिनम् ।
७. च—ते ।
८. ला—०ताशिनः । ?
९. रा अ—स्वं ।
१०. कै रा ल अ म—०लक्ष्मणम् ।

१९] न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः ॥२०॥ [१९

अवश्यं तु मया कार्यमृषीणां परिपालनम् ।

२०] अनुक्तेनैव वैदेहि प्रतिज्ञायैवं किं[2] पुनः ॥२१॥ [२०

मम स्नेहेन प्रीत्या च यदुक्तं च त्वया वचः ।

२३] परितुष्टोऽस्मि वैदेहि निषेद्धुं न[3] त्वया[4] क्षमः ॥२२॥ [२१

इत्येवमुक्त्वा वचनं महात्मा

सीतां प्रियां राजवरस्य पुत्रीम् ।

रामो धनुष्मान् सह लक्ष्मणेन

२४] जगाम पुण्यानि तपोवनानि ॥२३॥ [२३

इत्यार्षे रामायणे आरण्य[5]काण्डे रामवाक्यं

नाम एका[6]दशः सर्गः ॥११॥

---

१. भ—० ज्ञाय च ।

२. ल ब—वै ।

३. अ—च ।

४. अ—न तु

५. भ—वृंदकारण्ये ।

६. के रा ल भ ब च—नास्ति ।

अग्रतस्तु ययौ रामः सीता मध्ये सुमध्यमा ।
१] पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणः प्रजगाम ह ॥१॥ [१
संप्रेक्ष्यमाणान्[1] विविधान् शैलान्[2] प्रस्रवणानि च ।
२] नदीश्च रम्याँ विविधाँः[3] प्रययुः सहिताः सुखम् ॥२॥ [२
सारसांश्चक्रवाकांश्च पश्यन्तः[4] पुलिनाश्रितान्[5] ।
३] सरांसि च विचित्राणि युतानि[6] जलजैः खगैः ॥३॥ [३
बद्धयूथांश्च हरिणान् मदोन्मत्तान्[7] विषाणिनः ।
४] महिषांश्च वराहांश्च तथाऽन्यांश्च[8] महामृगान् ॥४॥ [४
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
५] ददृशुः[9] सर्वतो रम्यं तटाकं[10] योजनायतम् ॥५॥ [५
फुल्लपुष्करसंच्छन्नं[11] गजयूथैरलङ्कृतम् ।

---

१. भ च—ते प्रेक्ष्यमाणा ।
२. भ च—शैलप्रस्रव० । म—शैलाद्रिप्रस्र० ।
३. भ च—विविधाः रम्याः ।
४. च—पतंतः ।
५. ल ब—पुलिनस्थितान् ।
६. ल—मां युतैर्जल० ? ब—संयुतैर्जल० ।
७. कै अ म—मदोद्वृतान् ।
रा ल ब—मदोद्धतान् ।
८. ल—तथा चान्यान् ।
९. कै रा ल अ म ब—ददृशे ।
१०. रा—तडागं । ल ब—तडाकं ।
११. कै रा ल म ब—फुल्लपु० ।

६] कुररैर्हंसचक्रैश्च संकुलं जलचारिभिः ॥६॥ [६
प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे ।
७] गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ॥७॥ [७
ततः कौतूहलाद् रामो लक्ष्मणश्च महाबलः ।
८] मुनिं धर्मरतिं वीरः प्रष्टुं समुपचक्रमे ॥८॥ [८
इदमत्यद्भुतं दृष्ट्वा सर्वेषां नो महाद्युते ।
९] कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥९॥ [९
तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्ततः ।
१०] प्रभावं सरसस्तस्य वक्तुं समुपचक्रमे ॥१०॥ [१०
इदं पञ्चाप्सरो नाम तडागं पौर्वकालिकम् ।
११] निर्मितं तपसा राम मुनिना मद्कर्णिना ॥११॥ [१२
स हि तेपे तपस्तीव्रं मद्कर्णिर्महामुनिः ।
१२] दशवर्षसहस्राणि वायुभक्षः शिलाशयः ॥१२॥ [१३

१. कै ल म ब—संजु वंजुलचारिभिः ।
रा—संजवं जलचारिभिः । अ—संजुवंजुलचारिभिः ।
२. कै रा अ म—प्रसन्नसलिले ।
३. ला—नास्ति ।
४. ला—मुनिं पप्रच्छ धर्मवित् ।
५. कै रा ल अ ब—सर्व एव ।
६. कै रा ल अ ब—मम कौतूहलाज्जातं ।
७. म—नास्ति ।     ८. कै रा—राघवेन ।
९. कै ल अ ब म—पंपाप्सरो । रा—रम्यारसो ।
१०. ल ब—तडाकं ।
११. कै रा ल म च—०पूर्वका० ।
१२. म च—मन्दकर्णिना ।
१३. म च—मन्द० ।
१४ कै रा—०भक्षः ।
१५. अ—शिलाशयः ।

ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः ।
अब्रुवन् वचनं ते वै परस्परसमागमे[2] ।
१३] अस्माकं कस्यचित् स्थानमेषं प्रार्थयते द्विजः ॥[3]१३॥ [१४
अप्सरोभिस्ततस्ताभिर्मुनिर्दिष्टपरावरैः[4] ।
N] नीतो[5] मदनवश्यत्वं[6] सुराणामर्थसिद्धये ॥१४॥ [१७
तत[7]ः कर्तुं तपोविघ्नं देवैः सर्वैर्नियोजिताः । [१६पू
१४] प्रधानाप्सरसः पञ्च मुनिपत्नीत्वमागताः ॥१५॥ [१८पू
१७उ] तडागे निर्मितं तासामस्मिन्नन्तर्हितं गृहम्[9] । [१८उ
तत्र[10] चाप्सरसः पञ्च निवसन्ति यथासुखम् ॥
१८] रमयन्ति च तं[11] योगान्मुनिं यौवनमागतम् ॥१६॥ [१९
तासां प्रक्रीडमानानामेष वादित्रनिःस्वनः ।

---

१. भ च—०समागताः । २. च—०मयं ।
३. अतः परमाधिकः पाठः—
भ—ततः कर्तुं तपोविघ्नं देवैः सर्वैर्नियोजिताः ।
प्रधानाप्सरसः पंच मुनिपत्नित्वमागताः ॥
च—तस्य कर्तुं तपोविघ्नं नियुक्ताः सर्व्वदैवतैः ।
दिव्या अप्सरसः पंच दिव्याभरणभूषिताः ॥
अहागता गायमाना अलंकृत्य सुमध्यमाः ।
तं लोभयन्त्यो ललना मुनिं तीव्रतपोनिधिं ॥
४. रा—०र्मुनिर्सृष्ट० । कै ल ब म—०परापरः ।
च—०ष्टस्तपोनिधिः ।
५. कै रा—नीतं ।
६. च—मदेन० ।
७. रा—तथा ।
८. म—त्रुटितः पाठः ।
९. ल ब—०र्गेहं । अ—०गृहं ।
१०. म—त्रुटितः पाठः ।
११. भ—तपो । च—ततो ।

१९] श्रूयते भूषणोन्मिश्रः[1] शब्दः श्रोत्रमनोहरः ॥१७॥ [२०
आश्चर्यमेतद्वचनं[2] श्रुत्वा संभावितात्मनः ।
२०] राघवः प्रतिजग्राह भ्रात्रा सह महाबलः[3] ॥१८॥[4] [२१
एवं कथयतस्तस्य ददर्शाश्रममण्डलम् ।[5]
२१] कुशचीरपरिक्षिप्तं नानावृक्षसमाकुलम् ॥१९॥ [२२
प्रविश्य सह वैदेह्या लक्ष्मणेन च वीर्यवान् ।
२२] उवास[6] मुनिभिः सार्धं सत्कारार्हैः सुसंस्कृतः ॥२०॥ [२३

इत्यार्षे रामायणे आरण्यकाण्डे दण्डकारण्यनिवासो[8]
नाम द्वादशः[9] सर्गः[10] ॥१२॥

---

१. रा ब ल म—भूषणोर्मिश्रः ।
२. कै रा ल म ब—ऽर्यमिति ।
३. भ च—शुभं जलम् ।
४. म—नास्ति ।
५. रा च ला—उवाच ।
६. ल म—संकरार्हैः । च—संस्कारार्हैः ।
७. भ च—नास्ति ।
८. ब—निवासो । च—नास्ति ।
९. च—कै रा ल भ म ब च—नास्ति ।
१०. च—नास्ति ।

तत्राश्रमपदे रामो विश्रम्य[1] सुसमाहितः[2] । [N

N] जगाम चाश्रमं[3] स्निग्धं पर्यायेण[4] तपस्विनाम् ॥१॥ [२५पू

तथा[5] तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले ।

२३] उवास ससुखं चैव पूज्यमानो महर्षिभिः ॥२॥[6] [N

N] तेषामुषितवान् रामः सकाशे परमास्त्रवित्[7] ।

क्वचित् पर्यवसन्[8] मासं क्वचिदेकं च वत्सरम् ॥३॥ [२६पू

२५] क्वचिच्च चतुरो मासान् पंच षड्वा परान्[9] क्वचित् ।[10] [२६उ

२६उ] त्रीन्मासानष्टमासांश्च राघवो न्यवसत् सुखी[11] ॥४॥ [२७उ

तथा[12] संवसतस्तस्य मुनीनामाश्रमान् प्रति ।

२८] नव संवत्सराः सार्धं[13] गता रामस्य धीमतः ॥५॥ [२८

---

१. कै ला—विश्राम्य ।

२. ल ब—ससमाहितः ।

३. भ—चाश्रमास्तेषां । च—स्वाश्रमांस्तेषां । ४. ब—लक्ष्मणेन ।

५. ल ब—अथ । ६. ला—नास्ति ।

७. भ च—रणशास्त्रवित् ।

८. रा ल अ म ला ब—पर्यायवन् ।

९. कै रा ल ब—पंचमार्धापरान् । अ—पंचमासान् परान् ।
म—पंचमारापरा ।

१०. कै रा ल अ म व—अतः परमधिकः पाठः—
अपरान्निवसन्मासमध्यर्धमपरं क्वचित् ।

११. अ—सुखं ।

१२. ल म ब—तया संव० । अ—उवास वस० ।

१३. भ च—सार्द्धां ।

२९उ] अथ रामः सुतीक्ष्णस्य पुनरेवाजगाम ह । [२९उ
आश्रमं स्वर्गसङ्काशं मुनिभिः प्रतिपूजितम् [N
३०] तत्रापि न्यवसद् रामः कञ्चित् कालपरिन्दमः ॥६॥ [३०उ
अथाश्रमस्थो नियमात् कदाचित् तं महामुनिम् ।
३१] उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् ॥७॥ [३१
अस्मिन्नरण्ये भगवन्नगस्त्यो मुनिसत्तमः ।
३२] वसतीति मया नित्यं मतां कथयतां श्रुतम् ॥८॥ [३२
न तु जानामि तं देशं वनस्यास्य महत्तया ।
३३] यत्राश्रमपदं रम्यं महर्षेस्तस्य धीमतः ॥९॥ [३३
तव प्रसादाद् भगवन् सानुजः सह सीतया ।
३४] अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् ॥१०॥ [३४
मनोरथो महानेव हृदि स्थः परिवर्तते ।
३५] येदहं तं मुनिवरं शुश्रूपेयमपि क्षणात् ॥११॥ [३५

१. भ—ततो च -तत्र ।
२. अ म—पुनरेव जगाम ।
३. ला—दुर्गं० ।
४. ला—किंचित् ।
५. म—तपासीनः ।
६. च—ननु ।
७. ला—वसतीति श्रुतं पूर्वं तत्र गच्छामि तं मुनिं ।
८. ल म ब—मनुजः ।
९. ला—नास्ति ।
१०. भ च—हृदि संपरि वर्त्तते ।
११. ला—तच्छ्रुत्वा स तथेत्युक्त्वा दर्शयामास तं··· ।
१२. भ च— कदाहं । ब—यदाहं ।
१३. भ—शुश्रूषेहमपि ।
१४. भ च—क्षणं ।

इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः ।[1]
३६] सुतीक्ष्णः प्रत्युवाचेदं प्रीतो[2] दशरथात्मजम् ॥[3]१२॥ [३६
अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् ।
३७] अगस्त्यमभिगच्छेति सीतां च जनकात्मजाम् ॥१३॥[3][३७
दिष्ट्या त्विदानीमर्थेऽस्मिन् स्वयमेव ब्रवीषि माम् ।
३८] अयमाख्यामि ते वत्स यत्रागस्त्यो महामुनिः ॥१४॥[3][३८
योजनान्याश्रमं राम गच्छ त्वं मुनिभिः सह ।
३९] दक्षिणेन महान् श्रीमानगस्त्यभ्रातुराश्रमः ॥१५॥[3] [३९
नम्रप्रायं वनोद्देशे पिप्पलीवनसेविते ।
४१] बहुमूलफले राम नानाशकुनिनादिते ॥१६॥[3] [४०
पद्मिन्यो विविधास्तत्र यत्रागस्त्यो महामुनिः ।
हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥१७॥[3] [४१
४२] तत्रैकां रजनीमुष्य प्रभाते राम गम्यताम् ।
दक्षिणां दिशमाश्रित्य वनखण्डस्य पार्श्वतः ॥१८॥[3] [४२

---

१. ला—नास्ति ।
२. च—श्रुत्वा ।
३. ला—नास्ति ।
४. म—०तदेवं । च—०तदैव ।
५. अ—अहमा ।
६. च—०नाम्याश्रम० ।
७. च—तात ।
८. के रा अ म—महा ।
९. भ—स्थलीप्राये ।
१०. ला—०कीर्णां ।
११. ला—०र्णानाशकुनिनादितं ।
१२. रा ल अ ब भ—तत्र ।
१३. ला—नास्ति ।
१४. भ च—०नमुत्तमम् ।

४३] तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम्[1] ।
४४पू] बहुभिः पक्षिभिर्जुष्टं नानामृगनिषेवितम् ॥१९॥ [४३
रंस्यते तत्र वैदेही लक्ष्मणश्च त्वया[2] सह ।
४५] स हि रम्यो वनोद्देशो बहुमूलफलाश्रयः[3] ॥२०॥ [४४
यदि बुद्धिः कृता राम द्रष्टुं तं मुनिपुङ्गवम्[4] ।
४६] अद्यैव गमने बुद्धिं रोचयस्व[5] महामते । [४५
N] एष राम शिवः पन्था बहुमूलफलद्रुमः[6] ॥२१॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे अगस्त्यकीर्तनं[7]
नाम त्रयोदशः सर्गः[8] ॥१३॥

---

१. भ च—०नमुत्तमम् ।
२. ल ब—तया ।
३. कै रा ल अ म ब—०श्रमः ।
४. भ च—मुनिसत्तमं ।
५. अ ला—नोदयस्व ।
६. अ—धर्ममूलफलाश्रमः ।
म—धर्ममूल० ।
ला—न्यग्रोधस्योत्तरेण हि ।
७. कै रा ल म—नास्ति ।
८. भ च ला—ग्रंथसमाप्तिर्न दृश्यते ।

ततस्तद्वचनं श्रुत्वा सह भ्रात्राभिवाद्य च ।
१] प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सह सीतया[1] ॥१॥ [४६
पश्यन् वनानि चित्राणि पर्वताग्राणि कानिचित् ।[2]
२] सरांसि सरितश्चैव पथि मार्गवशं गतः[3] ॥२॥ [४७
स सुतीक्ष्णोपदिष्टेन गत्वा तेन पथा सुखम् ।
३] इदं परमसंहृष्टो लक्ष्मणं[4] वाक्यमब्रवीत् ॥३॥ [४८
एतत् तदाश्रमपदं नूनं तस्य महात्मनः ।
४] अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते[5] पुण्यकर्मणः[6] ॥४॥ [४९
तथाहीमे[7] वनस्यास्य जाताः[8] पथि[9] सहस्रशः ।[10]
५] सन्नताः फलभारैश्च पुष्पभारैश्च वै द्रुमाः ॥५॥ [५०
पिप्पलीनां च पक्वानां वनादस्मादुपागतः[11] ।

---

१. ला—पश्यन् नानावनानि सः ।
२. ला—नास्ति ।
३. कैं रा ल अ म ला—गताः ।
४. ल अ म ब—लक्ष्मणो ।
५. रा—०तुर्मूर्दृश्यते ।
 च—भवेद् भातु० ।
६. च—०कर्मणा ।
७. च—तथा हि मे ।
८. रा म—जातः ।
९. म—पथ्यस० ।
१०. ला—नास्ति ।
११. च—०दुपागताः ।

७] गन्धोऽयं पवनाक्षिप्तः[1] सहसा हर्षयन् मम ॥६॥ [५१
तत्र तत्र च संक्षिप्ता दृश्यन्ते काष्ठसञ्चयाः[2] ।
८] लूनाश्च[3] पथि दृश्यन्ते दर्भा वैडूर्यसंनिभाः[4] ॥७॥ [५२
एतच्च वनमध्यस्थं नवाभ्रशिखरोपमम् ।
९] पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यते[5] ॥८॥[6] [५३
विविक्तेषु च तीर्थेषु कृतस्नानोत्थितैर्द्विजैः ।[7]
१०] पुष्पोपहारा दृश्यन्ते कुसुमैः सुसुगन्धिभिः ॥९॥ [५४
तत् सुतीक्ष्णस्य वचनं मया सौम्य यथा श्रुतम् ।[8]
११] अगस्त्यस्याश्रमो[10] भ्रातुर्[11]नूनमेष प्रकाशते ॥१०॥ [५५
निगृह्य तपसा[12] मृत्युं भूतानां हितकाम्यया ।
१२] यस्य भ्रात्रा कृतेयं दिक् शरण्या पुण्य[13]कर्मणाम् ॥११॥ [५६
इहै [14]पूर्वं किल क्रूरो वातापिरपि[15] चेल्वलः ।

---

१. म—पावना० । च—पवनो० ।
२. कै रा ल अ ब—काश० । म—काम । कास० ?
३. भ च—स्थूलाश्च ।
४. रा—०वैः सूर्य० । म—०वैदूर्य० । ल—नास्ति ।
५. अ म—च प्रद० ।
६. ल ब ला—नास्ति ।
७. ल ब— ,,
८. ल ब— ,,
९. ला— ,,
१०. च—०श्रमे ।
११. ला—भ्रात० ।
१२. च—तरसा ।
१३. भ च—कृतकर्मणा ।
१४. भ च—इहान्यदा ।
१५. कै रा ल अ ब—०पिरिह ।

१३उ] भ्रातरौ सहितावास्तां श्राद्धमुद्दिश्य लक्ष्मण ॥१२॥[2] [५७
भ्रातरं संस्कृतं भ्राता[3] तत्रस्थं[4] मेषरूपिणम् ।
१५] तान् द्विजान् भोजयामास शास्त्रदृष्टेन कर्मणा ॥१३॥ [५९
ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् ।
१६] वातापे निष्क्रमस्वेति परया स्वरसंपदा[5] ॥१४॥ [६०
ततो भ्रातृवचः श्रुत्वा वातापिर्मेषवन्[6] नदन् ।
१७] भित्त्वा शरीराणि तदा ब्राह्मणानां व्यतिष्ठत[7] ॥१५॥ [६१
ब्राह्मणानां सहस्राणि तेनैवं[8] कामरूपिणा ।
१८] विनाशितानि संहृत्य[9] नित्यशः पिशिताशिना ॥१६॥ [६२
अगस्त्येन ततः क्रोधादागत्य भ्रातुराश्रमम् ।
१९] अनुभूयैकदा श्राद्धे[10] भक्षितः स निशाचरः ॥१७॥[11] [६३
ततः संपन्नमित्युक्त्वा दत्त्वा हस्तावसेचनम् ।
२१] भ्रातरं निष्क्रमेत्युच्चैरिल्वलः[12] सोऽभ्यभाषत ॥१८॥[13] [६४

१. ल अ म—श्रद्धामु० ।
२. भ च—भ्रातरौ सहितावास्तां ब्राह्मणौ तौ* सुदारुणौ ।
धारयन् ब्राह्मणं रूपमिल्वलं संस्कृतं तदा ।
आमन्त्रयति विप्रान्स श्राद्धमुद्दिश्य लक्ष्मण ।
३. कै रा ल अ भ म—भ्राता । ४. भ च—ततस्तं ।
५. कै रा ल अ म ब—वरसंपदा ।
६. कै ल—वातापी । रा अ म—वातापे । भ च—०र्मेषवन् ।
७. भ च—विनिःसृतः ।
८. ला—ह्येवं तेन दुरात्मना ।
९. ला—हतानि सहितोनेन अगस्त्येन महात्मना ।
१०. भ च—श्राद्धं ।
११. ला—अगस्त्येन ततो क्रोधात् भक्षितः स निशाचरः ।
१२. च—०ल्वणः ।
१३. ला—निष्क्रमस्वेति तं चाथ इल्वलः प्रत्यभाषत ।

* भ—ब्राह्मणौ ।

तं तथाहूयमानं तु राक्षसं मेषरूपिणम् ।
३०] अब्रवीत् प्रहसन् श्रीमानगस्त्यो मुनिसत्तमः ॥१९॥ [६५
कुतो[1] निष्क्रमितुं[2] शक्तिर्मया जीर्णस्य रक्षसः ।
३१] भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् ॥२०॥ [६६
तथैतद्वचनं[3] श्रुत्वा भ्रातुर्मरणशङ्कितः ।
३३] प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः ॥२१॥ [६७
अभ्यद्रवदगस्त्यं[4] तु मुनिना दीप्ततेजसा ।
३४] चक्षुषादित्यकल्पेन[5] निर्दग्धः स पपात ह ॥२२॥ [६८
३६पू] तस्यायमाश्रमो भ्रातुस्तडागवनशोभितः[6] ।
३७उ] विप्रानुकम्पया येन कृतं कर्म सुदुष्करम्[7] ॥२३॥ [६९
एवं कथयतस्तस्य तदा[8] सौमित्रिणा सह ।
३८] रामस्यास्तं गतः सूर्यो सन्ध्याकालोऽभवत् तदा ॥२४॥[9] [७०
उपास्य सन्ध्यां तत्रैव सह[10] भ्रात्रा यथाविधि ।
३९] प्रविवेशाश्रमपदं मुनिं तं चाभ्यवादयत ॥२५॥[11] [७१
सम्यक् प्रतिगृहीतश्च मुनिना तेन राघवः ।
४०] न्यवसत्[12] तां निशामेकां प्राप्य मूलफलं शुभम् ॥२६॥ [७२

इत्यार्षे रामायणे आरण्यकाण्डे[13] इल्वलोपाख्यानं[14]
नाम चतुर्दशः[15] सर्गः ॥

---

१. अ—ततो । २. कै रा ल अ भ म ब—निष्क्रामितुं ।
३. ला—तद्वचनं सहसा । ४. ल ब—०दगस्त्येन ।
५. ल ब—०दित्य० । भ च—दीप्तक० ।
६. ला—भ्रात मुनेर्धीरस्य धार्मिक । ७. ला—नास्ति । ८. भ च—यदा ।
९. ला—एवं कथयतस्तस्य संध्याकालो ह्यभूद् वने ।
१०. ला—प्रविवेशाश्रमं ततः ।
११. ला—मुनिं तं प्रणतो भूत्वा ददर्श बहुलान्मुनीन् ।
१२. कै रा ल अ म ब—वसतश्च
१३. च भ—दण्डकारण्यनिवासे । १४. च—इल्वणो ।
१५. कै रा ल भ म ब च—नास्ति ।

तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
१] अगस्त्यभ्रातरं धीमानामन्त्रयत[2] राघवः ॥१॥ [७३
अभिवादये त्वां भगवन् सुखमस्म्युषितो[3] निशाम् ।
२] आमन्त्रये त्वां गच्छामि द्रष्टुं ते गुरुमग्रजम् ॥२॥ [७४
गम्यतामिति तेनोक्ते[4] जगाम सहलक्ष्मणः ।
३] यथोदितेन[5] मार्गेण वनं तच्चावलोकयन् ॥३॥ [७५
नीवारांश्चैव नीपांश्च कुलत्थांश्च मनोहरान् ।
N] चिरबिल्वान्[6] मधूकांश्च तिन्दुकांश्चापि[7] पुष्पितान् ॥४॥[७६
मत्तैः शकुनिसंघैश्च शतशः सन्निनादितान्[8] ।
N] पुष्पितान् पुष्पिताग्राभिर्वल्लीभिरनुवेष्टितान् ॥५॥ [७७पू
४पू] ददर्श रामः शतशस्तत्र पादपसंचयान् । [७७उ
हस्तिहस्तप्रमर्थितान् वानरैरुपशोभितान् ॥६॥ [७८पू
ततोऽब्रवीत् समीपस्थं[9] रामः पाणी धुवन्मुहुः[10] ।

---

१. ला—पुस्तकेऽयं सर्गो न दृश्यते ।

२. अ—०नमन्त्रयत ।

३. अ म—सुसुखः सयुषि० ।

४. कै रा ल ब—तेनोक्तं । अ भ —तेनोक्तो ।

५. भ च—यथोदिष्टेन ।

६. रा अ भ म च—चिरिबि० ।

७. रा म—निर्मुकांश्चा० ।

८. भ च—०प्रमृदितान् ।

९. कै रा—समीपं तं ।

१०. भ—पानीयजेच्यं । च—पानीयजेच्चणः ।

४३] पृष्ठतोऽनुगतं मह्यं लक्ष्मणं शुभदर्शनम् ॥७॥ [७९
स्निग्धपत्त्रा[1] तथा वृक्षा यथा कान्ततरा मृगाः ।
१६] आश्रमो[2] नातिदूरेऽसौ[3] तस्य[4] विश्रुतकर्मणः ॥८॥ [८०
अगस्त्य इति यः ख्यातो[5] लोके पुण्येन कर्मणा ।
१७] आश्रमो[6] दृश्यते तस्य परिश्रान्तश्रमापहः ॥९॥ [८१
आज्यधूमाकुलवनो[7] वल्कमालाविभूषितः ।
१८] प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥१०॥ [८२
निगृह्य तपसा मृत्युं भूतानां[8] हितकाम्यया ।
१९] दक्षिणा[9] दिक् कृता येन शरण्यां[10] पुण्यकर्मणा[11] ॥११॥ [८३
तस्येदमाश्रमपदं प्रभावाद् यस्य राक्षसैः ।
२०] दिगियं दक्षिणा त्रासात् पापैर्नैवोपभुज्यते ॥१२॥ [८४
यदा प्रभृति चाक्रान्ता[12] दिगियं पुण्यकर्मणा ।
२१] तदा प्रभृति निर्वैराः प्रशान्ता[13] रजनीचराः ॥१३॥ [८५

१. अ म—स्निग्धपत्ता ।
२. च— आश्रमे ।
३. म—०तिदूरो ।
४. भ—तत्र ।
५. अ—विख्यातो ।
६. रा ल—आश्रमे ।
७. कै रा अ म—वृक्षमालाकु० । ल ब—वृक्षमूलाकु० ।
८. कै रा ल अ म ब—मृतानां ।
९. कै अ—०दिक्कृता । रा म—०दिक्श्रुता ।
भ च—दक्षिणाऽलंकृता ।
१०. म—शरण्य ।
११. कै रा ल अ भ म ब—०कर्मणां ।
१२. म—०कर्मणां ।
१३. च—प्रक्रान्ता ।

नाम्ना चेयं भगवतो दक्षिणा दिक् प्रकाशते ।
२२] प्रसिद्धा[1] विष्णुलोकेषु[2] दुष्प्रधर्षा निशाचरैः[3] ॥१४॥ [८६
क्रोधात् प्रवृद्धः सुमहान् यस्य नाम्ना[4] शिलोच्चयः ।
२३] आदेशं पालयत्येव[5] विन्ध्यशैलो[6] न[7] वर्धते ॥१५॥ [८७
अयं दीर्घायुषस्तस्य प्रसिद्धः[8] पुण्यकर्मणः ।
२५] अगस्त्यस्याश्रमः श्रीमान् विनीतमृगसेवितः ॥१६॥ [८८
एष लोकार्चितः साधुर्हिते नित्यं रतः सताम् ।[9]
२६] अस्मानपि[10] गतान्[11] सौम्य श्रेयसा योजयिष्यति ॥१७॥ [८९
आराधयिष्याम्यत्राहमगस्त्यं मुनिसत्तमम् ।
२७] शेषं च वनवासस्य तत्र वत्स्यामहे सुखम् ॥१८॥ [९०
अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
२८] अगस्त्यं नियतारम्भं[12] सततं पर्युपासते ॥१९॥ [९१
नात्र जीवेन् मृषावादी पापो वा यदि वा शठः ।
२९] नृशंसः कामवृत्तो वा मुनिर्ह्येष[13] तथाविधः ॥२०॥ [९२

---

१. भ च—प्रथिता ।
२. भ च—त्रिषु लो० ।
३. भ च—क्षपाचरैः ।
४. भ च—नाम ।
५. च—०यत्येवं ।
६. ल—विंधुशैः । भ च—विंध्यः शैलो ।
७. कै रा अ—न वर्तते । म—नु वर्तते ।
८. भ च—प्रथितः ।
९. म—नास्ति ।
१०. अ—०नपि महान् । भ च—०ननुगतान् ।
११. ल ब म ब—०निसेवितं ।
१२. भ च—नियताहारं ।
१३. कै रा—०षस्तथाविधः ।

अत्र यक्षाः पिशाचाश्च नागाश्च पतगैः सह ।
३०] वसन्ति नियताहारा धर्ममाराधयिष्णवः ॥२१॥ [९३
अत्र सिद्धा महात्मानो विमानैः सूर्यसन्निभैः ।
३१] त्यक्त्वा देहं नवैर्देहैः स्वर्गं याता महर्षयः ॥२२॥ [९४
यक्षत्वममरत्वं वा राज्यानि विविधानि च ।
३२] अत्र देवाः प्रयच्छन्ति वरानाराधिताः शुभान् ॥२३॥ [९५
अगस्त्यस्याश्रमद्वारं सौमित्रे प्रविशाग्रतः ।
निवेदय च मां प्राप्तमृषये सह सीतया ।[7] [९६
N] विदितः संप्रवेक्ष्यामि द्रष्टुं मुनिवरं त्वहम् ॥२४॥ [N

इत्यार्षे रामायणे श्रीमदारण्यकाण्डे अगस्त्याश्रमवर्णनं
नाम पञ्चदशः सर्गः ॥१५॥[12]

---

१. भ च—च ।
२. भ च—प्रेत्य ।
३. भ च—वरैरा राधिता ।
४. भ च—शुभैः ।
५. भ च—निवेदयस्व ।
६. भ च—प्राप्तं मुनये ।
७. म—नास्ति ।
८. ल अ ब—संप्रव० ।
९. भ च—स्वयं ।
१०. भ च—दण्डकारण्ये ।
११. के रा ल ब भ च—नास्ति ।
१२. म—सर्गसमाप्तिर्न दृश्यते ।

स[1] प्रविश्या[2]श्रमपदं[3] लक्ष्मणो राघवाज्ञया ।
३] अगस्त्यशिष्यमासाद्य श्लक्ष्णं मधुरमब्रवीत् ॥१॥ [१
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली ।
४] इह प्राप्तो मुनिं द्रष्टुं[6] भार्यया सह सीतया ॥२॥ [२
५पू] लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो मुने ।
६उ] अनुरक्तश्च भक्तश्च यदि ते श्रोत्रमागतः ॥३॥ [३
ते[8] वयं मुनिमुद्दिश्य भगवन्तमुपागताः ।
७] द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥४॥ [४
तस्य तद्वचनं श्रुत्वा[9] लक्ष्मणस्य महात्मनः ।
८] तथेत्युक्त्वाऽग्निशरणं प्रविवेश निवेदकः ॥५॥ [५
स प्रविश्य[10] मुनिवरं तपसा द्योतितप्रभम् ।
९] कृताञ्जलिरुवाचेदं वचनं व्यक्तया गिरा ॥६॥ [६
पुत्रो दशरथस्याथ[11] रामो नाम महायशाः ।

---

१. अ—सं ।

२. भ—विप्रस्या० ।

३. ला—अतः आरभ्य षोडशश्लोकस्य पूर्वार्द्धान्तं पाठो न दृश्यते ।

४. भ च—वचन० ।

५. भ—नास्ति ।

६. ल ब—प्राप्तुं ।

७. ल ब—०मागताः ।

८. अ—तवेवं ।

९. रा—श्रोत्र । अ भ—श्रोतुं ।

१० भ—प्रविष्टो । च—प्रविष्टा ।

११. अ—०स्यापि ।

१०] सह भ्रात्राश्रमप्राप्तो भार्यया सह सीतया ॥७॥ [७
भवन्तमिच्छति द्रष्टुं शुश्रूषार्थमरिन्दमः ।
११] यदत्रानन्तरं कार्यमाज्ञापयितुमर्हसि ॥८॥ [८
ततः शिष्यादुपाश्रुत्य[1] प्राप्तं रामं सलक्ष्मणम् ।
१२] वैदेहीं च महाभागामिदं वचनमब्रवीत् ॥९॥ [९
दिष्ट्या राम चिरात्[2] प्राप्तो द्रष्टुं मां समुपस्थितः ।
१३] मनसा काङ्क्षितं ह्यस्य[3] मयाप्यागमनं श्रुतम् ॥१०॥ [१०
भवता सत्कृतो रामः ससीतः सहलक्ष्मणः ।
१४] प्रवेश्यतां[4] समीपं मे किं[5] चासौ न प्रवेशितः ॥११॥ [११
एवमुक्तः[6] स मुनिना धर्मज्ञेन कृतात्मना ।
१५] अभिवाद्याब्रवीद्धृष्टस्तथेति नियताञ्जलिः ॥१२॥ [१२
ततो निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत् ।
१६] क्वासौ रामो मुनिं द्रष्टुमत्र प्रविशतु स्वयम् ॥१३॥ [१३
ततो गत्वाश्रमद्वारं शिष्येण सह लक्ष्मणः ।
१८] दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् ॥१४॥ [१४
तं शिष्यः प्रश्रितं राममगस्त्यवचनादथ ।
२०] प्रावेशयद्[7] यथान्यायं सत्कारार्हं सुसत्कृतम् ॥१५॥ [१५
प्रविवेश ततो रामः ससीतः सहलक्ष्मणः ।
२१] प्रशान्तहरिणाकीर्णमाश्रमं[8] प्रविलोकयन् ॥१६॥ [१६

---

१. रा भ च—०दुपश्रुत्य ।
२. भ च—चिरं ।
३. ल—यस्य ।
४. कै रा भ—प्रवेशतां ।
५. भ च—किमसौ ।
६. अ—मुक्त्वा ।
७. भ च—प्रवेश० ।
८. कै—०ममवलोकयन् ।

स तत्र [1]ब्रह्मणः स्थानं शिवस्थानं तथैव च ।
N] अग्नेः स्थानमथे[2]न्द्रस्य स्थानं चैव विवस्वतः ॥१७॥ [१७
सोमस्था[3]नं भगस्थानं स्थानं कौवे[4]रमेव च ।[5]
N] स्थानं धातुर्विधातुश्च वायुस्थानं तथैव च ॥१८॥ [१८
२२पू] ततः शिष्यैः परिवृतो निश्चक्राम महामुनिः ।
२३] तं ददर्शाग्रतो रामो भ्रातरं चेदमब्रवीत् ॥१९॥ [१९
N] एष लक्ष्मण निष्क्रान्तो महर्षिर्लोकवि[6]श्रुतः ।
२५] औदार्येणाभिजानामि निधानं तपसामयं[7]म् ॥२०॥ [२२
N] एवमुक्त्वा महाबाहुरगस्त्यं सूर्यसन्निभम् । [२२पू
२७उ] अभिवाद्य यथा[8]न्यायं तस्थौ रामः कृताञ्जलिः ॥२१॥ [२४पू
२६उ] जग्राह परम[9]प्रीतस्तस्य पादौ महामुनेः । [२३उ
२७पू] सीतया सह वैदेह्या स भ्रात्रा लक्ष्मणेन च ॥२२॥ [२३उ
प्रतिगृह्य च[10][11] काकुत्स्थमर्चयित्वा[12]सनोदकैः ।
N] कुशलप्रश्नमुक्त्वा च निषी[13]दस्वेत्युवाच ह[13] ॥२३॥ [२५

१. म—ब्राह्मणस्थानं ।
२. कै—स्थानं तथेन्द्रस्य ।
३. रा—रोम० ।
४. कै—कौवीर० । रा—कोवीर० ।
५. भ च—अतः परमधिकः पाठः—
कार्तिकेयस्य च स्थानं धर्मस्थानं तथैव च ।
६. ब—०लोकपूजितः ।
७. भ च—तपसां चयं ।
८. रा ल ब—०न्यायतं ।
९. कै रा—परमं प्रीत० ।
१०. भ च—तु रामः सलक्ष्मणः ।
११. भ च—तु ।
१२. म—मनोदकैः ।
१३. अ—०दस्वेदमब्रवीत् ।

N] प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः । [२७पू
३०उ]अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च ॥२४॥ [२६पू
वानप्रस्थेन विधिना स तेभ्यो भोजनं ददौ । [२६उ
N] उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥२५॥ [२७उ
अपूजयित्वा[1] काकुत्स्थं तपस्विनमुपागतम् ।
३४] भुङ्क्ते[2] यः स परे लोके स्वानि मांसानि खादति ॥२६॥[२८
यो गृहायातमतिथिं यथाशक्ति न पूजयेत् ।
३५] दत्त्वा सं[3] दुष्कृतं तस्य पुण्यमादाय गच्छति ॥२७॥ [N
राजा सर्वस्य लोकस्य धर्मचारी यतव्रतः ।
N] पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः ॥२८॥ [२९
एवमुक्त्वा फलैर्मूलैर्वन्यैर्माल्यैश्च[4] राघवम् ।
३६] पूजयित्वा यथाकामं पुनरेवाब्रवीद्वचः ॥२९॥ [३०
इदं दिव्यं महाचापं[5] दृढं हेमपरिष्कृतम् ।
३७] वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥३०॥ [३१पू
अमोघः सूर्यसंकाशो ब्रह्मदत्तस्तथा शरः[6] । [३१उ
३८] दत्तात्विमौ महेन्द्रेण तूणौ चाक्षयसायकौ ॥३१॥ [३२पू
संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पन्नगैः ।
३९] महाकोशनिवासी च महासिर्हेमविग्रहः ॥३२॥ [३२उ
अनेन धनुषा सौम्य हत्वा संख्ये महासुरान् ।
४०] आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम्[7] ॥३३॥ [३४

---

१. भ च—अपूजयद्धि काकुत्स्थं ।

२. च—निःसाक्षीवापरे ।

३. कै रा अ म ब—सु० । ल—स्वदु० ।

४. कै रा ल भ ब च—फलैर्वन्यैर्माल्यैः पुष्पैश्च ।

५. भ च—महच्चापं । ६. म—शिरः ।

७. म—विष्णोर्दि० ।

स तद्धनुस्तौ[1] तूणीरौ शरान्[2] खड्गं[3] च मानद ।
४१] जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥३४॥ [३५
इदं च मे[4] तनुत्राणमभेद्यं मघवान्[5] ददौ ।
N] स्पर्शे चानुपर्यं[6] वीर सूर्याग्निसदृशप्रभम् ॥३५॥ [N
यदा च संशयं प्राप्तश्चिन्तयिष्यसि[7] वाहनम् ।
N] हरियुक्तं[8] रथं दिव्यं[9]मानयिष्यति मातलिः ॥३६॥ [N
एवमुक्त्वा महातेजाः समग्रं तद्वरायुधम् ।
४५] दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥३७॥ [३६
N] स्नेहगद्गदया वाचा हर्षयन्[10] रघुनन्दनम्[11] ।[N

इत्यार्षे रामायणे आरण्यकाण्डे[12] आयुधप्रदानं[13]
नाम षोडशः[14] सर्गः ॥१६॥

---

१. रा ल—०धनुस्थौ । भ च—०तद्धनुस्तौ च ।
२. कै ल ब—शराः । रा अ—शरः । म—शरा ।
३. रा म—खड्गां ।
४. ल अ म ब—ते ।
५. ल अ ब—मघवा ।
६. च—चानुपरं ।
७. भ ल अ म ब—०ष्यति ।
८. अ च—०युक्तरथं ।
९. ल म—दिव्यं माम० ।
१०. भ च—हर्षयिष्यन् ।
११. भ च—रघूत्तमम् ।
१२. भ—दंडकारण्यनिवासे वाल्मीकविरचिते ।
च—दंडकारण्यनिवासो ।
१३. कै रा—०धदानं । अ म—०धप्रधानं । भ च—०प्रधानो ।
१४. कै रा ल भ म ब च—नास्ति ।

राम प्रीतोऽस्मि ते पुत्र परितुष्टोऽस्मि लक्ष्मण ।
२] अभिवादयितुं यौ मां प्राप्तौ स्थः सह सीतया ॥१॥ [१
N] अप्याश्रमे[1] न वः खेदो वने प्रचुरपादपे ।
मा चोत्कण्ठेति[2] वैदेही लक्ष्मणो वापि[3] राघव ॥२॥ [२
३] एषा हि[4] सुकुमारी च सुखैः संमानिता सदा ।
प्रीसाश्रमपदं प्राप्ता भर्तृस्नेहेन नोदिता[5] ॥३॥ [३
४] यथेह भार्या रमते[6] सीता राम तथा कुरु ।
दुष्कृतं[7] कृतवत्येषा[8] वने त्वां[10] न[9] जहाति[11] या ॥४॥ [४
५] एषात्र[12] प्रकृतिः स्त्रीणां सृष्टिश्च पुरुषर्षभ ।
६भू] पदस्थमनुरज्यन्ते विषमस्थं त्यजन्ति च ॥५॥ [५
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां[13] तथा ।

---

१. भ च—अत्राश्रमे ।
२. भ च—चोतकंठेत । ब—०कण्ठतु ।
३. ल ब—वाथ । च—चापि ।
४. कै—च ।
५. अ—चोदिता ।
६. रा—रमणी ।
७. भ—दुःकरं ।
८. म—गतवत्येषा ।
९. ब—नैव ।
१०. कै रा ल अ म—त्वा ।
११. कै रा ल अ म ब—विजहाति ।
१२. भ च—एषा च ।
१३. कै रा ल अ म ब—तीक्ष्णता ।

७] दहनानिलयोः शैघ्र्यमनुकुर्वन्ति योषितः । [६
N] न तथा कालकूटं हि विषं हन्याद् यथा स्त्रियः ॥६॥ [N
इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता ।
८] श्लाघ्या च व्यपदेश्या च यथा देवी त्वरुन्धती ॥७॥ [७
अलङ्कृतः स देशश्च यत्र सौमित्रिणा सह ।
९] वैदेह्या चानया सार्धं रंस्यसे रघुनन्दन ॥८॥ [८
N] तारितश्च त्वया राजा सत्पुत्रेण रघूत्तम ।
एवमुक्तस्तु मुनिना राघवः स कृताञ्जलिः ।
१०] उवाच प्रश्रितं वाक्यं मुनिं दीप्तमिवानलम् ॥९॥ [९
न मया तारितो राजा गुणैः स्वैरेव तारितः ।
N] स्वर्गं दशरथः प्राप्तः स्वकृतैश्चैव कर्मभिः ॥१०॥ [N
अयं तु निखिलो देशः सर्व एव महामुने ।
N] अशरण्यः शरण्येन भूय एव विनिर्मितः ॥११॥
यथा शप्तश्च भगवन् यथा चैव निवेशितः ।
N] तथा चाख्याहि तत्त्वेन परं कौतूहलं हि मे ॥१२॥ [N
श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम् ।
N] प्रत्युवाच ततो राममगस्त्यो भगवानृषिः ॥१३॥ [N

१. के रा ल अ म ब—शीघ्र० ।
२. भ च—संहतांजलिः ।
३. के रा ल अ म ब—प्रस्थितो ।
४. भ च—सो नृपः ।
५. के रा म—स्वकृतश्चैव ।
६. म—सर्वमेव । ब—सर्वे एव ।
७. म—महामुनिः ।
अत आरभ्य सर्गसमाप्तिं यावत् सर्वे श्लोका दाक्षिणात्यपाठे रामायणे द्वाविंशे सर्गे प्रक्षिप्तेषु श्लोकेषु द्रष्टव्याः ॥
८. अ—भगवान् ।

शृणु राघव तत्त्वेन देशस्यास्य[1] यथातथम् ।
N] भावाभावं[2] महाबाहो विपर्यस्तं कृतं तथा[3] ॥१४॥ [N
दण्डेन तु परित्यक्तः स्वयं देशो महात्मना ।
N] भार्गवस्य तु शापेन निर्मनुष्योऽभवत्[4] पुरा ॥१५॥ [N
वृक्षगुल्मलताहीनः प्रशुष्कसलिलाशयः ।
N] मृगपक्षिगणैर्हीनः श्वापदैः परिवर्जितः ॥१६॥ [N
कान्तारमजनं तात घोरं परमदारुणम् ।
N] योजनानां सहस्रं तु विन्ध्यपादश्च दक्षिणः[5] ॥१७॥ [N
नेह[6] वर्षति पर्जन्यो न च वाति सुखोऽनिलः ।
N] रूक्षे प्रातिभयं घोरमासीद्धेमारुणाम्बरम्[7] ॥१८॥ [N
बहून्यब्दसहस्राणि चैतदासीदनालयम् ।
N] गन्धर्वमुनिसङ्घैश्च[8] दैवतैश्च विवर्जितम् ॥१९॥ [N
कस्यचित् त्वथ कालस्य दैवयोगादहं नृप ।
N] मेरुविन्ध्यादिसंघर्षे[9] सुरकार्ये च सत्वरम् ॥२०॥ [N
हिमवच्छिखराच्छ्रेष्ठादिह[10] प्राप्तोऽस्मि मानद ।
N] ततो मया समाहूतः पर्जन्यो जलदैः सह ॥२१॥ [N

---

१. रा ल म ब—०स्याथ ।
२. च—भवाभावं ।
३. भ च—यथा ।
४. भ च—०नुस्यमृगोभवत् ।
५. च—०पादपदक्षिणः ।
६. भ च—नाति ।
७. भ च—०सीत् धूमारुणा० ।
८. ल अ म ब—गंधर्वैर्मुनि० ।
९. भ च—०न्ध्यस्य संघर्षात् ।
१०. भ च—०त् श्वेतादिह

स्वच्छन्दवर्षी[1] च कृतः किञ्चित् कालमरिन्दम ।
N] यमस्य चाप्रचारस्तु बहून्यब्दशतानि वै ॥२२॥ [N
तेजसा मृत्युर्दूताश्च[2] व्याधयोऽपि निराकृताः[3] ।
N] हिमवत्पादजा वृक्षाश्चिन्तिता मनसा मया ॥२३॥ [N
सुप्रवृत्ताः पुनर्नद्यः फुल्लपङ्कजमण्डिताः ।
N] तडागानि[4] च रम्याणि पद्मिन्यश्च सरांसि च ॥२४॥ [N
विरजस्कं सुखं श्रीमत् सुखशीतानिलाञ्चितम्[5] ।
N] प्रवृद्धं वनखण्डाढ्यं[6] स्फीतसस्यसमाकुलम् ।
आचिरेणाभवद् रम्यमृषिसंघैश्च[7] सेवितम् ॥[8] २५॥ [N
N] केवलमृषिशापेन तस्यैवं[9] रघुनन्दन ।
सोपद्रवमिवाद्यैतद् राक्षसैः क्रूरकर्मभिः ॥२६॥ [N
N] यदा प्रभृति चैव त्वं चित्रकूटमुपागतः ।
तदा प्रभृति रक्षांसि विघ्नं[10] कुर्वन्ति सर्वतः ॥२७॥ [N
N] न निषेधयिता चाहं स्थिते बलवति[11] त्वयि ।
स राक्षसगणान् राम सूदयस्व महाबल ॥२८॥ [N
N] ऋषीणामभय वीर दातुमर्हसि मानद ।
अस्माद्धि कारणाद्राम दण्डकारण्यवासिनाम् ॥२९॥ [N

---

१. भ—वर्षविकृतः ।
२. च—०दूतश्च ।
३. भ च—याधयश्च ।
४. ल ब—तडाकानि ।
५. भ च—०निलाविलम् ।
६. भ च—०डाद्यं ।
७. भ—०संहैश्च । च—०सिंहैश्च ।
८. ल म ब—नास्ति ।
९. भ च—तथैव ।
१०. भ च—विप्रकुर्वन्ति । ११. भ च—भगवति ।

N] त्राणार्थमिह संप्राप्तस्त्रातुमर्हसि राघव ।[1]
समर्थो ह्यसि काकुत्स्थ प्राप्तस्त्वमरिसूदन ॥३१॥ [N
N] तत् त्वमद्य पुरा प्राप्तः[2] पितृवत् मुनिराकृतान्[3] ।
तारयस्व[4] महाबाहो दण्डकेऽस्मद्वशानुगान्[5] । [N
N] एवमस्माद् रघुश्रेष्ठ दण्डकारण्यमुच्यते ॥३२॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे[6] शापवर्णनं
नाम सप्तदशः सर्गः ॥१७॥

---

१. च—नास्ति ।
२. भ—प्राप्तं ।
३. अ म—०तात् । भ—०तम् ।
४. च—त्राणार्थमिहावाहो ।
५. कै अ—दंडकास्मद्वशानुगाः ।
रा म—दंडकास्सद्वशानुगाः । ळ—०कास्सद्वशान्वयः ।
ब—दंडकास्मद्वशानुगः ।
च भ—कोशयोः 'दण्डकेस्मन् वशानुगान्, इति पाठ आसीत् ।
स एव संस्कृत्यास्माभिर्मूले संनिहितः ।
इतरकोशस्थास्त्विहापपाठाः ॥
६. भ च—नास्ति ।

एवमुक्तस्तदा रामः प्रत्युवाच महामुनिम् ।
N] आश्चर्यमिदमाख्यातं देशस्यास्य यथातथम् ॥१॥ [N
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः ।
११] गुणैः सभ्रातृभार्यस्य सुतोषः[1] परितुष्यति ॥२॥ [१०
किं तु व्यादिश मे[2] देशं[2] सोदकं बहुपादपम् ।
१२] यत्राश्रमपदं कृत्वा वसेम निरताः[3] सुखम् ॥३॥ [११
ततोऽब्रवीन् मुनिश्रेष्ठः श्रुत्वा रामस्य भाषितम् ।
१३] ध्यात्वा मुहूर्तं धर्मात्मा वीरो[4] धीरतरं[5] वचः ॥४॥ [१२
इतो[6] द्वियोजने[6] तात बहुमूलफलद्रुमः ।
१४] देशो बहूदकः[7] श्रीमान् पञ्चवटिरिति[8] श्रुतः[9] ॥५॥ [१३
तत्राश्रमपदं कृत्वा राम सौमित्रिणा सह ।
१५] निवस स्वपितुर्वाक्यं यथोक्तं[10] परिपालयन् ॥६॥ [१४
विदितो ह्येष वृत्तान्तस्तव सर्वः[11] स्वयं मम ।

---

१. कै—सुतयः ? ब—सतोषः ।
२. ल ब—सद्देशं ।
३. भ च—नितरां ।
४. भ—धीरो ।
५ ल ब—दूरतरं ।
६. ल म ब—०जनं । भ च—इतोर्द्धयोजने ।
७. भ च—बहुश्रुतः ।
८. रा—पञ्चवटिराति । म—पंचावटि० ।
९. अ—श्रुति ।
१०. भ च—०क्तमनुपालयन् ।
११. कै रा ल अ म ब—सर्वं ।

१६] तपसश्च प्रभावेन स्नेहाद् दशरथस्य च ॥७॥ [१७
हृदयस्थश्च ते भावो विज्ञातस्तपसा मया ।
१७] इह वा वस काकुत्स्थ मया सह तपोवने ॥८॥ [१८
N] अथेह नेच्छसे वासमन्यदेशनिवासिनाम् ।
अतश्च त्वां वयं ब्रूमो गच्छ पञ्चवटीमितः ॥९॥ [१९
१८] स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते ।
स देशः श्लाघनीयश्च नातिदूरे च राघव ॥[1]१०॥ [२०
१९] गोदावर्याः समीपे च तत्र सीता[2] तु रंस्यते ।[3]
प्राज्यमूलफलैश्[4]चैव बहुपादपशोभितः ॥११॥ [२१पू
२०] विविक्तश्च महापुण्यो[5] रम्यो[6]ऽगम्यस्तथैव च । [२१उ
भवानपि सदारश्च शक्तश्च परिरक्षणे ॥१२॥
२१] अपि चात्र वसन् राम तापसान् पालयिष्यसि ॥१३॥ [२२
एतदालोक्यते वीर मधूकानां[7] महद् वनम् ।
२२] उत्तरेणास्य गन्तव्यं[8] न्यग्रोधमधि मध्यतः ॥१४॥ [२३
ततः[9] स्थलीषु रम्यासु पर्वतस्याविदूरतः ।
२३] पञ्चवटीं[10] च[11] पश्यैतां नित्यं पुष्पितकाननाम् ॥१५॥ [२४

---

१. अ—नास्ति ।

२. म—सीतां० । भ च—सीतानुरं० ।

३. अ—नास्ति ।

४. कें रा ल अ म ब—प्राप्यमूल० ।

५. भ च—महाबाहो ।

६. भ च—पुण्यो रम्यस्तथैव ।

७. च—मधुका० ।

८. भ च—गच्छत ।

९. च—तत्र ।

१०. भ च—पंचावटीं ।

११. भ—पंचवटीं । च—त्रुटितः पाठः ।

अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह ।
२५] सत्कृत्यामन्त्रयामास तं मुनिं दीप्ततेजसं ॥१६॥ [२५
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ।
२६] तमाश्रमं पञ्चवटीं जग्मतुः सह सीतया ॥१७॥ [२६
गृहीतचापौ तु नराधिपात्मजौ ।
विषक्ततूर्णौ सशरावकातरौ
यथोपदिष्टेन पथा महाबलौ
२७] प्रजग्मतुः पञ्चवटीं समाहितौ ॥१८॥ [२७

इत्यार्षे रामायणे आरण्यकाण्डे दण्डकारण्यनिवासो
नाम अष्टादशः सर्गः ॥१८॥

---

१. अ—सत्कृतामंत्र० । म—सकृत्कृतामंत्र० ।
२. भ च—०भिवादनौ ।
३. अ—नृपाधिपा० ।
४. कै रा ल अ म ब—विमुक्त० ।
५. कै रा—सुशरावकातरौ ।
भ च—समरेस्वकातरौ ।
६. च च—नास्ति ।
७. च—०निवासे ।

पञ्चवटीं तु गच्छन्तावन्तरा रघुनन्दनौ ।
१] आससाद महागृद्ध्रो[1] जटायुरिति[2] विश्रुतः ॥१॥ [१
तं दृष्ट्वा तु महाभागौ वनस्थौ रामलक्ष्मणौ ।
N] मेनाते राक्षसं गृद्ध्रं तदा चैवाभ्यधावताम् ।
N] ब्रुवाणौ को भवाँनिति[3] तिष्ठ तिष्ठ निशाचर ॥२॥ [२
ततो मधुरया वाचा सौम्यया स्मयमानया[4] ।
२] उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥३॥ [३
स तं पितृसखं[5] बुद्ध्वा पूजयित्वा च[6] राघवः[7] ।[8]
३] कुशलानामयं चैवमपृच्छद्[9]विनयान्वितः ॥[10] ४॥ [४
रामस्य वचनं श्रुत्वा स्वंकुलं[11] जन्म चात्मनः ।

---

१. रा अ—०गृद्धो ।
२. रा—०युराति ।
३. भ—भवांश्चेति ।
४. भ च—प्रीयमाणया ।
५. भ च—०सम ।
६. कै रा ल अ भ म च—स ।
७. भ च—लक्ष्मणः ।
८. भ च—अतः परमधिकः पाठः—
तस्मै कुशलमव्यग्रमाचचक्षे स्वनाम च ।
९. ल भ व च—चैनम० ।
१०. भ च—अतः परमधिकः पाठः—
आत्मनः संभवं तात संततिं कुलमेव च ।
कथयस्वेति तं प्राह रामः कौतूहलान्वितः ॥
११. सुकुलं । च—कुशलं ।

५] आचचक्षे द्विजश्रेष्ठो[1] यथावत् परिपृच्छतः ॥५॥ [५
आदिकाले महाबाहो ये प्रजापतयोऽभवन् ।
६] तान् मे निगदतः[2] सर्वानादितः[3] शृणु राघव ॥६॥ [६
कर्दमः प्रथमस्तेषां विक्रीर्तस्[4]तदनन्तरम् ।
७] शेषश्च सुव्रतश्[5]चैव बहुपुत्रश्च वीर्यवान् ॥७॥ [७
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः ।
८] पुलस्त्यः पुलहश्चैव प्रचेताश्चैव वीर्यवान् ॥[6]८॥ [८
दक्षो विवस्वानपरोऽरिष्टनेमिश्[7]च वीर्यवान्[8] ।
९] कश्यपश्च महाभागस्तेषामासीत् तु पश्चिमः[9] ॥९॥ [९
प्रजापतेश्[10]च दक्षस्य[11] बभूवुरिति[12] नः श्रुतम् ।
१०] षष्टिर्दुहितरस्तस्य[13] तपस्विन्यो[14] यशस्विनः ॥१०॥ [१०
कश्यपः प्रतिजग्राह तासामष्टौ च पञ्च च ।[15] [११पू

१. भ च—द्विजस्तस्मै सर्वमुत्तममद्भुतम् ।
२. रा ल अ म—निगदितः ।
३. कै रा ल अ भ म व—०नादृतः ।
४. भ च—विक्रांस्त° ।
५. भ च—सर्वनागेशो । ब—०मुज्वत० ।
६. भ च—सत्यश्रवाः पुलस्त्यश्च प्रचेताः पुलहस्तथा ।
७. म व—°निष्टनेमिश्च ।
८. भ च—राघव ।
९. म—पंचमः ।
१०. च—०पतेस्तु ।
११. च—दचश्च । १२. भ च—न ।
१३. भ च—०तरो राम ।
१४. च—तासां प्रत्यंगिरास्तदा ।
१५. भ—अतः परमधिकः पाठः ।
ताभ्योऽपत्याय धर्माय ददौ दश सुमध्यमाः
त्रयोदश सुता वीर मरीचेस्तु परिग्रहः ।
अंगिराः प्रथमो राम तासां प्रत्यंगिरस्तदा ।

११] अङ्गिराश्चापरा राम कन्याः प्रत्यङ्गिरास्तथा ॥११॥[1] [N
अदितिश्च दितिश्चैव कालका दनुरेव च ।[2]
१२] ताम्रां क्रौ[3]ञ्चवशां[4] चैव बलामतिबलां तथा ॥[5]१२॥ [११७

---

१. भ च—विंशतिश्चापराः सप्त सोमाय प्रददौ तदा ।
अन्या ऋषिभ्यः प्रददौ दशकन्याः सु तेजसः ।
धर्मश्चाजनयत्पुत्रान्साध्यायां द्वादशाच्युत ।
साध्यान्देवान् रघुश्रेष्ठ देवेभ्योपि ततः परान् ।
वसवोष्टौ च धर्मज्ञा जातास्त्रैलोक्यपूजिताः ।
एवं ते वै जगत्सर्वं सहस्थावरजंगमं ।
विश्वायां जज्ञिरे विश्वे दश क्रतुमुखा दश ।
मरुत्वत्यां मरुत्वन्तो भानवो भानुजाः स्मृताः ।
लंबापुत्रः स्मृतो घोषः संकल्पायाः[1] सनामकः ।
मुहूर्तायाः स्मृतास्त्रिंशन्मुहूर्ता लोकपूजिताः ।
याम्यायाश्च स्मृताः पुत्रास्त्रयः पंथान एव च ।
पृथिवीविषयं सर्व्वमरुंधत्यां व्यजायत ।
कन्याः सोमस्य याः प्रादात् दक्षः प्राचेतसः[2] प्रभुः ।
सर्वा नक्षत्रयोन्यश्च तासां पुत्राः सुदीप्तयः ।
याः कन्याः प्रतिजग्राह कश्यपो भगवान् प्रभुः ।
नामानि तासां सर्वासां शृणु राम महाबल ।

२. भ च—अदितिर्दितिर्दनुश्चैव खशा क्रोधवशा इरा ।

३. म—तासां ।

४. अ—क्रोधव० ।

५. भ च—भद्रानायुर्मुनिः[3] कद्रुः सुराभिर्विनतामुखाः ।

---

१ म—संकल्यायाः ।

२ च—प्रचेतसः ।

३ च—०नागुर्मुनिः ।

तास्तु पत्नीर्भृशं[1] प्रीतः[2] कश्यपो वाक्यमब्रवीत् ।
१३] पुत्रांस्त्रैलोक्यभर्तृत्वे[3] सर्वैः सञ्जनयिष्यथ[4] ॥१३॥ [१२
N] इति भर्ता वरं तासां प्रादात्तु[5] प्रीतमानसः ।[6] [N
अदितिस्तन्मना राम दितिश्च मनुजर्षभ ॥१४॥
१४] दनुश्च कालका[7] चैवं शेषा विमनसोऽभवन् ॥१५॥ [१३
अदितिर्जनयामास त्रयस्त्रिंशत् सुरान् सुतान् ।
१५] आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावुभौ ॥१६॥ [८][१४
दितिश्च जनयामास दैत्यांश्चैव यशस्विनः ।[1]

१. कै रा अ म—पत्न्यो भृशं । भ च—कन्यास्तदा ।
२. कै—प्रीताः ।
३. भ च—०कर्तृत्वे ।
४. भ च—जनयिष्यथ दुर्द्धरान् ।
५. कै ल—प्रदातु ।
६. च भ—नास्ति ।
७. रा अ म—कालकाश्चैव । भ—कालिका । च—कालिंका ।
८. भ च—अत आरभ्य आत्रयोविंशश्लोकपूर्वार्द्धमित्थं पाठः—
अदितिर्जनयद्देवानादित्यान् जगति श्रुतान् ।
दितिस्तु जनयत्पुत्रान् दैत्यान् सह मरुद्गणैः ।
येषामियं वसुमती पुरा सवनकानना ।
दनुश्च जनयन्पुत्रान्[2] विप्रचित्तिमुखान्बहून् ।
खशापुत्रौ स्मृतौ रौद्रौ सन्ध्ययोर्यक्षराक्षसौ ।
दारुणत्वाच्च कालस्य विसर्गेण[3] च दारुणौ ।
विरूपौ विकृतौ तीक्ष्णौ सर्व्वसत्त्वभयंकरौ ।
महाशनौ महासत्त्वावंतर्द्धानचरावुभौ ।
असृग्मांसवसाहारौ नक्तं चैव बलीयसौ ।
तयोः पुत्राश्च पौत्राश्च बहवो रात्रिचारिणः ।

१ च—नास्ति ।
२ च—नास्ति ।
३ भ—निसर्गेणौ ।

१६] येषामियं वसुमती पुरासीत् समहार्णवा ॥१७॥ [१५
दनुश्चाजनयत् पुत्रमश्वग्रीवमरिन्दम ।
१७] नरकं कालकञ्जांश्च कालनेमिमजीजनत् ॥१८॥ [१६
क्रौञ्ची भासी तथा श्येनी धृतराष्ट्री तथा शुकी ।
१८] ताश्चापि सुषुवुः कन्याः पञ्चैता लोकविश्रुताः ॥१९॥[१७
क्रौञ्चानजनयत् क्रौञ्ची भासी भासानजायत ।
१९] श्येनी श्येनांश्च गृध्रांश्च तथोलूकानजायत ॥२०॥ [१८
धृतराष्ट्री त्वजनयद्धंसाञ्जलविहारिणः ।
२०] चक्रवाकांश्च भद्रं ते सारसांश्चैव सर्वशः ॥२१॥ [१९
शुकी शुकानजनयद् गरुडान् विनता तथा ।
२१] कल्याणगुणसंपन्नान् सर्वलक्षणपूजितान् ॥२२॥ [N
तथा क्रोधवशा राम जज्ञे सा चात्मसंभवान् ।

---

अनायुषः स्मृता पुत्रा बलवृत्रादयोद्भुताः ।
महामाया महाकायास्त्रैलोक्यस्य भयंकराः ।
मुनेः पुत्राः सुबहुशो गन्धर्वाप्सरसां गणाः ।
अन्याश्चाप्सरसः शिष्टाः यज्ञे देवनमस्कृताः ।
भद्रापत्यानि गन्धर्वा जज्ञिरे गायनोत्तमाः ।
राम क्रोधवशापत्यं दंष्ट्रिणो वनचारिणः ।
अनेकशतसाहस्रा बलवंतस्तरस्विनः ।
अथ क्रोधवशापत्यं दशकन्या कुलोद्वहाः ।

१. रा अ—धनु० ।
२. कै रा—०कंजाश्च । अ—०कंज्यांश्च ।
३. रा—श्येनी ।
४. ल द—शुकी तथा ।
५. रा—०त्मसंभवाम् । अ म—शाखात्मसंभवान् ।

---

१ च—वृंत्रादयोद्भुताः ।
२ भ—वानरादयः ।

२२] मृगी च मृगमन्दा च हरिभद्रा मतङ्गिका ॥२३॥ [२१
भूता च कपिशा दंष्ट्रा श्वेता च सैरमा तथा ।
N] सुरसा चैव ताभ्योऽपि जज्ञिरे विपुलाः प्रजाः ॥२४॥ [N
मृग्यपत्यं मृगाः सर्वे हरिण्याः शशास्तथा ।
२४] गवयाः मृगमन्दायाः सृमराश्चमरास्तथा ॥२५॥ [२३
N] वराहा महिषाः खड्गा उष्ट्रा गौरमुखास्तथा । [N
२६] हर्यास्तु हरयोऽपत्यं गोलाङ्गूलास्तरक्षवः ॥२६॥ [२४पू
सिंहा व्याघ्राः जंबुकाश्च द्वीपिनो नकुलास्तथा ।
N] सर्पा मूषकमार्जारा दर्दुराश्च महाबलाः ॥२७॥ [N
श्वेतं चैव महाकायं वारणं दैत्यदारणम् ।
२५पू] तथा ऐरावणं नाम नागं भद्रा व्यजायत ॥२८॥ [N
स तु सर्वगुणोपेतो गजेन्द्रः शक्रवाहनः ।

---

१. कै रा भ ब—हरिर्भद्रा । ल—हरिर्वप्रा ।
अ—हरिरूपा । भ—हरिर्भद्रा ।
२. अ—द्रंष्टाः ।
३. ल अ म—सरसा ।
४. भ च—चैव ।
५. कै—मृगान्सर्वे ।
६. ल म ब—°श्यैणां । अ—०णैणान् ।
७. कै रा ल अ म ब—शशांस्तथा ।
८. कै रा ल अ मब—नास्ति ।
९. रा—वराह । ल—वराहः ।
१०. भ च—सिंहव्या०
११. भ च मूषिक० ।
१२. रा—°वतं । भ च—तथास्वेरा० ।
१३. भ च—नारी ।
१४. कै रा ल अ म ब—भद्रा ।

N] मातङ्ग्याः सर्वमातङ्गा जज्ञिरे पुरुषर्षभ ॥२९॥ [N
२७३] दिशां गजं तु श्वेताख्यं श्वेता व्यजनयत् सुतम् ।
N] तथा वारणमुख्यांश्च दश पुत्रांश्च राघव ॥३०॥ [N
तेषां पुत्राश्च पौत्राश्च कोटिशोऽर्बुदशस्तथा ।
N] अभंगगतयश्चैव दुष्टसत्त्वा भयङ्कराः ॥३१॥ [N
धार्मिका बलिनश्चण्डा देवैरपि दुरासदाः ।
N] कामरूपा महाकाया जराशोकविवर्जिताः ॥३२॥ [N
तेषां दश सहस्राणि कुलानां सुमहौजसाम् ।
N] सरमायाः सुतौ श्वानौ यमस्यानुचरौ स्मृतौ ॥३३॥ [N
तयोः पुत्राश्च पौत्राश्च तेषां संख्या न विद्यते ।
N] भूर्ता च जज्ञिरे भूतान् रुद्रस्यानुचरान् बहून् ॥३४॥ [N
अनेकरूपवर्णांश्च ह्रस्वान् स्थूलान् वृकोदरान् ।
N] अनेकहस्तपादांश्च बह्वक्षिमुखनासिकान् ॥३५॥ [N
अनेकवेशाभरणान् दृप्तांश्चण्डरणप्रियान् ।

---

१. के—°मातंग्या । रा—मातंग्य ।
२. भ च—श्वेताक्ष ।
३. भ च—व्वज० ।
४. भ च—वामनमु० ।
५. भ च—असंगगतयश्चैव ।
६. भ च—दुष्टसत्वभ० ।
७. अ—वर्षस० । ८. ल अ म—भूताश्च ।
९. रा म—भूता । ल—भूत्वा ।
१०. रा म—क्रुद्ध० ।
११. भ च—ह्रस्वस्थूलान् । म—ह्रस्वास्थूलौ ।
१२. च—वृतोदकान् ।
१३. भ च—०वेषा० ।
१४. भ—धृष्टांश्च० ।

N] कपिशायां[1] पिशाचांश्च[2] जाता उच्छिष्टभोजनाः ॥३६॥ [N
सुरसा[3]सूत सर्पाणां सहस्रं तीक्ष्णविक्रमम् ।
N] तीक्ष्णकोपं दुराधर्षं महोग्र[4]विषदर्पितम् ॥३७॥ [N
दंष्ट्राया दंष्ट्रिणः पुत्रा व्याडाश्चा[5]मिषगृद्धिणः ।
N] विनतायाः सुतो देवोऽरुणो गरुड एव च ॥[6]३८॥ [३३पू
अरुणस्तु[7] सूर्यसखो गरुडः पतगेश्वरः ।
N] इरण्याः[8] प्रसवः[9] कन्यास्तिस्रो रघुकुलोद्वह ॥३९॥ [N
ताभ्यो लता वीरुधश्च ज्ञेया वल्ल्यस्तृणानि च ।
N] सर्वे पुष्पफला वृक्षा इरण्याः[10] प्रसवाः स्मृताः ॥४०॥ [N
रुद्राणां सुरभी माता गवां च रघुनन्दन ।
N] विश्वस्य मातरो गावो रुद्रास्त्रिभुवनेश्वराः[11] ॥४१॥ [N
विश्वेश्वरा मुकुटिनो मुण्डाः पिङ्गाः पिनाकिनः[12] ।
N] अचिन्त्या ह्यद्भुताकारा वशिनः[13] कृत्तिवाससः ॥४२॥ [N

---

१. च—कपिशायाः ।
२. अ—पिशाचायां ।
३. ब—सुरमा० ।
४. अ भ म च—महोग्रं विष० ।
५. ल ब—व्याला० । अ म—व्यादा० । च भ—°गृद्धिनः ।
६. भ च—विनतायाः सुतौ देवावरुणो गरुडश्च ह ।
७. भ च—अरुणो वै ।
८. कै—इरिण्याः । भ च—इरायाः ।
९. कै रा ल अ म ब—प्रसवो । भ—प्रसवं ।
१०. कै—°इरिण्याः ।
भ च—सर्वान्पुष्पफलान्वृक्षानिरायाः ।
११. रा—रुद्रस्त्रिभुवनेश्वरः ।
१२. ल अ म ब—कपालिनः ।
१३. भ च—वासिनः ।

तथा दुहितरौ[1] राम सुरभी[2] सुषुवे वरे[3] ।
N] रोहिणी नाम भद्रं ते गन्धर्वा च यशस्विनी ॥४३॥ [N
रोहिण्यजनयद्[4] गाश्च गन्धर्व्या वाजिनः सुताः ।
N] कद्रू[5] च नागान् संजज्ञे शेषवासुकितक्षकान्[6] ॥४४॥ [२८पू
कार्कोटकमहापद्मौ कुलमुख्यांस्तथा परान् ।
N] पञ्च कन्याश्च ताम्रायाः[7] ख्याता[8] रघुकुलोद्वह ॥४५॥ [N
क्रौञ्ची भासी तथा श्येनी धृतराष्ट्री तथा शुकी ।
१८] ताश्चापि सुषुवुः[9] कन्याः पञ्चैता लोकविश्रुताः ॥४६॥ [१७
१९पू] भासीपुत्रास्तथा भासा मयूराः काककुक्कुटाः ।
N] उलूकाश्च कपोताश्च तित्तिरा लावकास्तथा ॥४७॥ [१८पू
१९उ] श्येनी श्येनांश्च गृध्रांश्च संप्रजज्ञेऽमितौजसः । [१८उ
धृतराष्ट्री तु[10] हंसांश्च[11] कलहंसांश्च[12] भासिनी[13] ।
२०] चक्रवाकांश्च भद्रं ते प्रजज्ञे चौदकान्[14] द्विजाम् ॥४८॥ [१९

---

१. ल अ म ब—०तरो ।
२. ल अ म ब—सुषुवे सुरभी ।
३. म—वने ।
४. ल—रोहिण्या......। अ—रोहिण्या......रोहिणेयश्च ।
म—रोहिण्य......। ब—रोहिण्याः......।
५. कै रा ल अ म ब—कद्रूश्च ।
६. ल अ म ब—शेषतक्षकवासुकीन् ।
७. कै रा ल अ म ब—ता राजन् ।
८. भ च —जाता ।
९. भ च—सुषुवे ।
१०. कै रा—च ।
११. कै ल अ म ब—हसांस्तु । रा—हंसांस्तु ।
१२. अ—कलहासांश्च । म—कलाहासांश्च ।
१३. ल भ—भामिनी । च—माविनी ।
१४. ल ब—चोदकान् ।

शुकी शुकान् विजज्ञेऽथ गरुडान् विनता सुतान्[1] । [२०
२१] कल्याणगुणसंपन्नान् गरुडान् पन्नगाशिनः ॥[2]४९॥ [N
क्रौञ्ची वाध्री[3] शैशान् जज्ञे कुररान् सारसान् वकान् ।
N] स्थलजांश्चैव[4] भद्रं ते पक्षिणो जलजानपि ॥५०॥ [N
कालकायां[5] घनाधृष्टः[6] कालकेयगणो महान् ।
N] महारौद्रो महाभीमः सर्वसत्त्वभयंकरः ॥५१॥ [N
दृप्तो दैवतविद्वेषी ब्रह्मदत्तवरोऽशिवः ।
N] एवं विश्वस्य जगतो दाक्षायिण्यो[7] हि मातरः ॥५२॥ [N
मनुर्मनुष्यानसृजद् राजपुत्रान् यशस्विनः ।
३०] ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च मनुजर्षभ ॥५३॥ [२९
शिरसा[8] ब्राह्मणा जाता बाहुभ्यां[9] क्षत्रियास्तथा ।
३१] वैश्यास्तथोरुजाताश्च[10] शूद्राणां जन्म पादतः ॥५४॥ [३०
३३उ] द्वौ पुत्रौ विनतायाश्च कथितौ गरुडारुणौ ।
तस्माज्जातोऽहमरुणात् संपाती च ममाग्रजः ॥५५॥ [३३पू

१. रा—°विनतान्सु० । भ च—तनयान्विनतान्वितान् ।
२. म च—कल्याणगुणसंपन्नान् सर्व्वलक्षणपूजितान् ।
एते वै सुमहावेगा गरुडाः पन्नगाशिनः ।
३. कै ल अ म ब—वाध्रीनसां । भ—वार्ध्रीणसान् ।
४. कै रा ल अ म ब—जल० ।
५. कै—कालकायात्मजा वृष्यः ।
ल—कालकायात्मजाः धृष्यः । च—°घनावृष्यः ।
६. रा अ म—अजाधृष्यः ।
७. कै रा ल ब—°यण्यो । अ—°यिन्यो । म—०यणो ।
८. भ च—शिरस्तो ।
९. भ च—बाहुस्तः ।
१०. भ—वैश्यानथोरुजानाहुः । च—वैश्यानथूरुजानाहुः ।
ब—०स्तथोरुपादाश्च ।

३४] जटायुषं[1] तु मां विद्धि श्येनीपुत्रमरिन्दम ॥५६॥ [३३उ
योऽहं राम सहायस्ते भविष्यामि यदीच्छसि ।
३५] सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥५७॥ [३४
तव पित्रा महाबाहो संगतं मेऽभवद् दृढम् ।
N] भवान् सख्युः सुतो मह्यं भवद्भिः प्रीतिमानहम् ॥५८॥[N
स तं[2] खगं परिष्वज्य पूजयित्वा पुनः पुनः ।
N] उवाच रामो धर्मात्मा यथा त्वं तात मन्यसे ॥५९॥ [N]
तथेति[3] तं वै[4] परिगृह्य राघवो
मुदा परिष्वज्य तथैव तोषयन्[5] ।
३६] पितुर्हि शुश्राव सखित्वमात्मनो-[6]
जटायुषा संकथितं पुनः पुनः ॥६०॥ [३५
स तत्र सीतां परिधार्य[7] मैथिलीं
सहैव तेनातिबलेन पक्षिणा ।
३७] जगाम पञ्चावटिमुग्रसेवितां
रिपून् दिधक्षन्निव स त्रिलोचनः ॥६१॥ [३६

इत्यार्षे रामायणे आरण्यकाण्डे भूतोत्पत्तिर्नाम
एकोनविंशः सर्गः ॥१९॥

---

१. रा—जटायुषां ।
२. ल म—तां ।
३. ल अ म ब—तथैव ।
४. अ—संपरि० ।
५. कै भ —च सन्नतोभवत् । च—च संमतोभवत् ।
६. रा—०मात्मनं । च—०मात्मानां ।
७. ल अ म ब—परिदाय (परिधार्येति पाठे परिवार्येत्यर्थः कर्तव्यः) ।

## [वं०—२१]=[विंशः सर्गः]=[दा०—१५]

स तां पंचवटीं गत्वा नानाशकुनिनादिताम् ।
१] उवाच भ्रातरं रामो लक्ष्मणं शुभ[1]लक्षणम् ॥१॥ [१
२पू] आगताः स्मो यथोद्दिष्टमिमं देशं महर्षिणा ।
पंचव[2]टीयं सौमित्रे देशः पुष्पितपादपः ॥२॥ [२
३] सर्वतश्चा[3]र्यतां दृष्टिर्नि[4]पुणा निपुणो ह्यसि ।
आश्रमं कुरु यस्मिंस्तु देशे[5] भवति सम्मतः ॥३॥ [३
४] [6]रमेत यत्र वैदेही त्वमहं चैव लक्ष्मणा ।
तादृशो दृश्य[7]तां देशः सन्निकृष्टजलाशयः ॥४॥ [४
N] रमणीयं वनं यत्र यत्र चापो गुणान्विताः ।
५पू] सन्निकृष्टं यतश्च स्यादिध्मपुष्पकुशार्जनम् ॥५॥ [५
एवमुक्तस्तु रामेण लक्ष्मणः सं[8]हताञ्जलिः ।
६] सीतासमक्षं[9] काकुत्स्थमिदं वचनमब्रवीत् ॥६॥ [६
प[10]रवानस्मि धर्मज्ञ त्वयि वर्षशतं स्थिते ।
७] स्वयमेव रुचिर्देशे क्रियतां यत्र रोचते ॥७॥ [७

---

१. भ च—०लक्ष्मणं ।
२. च—पचावटीयं ।
३. च—चाल्यतां । म—०श्चर्यतां ।
४. कै म—दृष्टिर्निपुणां । रा—दृष्टिनिपुणां । अ भ—दृष्टिं निपुणां ।
५. कै रा ल अ म ब—देशो ।
६. ल अ म ब—रमते ।
७. कै रा अ भ म—दृश्यते ।
८. अ—साहितांजलिः ।
९. भ—सीतां स० ।
१०. रा ल—परवानस्मि ।

सुप्रीतस्तेन[1] वाक्येन लक्ष्मणस्य महाद्युतिः ।
८] विमृशन्[2] रोचयामास देशं सर्वगुणान्वितम् ॥८॥ [८
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि ।
९] प्रगृह्य हस्तं हस्तेन रामः सौमित्रिमब्रवीत[3] ॥९॥ [९
अयं देशः समः श्रीमान् पुष्पितैस्तरुभिर्वृतः ।
१०] इहाश्रमपदं[4] सौम्य यथावत् कर्तुमर्हसि ॥१०॥ [१०
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः ।
११] अदूरं[5] दृश्यते रम्या पद्मिनी हंससेविता ॥११॥ [११
यथाख्यातमगस्त्येन मुनिना भावितात्मना ।
N] इयं गोदावरी रम्या नदी पक्षिगणान्विता ॥१२॥ [१२पू
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । [१२उ
१२] नातिदूरे च सौमित्रे मृगयूथोपशोभिता ।[6] [१३पू
मयूरनादिता रम्या दृश्यते बहुकन्दरा ॥१३॥
१३] दृश्यन्ते गिरयश्चेमे शोभिता[7] बकुलैः कुञ्जैः ।[6] [१३उ
वानीरैश्चैव[8] जम्भीरैः[9] पुन्नागैश्चोपशोभिताः[10] ॥१४॥ [१५उ

---

१. ल ब—स प्रीत० ।

२. ल—विमृष्यन् । अ म ब—विमृषन् ।

३.—कै रा ल अ म—०त्रिणाब्रवीत् ।

४. ल—इत्था० ।

५. भ च—अदूरे ।

६. च—नास्ति ।

७. कै रा—फुल्लैर्बकुलैः शोभिताः । ल—०बकुले कुले ।
भ—फुल्लाबकुलशोभिताः ।

८. च—वानीरैश्च ।

९. अ—जंबीरैः । च—निमीरैश्च ।

१०.—अ च—०शोभिता ।

N] चूतैरशोकैश्च तथा चम्पकैः केतकैरपि।
N] फुल्लैर्गुल्मसहस्रैश्च तैस्तैर्बहुभिरावृताः ॥१५॥
चन्दनैः स्यन्दनैः सालैस्तमालैर्वकुलैरपि ।
२०] धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥१६॥ [१७
N] राजतैरायसैस्ताम्रैराकरैश्चैव धातुभिः । [N
N] नगाश्चला इवाभान्ति गजैः परमदर्पितैः ।
१४पू] सालैस्तालैस्तमालैश्च खर्जूरैश्चोपशोभिताः ॥१७॥ [N
इदं पुण्यमिदं रम्यमिदं बहुमृगद्विजम् ।
२१] इह वत्स्यामि सौमित्रे सहानेन पतत्रिणा ॥१८॥ [१८
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
२२] अचिरेणाश्रमं भर्तुश्चकार सुमहाबलः ॥१९॥ [१९
पर्णशालां सुविपुलां चकाराशु नरोत्तमः ।
२३] उपास्यां राघवस्यार्थे प्रेक्षणीयामनुत्तमाम् ॥२०॥ [२०
स गत्वा लक्ष्मणः श्रीमान् नदीं गोदावरीं ततः ।
२४] स्नात्वा सलिलमादाय ततः शीघ्रमुपागमत् ॥२१॥ [२३
ततः पुष्पबलिं दत्त्वा शान्तिकर्म च वीर्यवान् ।
२५] दर्शयामास रामस्य तदाश्रमपदं कृतम् ॥२२॥ [२४

१. च—भूतैः० ।
२. कै अ ब—चरायकैः । रा—चांपकैः ।
३. भ च—०वृता । ४. भ च—शालै० ।
५. कै—०कर्णैः खदिरैः ।
६. अ म—०राकारैश्चैव ।
७. ल अ म ब—नला० ।
८. भ च—नास्ति ।
९. ब—वत्स्यासि ।
१०. भ च—भ्रातु० ।
११. भ च—तत्र ।

स तं दृष्ट्वा कृतं सौम्यमाश्रमं सीतया सह ।
२६] राघवः पर्णशालायां हर्षमाहारयत्[1] तदा ॥२४॥ [२५
संप्रहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा[2] ।
२७] अतिस्निग्धं सुमधुरं[3] लक्ष्मणं वाक्यमब्रवीत् ॥२५॥ [२६
प्रीतोऽस्मि सुमहत् कर्म कृतं क्षिप्रमिदं त्वया ।
२८] प्रसादो[4] ह्यनिमित्तं ते परिष्वङ्गो[5] मया कृतः ॥२६॥ [२७
भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ।
२९] त्वया पुत्रेण धर्मात्मा नाथवान् स पिता मम ॥२७॥ [२८
एवमुक्त्वा[6] तु[7] सौमित्रिं धर्मात्मा भ्रातृवत्सलः ।
३०] बहुमूलफले देशे तस्मिन् सुखमुवास ह ॥२८॥ [२९
वैदेह्या सह[8] वै पत्न्या सुभ्रात्रा लक्ष्मणेन च ।
३१] अन्वास्यमानो[9] न्यवसत् स्वर्गलोके यथेश्वरः ॥२९॥ [३०

इत्यार्षे रामायणे आरण्यकाण्डे आश्रमनिवासो[10]
नाम विंशः[11] सर्गः ॥२०॥[12]

---

१. कै—०माहरय० ।
२. भ—तथा ।
३. ल ब— स मधुरं ।
४. क ग अ म—प्रदेशोयनिमित्त । ल—प्रदेशो यन्नि० ।
ब—प्रदेशो यन्नि० ।
५. रा—०ष्वंगे ।
६. अ—०मुक्तस्तु ।
७. भ च—च स ।
८. ल अ म ब—सभ्रात्रा ।
९. अ—०मागो ।
१०. अ—पञ्चवट्याश्रम० ।
११. के रा ल म ब च—नास्ति ।
१२. च—सर्गसमाप्तिर्न दृश्यते ।

N] एवं तस्य तदा याताः शरदश्च[1] त्रयोदश । [N
वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
१] शरद्व्यपाये हेमन्तो दृष्टिमिष्टः[2] प्रवर्त्तते[3] ॥१॥ [१
स कदाचित्[4] प्रभातायां रजन्यां रघुनन्दनः ।
२] अभिषेकार्थमुत्थाय ययौ गोदावरीं नदीम् ॥२॥ [२
प्रह्वः[5] कलशहस्तश्च[6] सीतया सह वीर्यवान् ।
३] पृष्ठतोऽनुव्रजन्[7] भ्रात्रा सौमित्रिरिदमब्रवीत् ॥[8]३॥ [३
अयं स कालः संप्राप्तः प्रभो यस्ते सदा प्रियः ।
४] अलङ्कृत इवाभाति येन संवत्सरः किल ॥४॥ [४
नीहारपरमो लोकः पृथिवी सस्यशालिनी[9] ।
५] जलान्यनुपभोग्यानि सुभोग्यो[10] हि तथानलः[11] ॥५॥ [५

---

१. च—शरदोऽर्द्धंत्रयोदश ।

२. रा ल म ब—दृष्टमिष्टाः । च—दृढामिष्टः ।

३. अ च—प्रवर्त्तत ।

४. कै रा ल अ म—०चित्प्रवृत्तायां । ब—०चिन्निवृत्तायां ।

५. ब—प्रातः ।

६. च—०हस्तस्तु ।

७. कै रा अ—०तोन्वव्रजद्भ्राता ।

८. म—नास्ति ।

९. अ च—०मालिनी ।

१०. ल—सभाग्यो । ब—स्वभोग्यो ।

११. कै रा ल अ म ब—तथानिलः । वस्तुतस्तु 'तथानल' इत्येव रम्यः पाठः । हेमन्ते अनलस्यैव सुभोग्यत्वात् ।
भ—(त्रुटितः पाठः) ।

नवाग्रायणपूजाभिरभ्यर्च्य पितृदेवताः ।
६] कृताग्र्यायणकालाश्च सन्तो विगतकल्मषाः[1] ॥६॥ [६
राज्यकामा जनपदान्[2] संपन्नरसगोरसान् ।[3]
७] विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥७॥ [७
अगस्त्यसेवितां पुण्यां सेवमाने दिशं रवौ[4] ।
८] विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥८॥[5] [८
पूर्वाह्णे दुःखसंचारा मध्याह्नसमये सुखाः ।[5]
१०] दिवसाः सुभगाः पुण्यास्त्वरितं[6] व्यतियान्ति नः[8] ॥९॥[१०
मृदुवीर्याः[7] सनीहाराः[7] पटुशीतोष्णमारुताः ।
११] शून्यारण्यास्तमोध्वस्ता दिवसा भान्ति[8] सांप्रतम् ॥१०॥[११
निवृत्ताकाशशयनाः पुष्यनेत्राश्च रात्रयः ।

---

१. रा म—०कल्मष[1] ।

२. रा—०पदा ।

३. च—प्राप्तकाला: जनपदाः संपन्नवरगोरसा: ।

४. च—दिवाकरे । भ—नष्टः पाठ: ।

५. च—अतः परमधिकः पाठः—

प्रकृत्या हिमकोशाढ्यो दूरे सूर्यश्च संप्रति ।
यथार्थनामा सुव्यक्तं हिमेन हिमवान् गिरिः ।

६. कै म—०तव्यनिपातिता: । रा अ—०तव्यानिपातित: ।
ल—०तं व्यतिपातिता: । ब—०तं विनिपातिताः ।
अत्र 'व्यतियान्ति न:' इत्येव प्रत्नो रम्यश्च पाठ: प्रतिभाति न: । अन्यकोशस्थास्त्विह सर्वे एवापपाठा एतस्यैव विकृतय: । इति स्वयं संख्यान्तु विद्वांस: ।

७. कै रा ल अ म ब—मृदुवीर्याश्च नीहारा: ।

८. च—यान्ति ।

१२] शीता ह्यतरायामा[1]स्त्रियामा [2]भान्ति साम्प्रतम् ॥११॥ [१२
रविसंक्रान्तसौभाग्यस्तुषारारुणम[3]ण्डलः ।
१३] निःश्वासर्वा[4]निवादर्शश्चन्द्रमा न प्रकाशते ॥१२॥[5] [१३
पौ[6]र्णमास्यामियं ज्योत्स्ना तुषारकलुषीकृता ।
१४] सीतेव तपसा क्षामा दृश्यते न तु शोभते ॥१३॥ [१४
प्रकृत्या शीतसंस्पर्शो हिमवृद्धश्च सांप्रतम् ।
१५] प्र[7]वाँति प[8]श्चिमो वायुः क[9]ल्ये द्विगुणशीतलः ॥१४॥ [१५
वाष्पच्छन्ना[10]न्यरण्यानि यवगोधूमवन्ति च ।
१६] शोभन्तेऽ[11]भ्युदिते सूर्ये नदन्तः क्रौञ्चसारसाः ॥१५॥ [१६
खर्जूरपुष्पाकृतिभिः शिरोभिः पुष्पगुण्ठितैः ।
१७] शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥१६॥ [१७
म[12]यूखैरपसर्पद्भिर्हिमनीहारसंवृतैः ।

---

१. च—वृद्धतरा०। (यद्यप्यस्मदाधारकोशेषु)प्रायेण समेष्वपि'ह्यतरायामा:' इत्येव पाठो लभ्यते, परं शरदि त्रियामायाः दीर्घतरदर्शनाद् वृद्धतरायामा:, इत्येव रम्यः पाठः स्यात् बङ्गदक्षिणपाठयोरप्येवमेव दृश्यते । म — ह्रस्यतरा० ।

२. म—न प्रकाशते ।

३. ब —०रावृतमंडलः ।

४. च—निश्वासांध इवादर्श० ।

५. म—नास्ति ।

६. कै रा म—पूर्णमास्या० । अ—पूर्णिमा० ।

७. म—प्रयाति ।

८. म—पश्चिमे ।

९. कै रा ल ब अ—काल्ये । म ब—काले ।

१०. ब—शष्यच्छ० ।

११. च—शोभन्ते ह्युदिते ।

१२. कै रा ल अ म ब—मयूरैरिव सर्पं० ।

१९] दूरमप्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥१७॥ [१८
अग्राह्यरूपः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
२०] संरक्तः किञ्चिदापाण्डुर्न सूर्यः शोभते क्षितौ ॥१८॥ [१९
अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
२१] वनानां दृश्यते भूमिर्निविष्टतरुणातपा ॥१९॥ [२०
अवश्यायतमोध्वस्ता नीहारतमसावृताः ।
२२] प्रसुप्ता इव दृश्यन्ते प्रफुल्ला वनराजयः ॥२०॥ [२३
बाष्पसंच्छन्नसलिलास्तेनाविज्ञेयसारसाः ।
२३] हिमार्द्रमारुतैस्तीरैः सरितो भान्ति सांप्रतम् ॥२१॥ [२४
तुषारपवनत्वाच्च मृदुत्वाद् भास्करस्य च ।
२४] शैत्यादसह्यमपि चं प्रायेण रसवज्जलम् ॥२२॥ [२५
तुषाराभिहतैः पद्मैः शीर्णकर्णिककेसरैः ।
२५] नालशिष्टा हिमैर्दग्धा नाभान्ति कमलाकराः ॥२३॥ [२६

---

१. कै—द्युतमप्युदितः ।
२. रा च—आग्रा० ।
३. च—०ण्डुरातपः ।
४. च—०शाड्वला: ।
५. कै रा ल अ म ब—०तरुणा तथा ।
६. ल ब—शस्यसं० ।
७. च—वाष्पसंछिन्नसलिला रुताविज्ञेयसारसाः ।
८. ल—हिमार्द्रमारुतै० ।
९. च—तुषारपरुषत्वाच्च ।
१०. च—शैत्यादगोत्रजमपि ।
११. ल—पद्मैश्चशीर्णक० । च—०केशरैः ।
१२. ल—नालमिष्टा । ब—नालाश्लिष्टाः ।
१३. ल ब—हि संदिग्धा ।
१४. च—न भान्ति ।

असौ[1] च पुरुषव्याघ्र काले दुःख[2]तपस्विनि ।
२६] तपश्चरति दुःखार्तस्त्वद्भक्त्या भरतः पुरे[3] ॥२४॥ [२७
त्यक्त्वा राज्यञ्च मानञ्च भोगांश्च रुचिरान् बहून् ।
२७] तपस्वी नियताहारः [4]शीते शेते[5] महीतले ॥२५॥ [२८
स हि[6] वेलामिमां नूनमभिषेकार्थमुद्यतः ।
२८] वृतैः[7] प्रकृतिभिर्भक्त्या प्रयाति [8]सरयूं नदीम् ॥२६॥ [२९
अत्यन्तदुःख[9]संवृद्धः सुकुमारो हिमार्दितः ।
२९] कथं चापर[10]रात्रेषु [11]सरयूमवगाहते ॥२७॥ [३०
जितः स्वर्गो मम भ्राता भरतेन महात्मना ।
३१] वनस्थमपि तापस्ये त्वां यान्तमनुयाति [12]यः ॥२८॥ [३२
पि[13]त्र्यादेशात् तु गच्छन्ति मातुलेयं नरा इति ।

---

१. च—अस्मिन् स ।

२. च—दुःखे तपस्विनाम् ।

३. कै रा ल म ब—पुरा । अ—पुरा ।

४. ल अ म ब—शीतः ।

५. कै रा म—शीते । च—नास्ति ।

६. अ—ह ।

७. ल ब—वातः ।

८. च—शरयूं ।

९. म—संवृद्धिः । ब—०संवद्धः ।

१०. च—वापर० ।

११. च—शरयूम० ।

१२. कै रा अ म ब—तः ।

१३. रा—०देशां ।

३२] लोकप्रवादः साधुत्वात् भरतेन बहिष्कृतः ॥२९॥ [३४
भर्ता दशरथो यस्याः साधुश्च भरतः सुतः ।
३३] कथं तु सा वा कैकेयी तादृशी मनुजेश्वरम् ।
N] जनयामास धर्मज्ञमिक्ष्वाकुकुलभास्करम् ॥ ३०॥
इत्येवं लक्ष्मणे वाक्यं स्नेहात् वदति राघवम् । [३५
३४] परिवादं जनन्याश्च न सहन् राघवोऽब्रवीत् ॥३१॥ [३६
न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन ।
३५] तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥३२॥ [३७
निश्चितैवं हि मे बुद्धिर्वनवासाय लक्ष्मण ।
३६] भरतस्नेहसंयुक्ता बालिशीक्रियते पुनः ॥३३॥ [३८
इत्येवं कथयन्नेव प्राप्य गोदावरीतटम् ।
३७] चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥३४॥ [४०
तर्पयित्वा च सलिलैः स्वान् पितॄन् दैवतानपि ।

---

१. रा अ—प्रवादाः ।
२. ल अ म—बहिष्कृताः ।
३. च—साम्बा ।
४. कै—नास्ति ।
५. कै रा अ म—लक्ष्मण ।
६. कै रा ल अ म ब—तामेवै० ।
७. कै रा अ म—निश्चितेन ।
८. च—बालिशा ।
९. कै रा अ—कर्णायन्नेव । म—वर्णयन्नेव ।
१०. च—गोदावरीं नदीं ।
११. च—सलिलं ।
१२. च—दैवतान्यपि ।

३८] ववन्दाते मुहुः सूर्यं दे[1]वताश्च समाहितौ ॥३५॥ [४२

कृताभिषेकश्च[2] रराज रामः

सीताद्वितीयः सह लक्ष्मणेन ।

कृताभिषेकः सह शैलपुत्र्या

३९] रुद्रः सविष्णुर्भगवा[3]न्निवेशः ॥३६॥ [४३

इत्यार्षे रामायणे आरण्यकाण्डे[4] हेमन्तव[5]र्णनं

नाम एकविंशः[6] सर्गः ॥२१॥

---

१. च—दैवताश्च ।

२. च—°भिषेकस्तु ।

३. अ म—भगवान्निवेशः ।

४. कै च—नास्ति ।

५. कै रा च—°वर्णनो ।

६. कै रा ल म व च—नास्ति ।

कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
१] तस्माद् गोदावरीतीरादाजगाम स्वमाश्रमम् ॥१॥ [१
३पू] स रामः पर्णशालायां[1] कान्तया सह सीतया ।
११उ] विरराज महाराजो[2] रोहिण्याऽह्नीव[3] चन्द्रमाः ॥२॥ [४
N] कृत्वा पौर्वाह्णिकं सर्वं पर्णशालामुपागमत्[4] । [२उ
३उ] लक्ष्मणेन सह[5] भ्रात्रा चकार विविधाः कथाः ॥३॥ [३उ
N] अथासीनस्य रामस्य कथासंसक्तचेतसः[6] ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥४॥ [५
१२] सा तु शूर्पणखी[7] नाम दशग्रीवस्य रक्षसः[8] ।
भगिनी राममागम्य ददर्श त्रिदशोपमम् ॥५॥ [६
१३] सिंहोरस्कं महाबाहुं[9] पद्मपत्रनिभेक्षणम् । [७पू

---

१. च—°शालायामासीनः ।

२. कै रा ल म ब—महाराज ।

३. च—रोहिण्या सह ?

४. रा—°मुपागतम् ।

५. म—च भ्रात्रा च ।

६. ब—°संरक्तचेतसः ।

७. च—शूर्पणखी । (अत्र संज्ञाया अविवक्षितत्वान् ङीप्णत्वयोरभावाच्छूर्पनखी इत्येव हृद्यः पाठः । अत्र नाम शब्दः प्रसिद्धौ । अन्यथा शब्दशास्त्रविरोधः स्यात् ।

रा अ—सर्पनखी ।

८. रा म—राक्षसः ।

९. रा—महाबाहो ।

१४पू] बभूवेन्द्रसमं दृष्ट्वा राक्षसी काममोहिता ॥[1]६॥ [९उ
१८पू] सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् । [८उ
७] राममिन्दीवरश्यामं संरक्तकमलेक्षणम्[2] ॥७॥ [९पू
१५उ] सुमुखं दुर्मुखी रामं वृत्तपार्श्वं[3] महोदरी ।
सुरूपाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥८॥ [१०
१६] अतिरूपा[4] सुरूपं[5] सा सुस्वरं भैरवस्वरा ।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥९॥ [११
११७] न्यायवृत्तं[6] सुदुर्वृत्ता प्रियमप्रियदर्शना ।
८उ] शरीरजसमाविष्टा[7] राक्षसी राममब्रवीत् ॥१०॥ [१२
जटी तापसरूपेण सभार्यः शरचापभृत्[8] ।
२६] आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥११॥ [१३
एवमुक्तस्तु राक्षस्या शूर्पनख्या[9] स राघवः ।

---

१. रा—नास्ति ।

२. च—°कमलेक्षणे ।

३. कै रा ल अ म व—वृत्तपार्श्वा । यद्यप्यस्मदाधारपुस्तकेषु 'वृत्तपार्श्वे' ति (शूर्पणखाविशेषणमेव) प्रायिकः पाठस्तथाप्यष्टमादशमश्लोकान्तं सर्वत्र शूर्पणखाया रामापेक्षिकापकर्षकथन एव कवेरुपक्रमाद् वृत्तपार्श्वत्वस्य महोदरत्वस्य च धर्मस्यैकत्र व्यक्तौ विरुद्धत्वाद् "वृत्तपार्श्वमि" ति (रामविशेषणमेव) सुभगः पाठ इत्यालोच्य स एव मूले न्यस्तः ।

४. कै रा—अतिरूपं । च—स्वभिरूपं ।

५. कै रा—सुरूपा । ल अ—स्वरूपं । च—विरूपा सा ।

६ कै रा ल अ म व—°वृत्तिं ।

७. च—°समादिष्टा ।

८. कै—°चापधृत् । रा—°चापकृत् । भ च—°चापधृक् ।

९. भ च—सूर्पणख्या इत्ययमपपाठः । संज्ञाया अविवक्षितत्वेन "पूर्वपदा" दिति णत्वस्य "नखमुखादि"ति ङीप्निषेधस्य चाभात् "स्वाङ्गाच्चो-पसर्जना" दिति ङीष्विधेः ।

३०] ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥१२॥ [१४
आसीद् दशरथो नाम राजा त्रिदशविक्रमः ।
३१] तस्याहमग्रजः पुत्रो रामो नाम जनश्रुतः[1] ॥१३॥ [१६
भ्राताऽयं लक्ष्मणो नाम कनीयानेव[2] सुव्रतः ।
इयं भार्या च वैदेही मम सीतेति विश्रुता ॥१४॥ [१७
३२] नियोगात् तु नरेन्द्रस्य पितुर्मातुश्च धर्मतः ।
३३पू] धर्मार्थी धर्मदर्शी च वनवासं समागतः ॥१५॥ [१८
३४] त्वां तु विज्ञातुमिच्छामि कथ्यतां कासि कस्य च ।
इहाद्य किं निमित्तं त्वमागता ब्रूहि कारणम् ॥१६॥ [२०
३५] साब्रवीत्तद् वचः श्रुत्वा राक्षसी मदनार्दिता ।
श्रूयतां राम वक्ष्यामि सह भ्रात्रा वचो मम ॥१७॥ [२१
३६] अहं शूर्पनखी[3] नाम राक्षसी कामरूपिणी ।
३७पू] अरण्यं[4] विचराम्येका घोररूपा[5] भयङ्करी ॥१८॥ [२२
रावणो नाम मे भ्राता विश्रुतो राक्षसाधिपः । [२३पू
३८] विभीषणश्च धर्मात्मा न च राक्षसचेष्टितः ॥१९॥ [२४उ
प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः । [२४पू
३९] प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥२०॥ [२५पू
त्वामहं सर्वभिरामश्च[6] प्रयाता पूर्वदर्शनात्[7] ।

---

१. ल—जनः श्रुतः । भ च—जनैः श्रुतः ।

२. भ च—०नेष ।

३. अ—सूर्पनखी । च—स्वर्पनखी । भ च—सूर्पणखी ।

४. ल —आरण्यं ।

५. कै रा ल म—घोररूपभ० । भ च—घोरं सत्वभ० ।

६. रा ल ब—०रामश्च ।

७. च—राम तत्पूर्वं० ।

४०] चिराय भव मे भर्ता सीतया किं तवानया ॥२१॥ [२६
विरूपा[1] विकृता चेयं न हि वा सदृशी तव ।
४१] अहमेवानुरागाच्च[2] भार्यारूपेण पश्य माम् ॥२२॥ [२७
इमां विरूपामसतीं भक्षयिष्यामि मानुषीम्[3] ।
४३] अनेन सह ते भ्रात्रा द्वितीयेन गतायुषा ॥२३॥ [२८
ततः पर्वतशृङ्गाणि[4] विविधानि वनानि च[5] ।
४४] पश्यन् सह मया कामं दण्डकान् विचरिष्यसि ॥२४॥[२९
इत्येवमुक्त्वा काकुत्स्थं प्रहस्य मदिरेक्षणा । [३०पू
N] देवी[6] सलक्ष्मणां[7] सीतां[8] बभूवावस्थिता पुरः[9] ॥२५॥ [N
संप्रहासनिमित्तं[10] तां रामः शूर्पनखीं[11] ततः[12] ।
४६] इदं वचनमारेभे वक्तुं वचनकोविदः ॥ [३०उ
N] दृष्ट्वा लक्ष्मणमासाद्य स्थितामग्रे स राक्षसीम् ॥२६॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे शूर्पणखादर्शनं
नाम द्वाविंशः[13] सर्गः ॥२२॥[14]

---

१. भ च—विकृता च विरूपा च नेयं हि ।
२. रा ल म ब—०नुरागाश्च ।
३. ल अ म ब—मानवीं ।
४. कै रा ल अ म ब—शृङ्गानि ।
५. ल ब—रम्याणि विविधानि च ।
६. भ—देवीं० ।
७. भ च—०लक्ष्मणां ।
८. भ च—सीतां । ९. कै रा—पुनः ।
१०. कै रा अ म—स प्रहास० ।
११. ल म ब—शूर्पनखां । भ च—सूर्पणखीं ।
१२. ल म ब—शूर्पनखा । भच —सूर्पणखी ।
१३. कै रा ल भ म ब—नास्ति ।
१४. च—सर्गसमाप्तिर्न दृश्यते ।

तां च शूर्पनखीं रामः कामबाणबलार्दिताम् ।
१] श्लक्ष्णया स्वस्थया वाचा स्मितपूर्वमथाब्रवीत् ॥१॥ [१
कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
२] त्वद्विधानां च नारीणां सुदुःखाय सपत्नता ॥२॥ [२
अनुजस्त्वेष मे भ्राता गुणवान् प्रियदर्शनः ।
३] श्रीमांश्चाकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥३॥ [३
अपूर्वभार्यो भार्यार्थी तरुणः प्रियदर्शनः ।
४] अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥४॥ [४
५] एनं भज विशालाक्षि भर्तारं भ्रातरं मम ।
N] असपत्नं वरारोहे मेरुमर्कप्रभा यथा ॥५॥ [५
इति रामेण सा तूक्ता राक्षसी मदनार्दिता ।
६] विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥६॥ [६
अस्य रूपस्य ते युक्ता भार्याऽहं वरवर्णिनी ।
७] मया सह सुखी सर्वान् दण्डकान् विचरिष्यसि ॥७॥ [७

---

१. भ च—तु ।
२. भ च—सूर्पणखीं ।
३. कै रा—भवती । अ—भद्रेहं ।
४. रा—०दर्शना ।
५. च—श्रीमानकृत० ।
६. कै रा ळ अ म ब—भार्यार्थं ।
७. रा—एवं । च—एनं ।
८. कै रा ब—सर्वं दण्डकं ।
९. अ—प्रच० ।

एवमुक्तस्तु सौमित्री[1] राक्षस्या वाक्यकोविदः ।
८] ततः शूर्पनखीं[2] वाक्यं लक्ष्मणो युक्तमब्रवीत्[3] ॥८॥ [८
कथं दासस्य दासी त्वं भार्या भवितुमर्हसि ।
९] योऽहमार्येण परवान् भ्रात्रा कनकवर्णिनि ॥९॥ [९
समृद्धार्थस्य सिद्धार्था मुचिता कामरूपिणी ।
१०] आर्यस्य त्वं विशालाक्षि भार्या भवितुमर्हसि ॥१०॥ [१०
एतां विरूपामसतीं करालां निर्णतोदरीम्[4] ।[5]
११] भार्यां वृद्धां[6] परित्यज्य त्वामेवैष भजिष्यति ॥११॥ [११
को हि रूपमिदं श्रेष्ठं सन्त्यज्य वरवर्णिनि ।
१२] मानुषीषु[7] वरारोहे भावं कुर्याद् विचक्षणः ॥१२॥ [१२
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी[8] ।
१३] राक्षसी तद् वचः श्रुत्वा परिहासाविचक्षणा[9] ॥१३॥ [१३
रामं तु पर्णशालायामुपविष्टं महाबलम् ।
१४] ससीतं तं दुराधर्षमवदत् काममोहिता ॥१४॥ [१४
इमां[10] विरूपामसतीं करालां निर्णतोदरीम्[11] ।
१५] भार्यां वृद्धामवष्टभ्य मां त्वं न बहुमन्यसे ॥१५॥ [१५

---

१. ल अ म ब—राक्षस्या सौमित्रिर्वा० ।
२. च—सूर्पणखीं ।
३. कै रा ल म ब—०वाक्यम० । अ—०णद्य० । च—०मुक्तम ।
४. कै रा ल अ म ब—निर्नतो० ।
५. च—नास्ति ।
६. भ च—शीघ्रं ।
७. ब—मानुषेषु ।
८. कै रा ल अ ब—निर्न० । म—भिन्नतो० । च—निम्नतोद० ।
९. म—०णाः । च—०णं ।
१०. भ च—एतां ।
११. कै रा ल अ म ब—निर्न० । च—निम्नतो० ।

अद्येमां भक्षयिष्ये[1]ऽहं प्रेक्षतस्[2]तव मानुषीम् ।
१७] त्वया सह चरिष्यामि निःसापत्न्या[3] यथासुखम् ॥१६॥ [१६
इत्युक्त्वा[4] मृगशावाक्षीमलातसदृशेक्षणा ।
१८] अभ्यधावत संक्रुद्धा महोल्का रोहिणीमिव ॥१७॥ [१७
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
१९] निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥१८॥ [१८
क्रूरैरनार्यैः सौमित्रे सम्प्रहासः[5] कथञ्चन ।
२०] न कार्यः पश्य वैदेहीं[6] कथञ्चित् सौम्य जीवति ॥१९ [१९
इमां विरुद्धां दुर्वृत्तां[7] महोदरभयानकाम् ।
२१] राक्षसीं पुरुषव्याघ्र निवर्तयितुमर्हसि ॥२०॥ [२०
इत्युक्तो लक्ष्मणः क्रुद्धस्ततो रामस्य पश्यतः ।
२२] विकृष्य खड्गं चिच्छेद कर्णनासे महाबलः ॥२१॥ [२१
निकृत्तकर्णनासा[8] तु विस्वरं सा विनद्य वै ।
२३] यथागतं विदुद्राव घोरं शूर्पनखी[9] वनम् ॥[10]२२॥ [२२

---

१. भ च—भक्षयित्वाहं ।

२. अ—प्रेक्ष्यातस्तव । म—प्रेक्षितस्तव ।

३. कै अ—निस्सपत्न्या । रा—निसपत्न्या । भ—निः सपत्ना ।
म—निः सुपत्न्या । च—निः सपत्न्य ।

४. कै रा ल अ म ब—इत्युक्ता ।

५. च—०हासं ।

६. अ च—वैदेही ।

७. कै रा अ म—०महोदरींभया० । भ च—दुर्वृत्तामनिवृत्तां महोदरीं

८. कै रा म—निकृत्यकर्णनासा । ल ब—निकृत्यकर्णनासे ।
अ—निकृत्यकर्णा० । म—निकृत्यकर्णनासां ।

९. भ च—शूर्पणखी ।

१०. भ च—अतः परमधिकः पाठः—
सा विरूपा महाघोरा बहुधा रुधिरोक्षिता ।

सा विरूपा प्रकृत्यैव वैरूप्यं च गता परम् ।
२४] ननाद विविधान् नादान् यथा प्रावृषि तोयदः ॥२३॥ [२३
सासृक्क्षरन्ती विविधं बहुधा रुधिरोक्षिता ।
२५] प्रगृह्य बाहुं तर्जन्ती प्रविवेश महद् वनम् ॥२४॥ [२४
ततश्च सा राक्षससेविते वने
खरं जनस्थानगतं विरूपिता ।
उपेत्य वै भ्रातरमुग्रतेजसं
२६] पपात भूमौ गगनाद् यथाशनिः ॥२५॥ [२५
ततः सभार्यं भयमोहपीडिता
सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता
N] शशंस सर्वं भगिनी खरस्य सा ॥२६॥ [२६

इत्यार्षे रामायणे आरण्यकाण्डे शूर्पणखाविरूपकरणं
नाम त्रयोविंशः सर्गः ॥ २३ ॥

---

१. भ च—चागता ।
२. कै रा—तोयदाः ।
३. भ च—बाहू ।
४. रा—०गतिं ।
५. कै रा ल अ म ब—विरूपा ।
६. ल—०तौक्षिता ।
७. रा—परीयसा ।
८. कै भ—नास्ति ।
९. कै रा ल अ म ब—शूर्पन० । भ च—सूर्पणखीविरूपकरणो ।
१०. कै रा ल भ म च—नास्ति ।

तां तथा[२] पतितां दृष्ट्वा[१] विरूपां शोणितोक्षिताम् ।
१] भगिनीं[३] क्रोधसम्पन्नां[४] खरः पप्रच्छ राक्षसः ॥१॥ [१
बलविक्रमसम्पन्ना[५] कामगा कामरूपिणी ।
२] इमामवस्थां नीता त्वं केनान्तकसमा युधि ॥२॥ [५
देवगन्धर्वभूतानामृषीणां च महात्मनाम् ।
३] कोऽयमेवं महावीर्यस्त्वां विरूपां चकार ह ॥३॥ [६
न हि पश्यामि तं लोके यः कुर्यादप्रियं मम ।
४] अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥४॥ [७
तस्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः[६] ।
५] सलिले क्षीरमासक्तं निष्पिबेत् सारसो यथा ॥५॥ [८
निहतस्य मया संख्ये शरसंकृत्त[७]मर्मणः ।
६] सफेनं रुधिरं तप्तं[८] मेदिनी कस्य पास्यति ॥६॥ [९
कस्य पत्ररथाः[९] कायान्मांसान्युत्कृत्य संत्वराः[१०] ।
७] प्रहृष्टा भक्षयिष्यन्ति निहतस्य[११] मया युधि ॥७॥ [१०

---

१. ल अ म ब—दृष्ट्वा ।
२. ल अ म ब—तद्वद्
३. ल ब—भ्राता तु ।
४. ल ब—०संपन्नः । भ च—०संतप्तां ।
५. कै रा ल म—बलिवि० ।
६. कै रा ल अ म ब—जीवितं शरैः ।
७. रा ल—संकृत्तु० । म—सकृत० ?
८. भ च—सफेनं ।
९. रा ल अ—०रथा । च—०रथात् ।
१०. अ—सत्वरः । भ च—सत्वरं । ११. म—निहि० ।

तं[1] न[1] देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
८] मयोपसृष्टं कृपणं शक्तास्त्रातुं महामृधे ॥८॥ [११
उपलभ्य शनैः संज्ञां तं[2] मे[2] शंसितुमर्हसि ।
९] येन त्वं दुर्विनीतेन रणे विक्रम्य[3] निर्जिता ॥९॥ [१२
इति भ्रातृवचः श्रुत्वा क्रुद्धस्य तु विशेषतः ।
१०] ततः शूर्पनखी[4] वाक्यं सबाष्पमिदमब्रवीत् ॥१०॥ [१३
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
११] पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥११॥ [१४
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
१२] देवौ वा मानुषौ वा तौ[5] न तर्कयितुमुत्सहे ॥१२॥ [१६
तरुणी[6] रूपसम्पन्ना सर्वाभरणभूषिता ।
१५] दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥१३॥ [१७
ताभ्याँमुभाभ्यां[7] सम्भूय प्रमदामधिकृत्य ताम् ।
१६] इमामवस्थां नीताऽस्मि यथानाथवती तथा ॥१४॥ [१८
तस्यास्त्वनृजुवृत्तायास्तयोश्च[8] हतयोस्त्वया[9] ।
१८] सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥१५॥ [१९

---

१. कै रा ल अ म च—तत्र । भ—तत्र ।
२. कै रा अ भ म च—तन्मे ।
३. भ—०क्रमनि० ।
४. भ च—सूर्पणखी ।
५. ल ब—तौ वा ।
६. च—तरुणा ।
७. रा—ताभ्यां शुभाभ्यां ।
८. भ च—०श्चानृजु० । कै—०स्तयोस्तु । ब—०स्त्वनृण्डवृत्ता० ।
९. च—०स्तथा ।
भ—पुनरपरहस्तेन शोधयित्वा मूलानुसारा कृतः ।

एत्र मे परमः कामः कृतस्तात भवेत् त्वया ।
१९] तयोस्तस्याश्च रुधिरं यत् पिबेयं चमूमुखे ॥१६॥ [२०
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ।
२०] व्यादिदेश ततः क्रुद्धो राक्षसानन्तकोपमान् ॥१७॥ [२१
मानुषौ रूपसम्पन्नौ चीरकृष्णाजिनाम्बरौ[1] ।
२१] प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥१८॥ [२२
तौ हत्वा[2] तां च दुर्वृत्तामुपावर्तितुमर्हथ ।
२२] इयं च रुधिरं तेषां भगिनी मम पास्यति ॥१९॥ [२३
मनोरथो[3]ऽयमिष्टोऽस्यां भगिन्या मम राक्षसाः ।
२३] शीघ्रं सम्पद्यतां गत्वा तौ प्रमथ्य[4] स्वतेजसा ॥२०॥ [२४
युष्माभिर्निहतौ[5] दृष्ट्वा तावुभौ भ्रातरौ रणे ।
२४] इयं प्रीता च हृष्टा[7] च क्षतजं[6] युधि पास्यति ॥२१॥ [२५
इति प्रतिसमादिष्टा राक्षसाः शूलपाणयः ।
२५] तत्राजग्मुस्तया सार्धं राघवौ यत्र तिष्ठतः ॥२२॥ [२६
ततस्तु ते तत्र समृद्ध[8]तेजसं
तथाऽतितीक्ष्णप्रहसांश्च[9] राक्षसाः ।
न शेकुरेनं[10] सहसा प्रमर्दितुं
२६] वने द्विपा[11] दीप्तमिवाग्निमुत्थितम् ॥२३॥ [२७

इत्यार्षे रामायणे आरण्य[12]काण्डे राक्षसप्रेषणं[13]
नाम [14]चतुर्विंशः सर्गः ॥२४[15]॥

---

१. कै रा—०कृष्णांबरस्रजौ । २. कै रा—हित्वा ।
३. अ—०थोवशिष्टोस्या । म—०थोवासिष्टोस्या । ४. अ म—प्रमाथ्य ।
५. रा—यूयं । ६. म—कृतजं । ७. ल अ म—०दृष्टा ।
८. ल म—सासिद्ध० । ब—सामिद्ध० । ९. भ च—०क्ष्णाः प्रसह्याश्च ।
१०. च—०रेतं । ११. भ च—द्विपो । १२. भ च—नास्ति ।
१३. भ च—०प्रेषणो । १४. कै रा ल भ म ब च—नास्ति ।
१५. भ—॥ २५ ॥

सा तु शूर्पनखी[1] घोरा राघवाश्रममागता ।
१] राक्षसानाचचक्षे[2]ऽथ राघवौ[3] सह सीतया ॥१॥ [१
ते रामं पर्णशालायामुपविष्टं महाबलम् ।
२] ददृशुः सीतया सार्धमासीनं लक्ष्मणेन[4] च ॥२॥ [२
तान् दृष्ट्वा राक्षसान् घोरानागतांस्तां[5] च राक्षसीम् ।
३] अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥३॥ [३
मुहूर्तं भव सौमित्र सीतया[6] प्रत्यनन्तरम् ।
४] इमानद्य[7] वधिष्यामि पदवीमागतानहम् ॥४॥ [४
वाक्यमेवं तु तच्छ्रुत्वा[8] रामस्य विदितात्मनः ।
५] उत्थाय लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥५॥ [५
राघवोऽपि महच्चापं[9] कार्तस्वरविभूषितम् ।
६] चकार सज्यं[10] धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥६॥ [६
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
७] प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकं वनम् ॥७॥ [७
फलमूलाशने युक्तौ तापसौ धर्मसंहितौ ।

---

१. भ च—सूर्पणखी ।

२. भ च—०सानां चच० ।

३. ल अ—राघवो ।

४. च—दक्षिणेन ।

५. भ च—०गतां तां ।

६. भ च—सीतायाः । ७. रा—इमामद्य ।

८. भ—उत्तिष्ठन् । च—तथेति ।

९. रा—महश्चापं । च—महच्चापं ।

१०.—कै भ च—सज्जं । रा—सज्जं ।

८] प्रविष्टौ दण्डकारण्यं किमर्थमुपधावत ॥८॥ [८
युष्मत्[1] पापात्मकर्मभ्यो विप्रकारान्महावनम् ।
९] ऋषीणां विनियोगेन प्राप्तौ च सशरासनौ ॥९॥ [९
तिष्ठतात्रैव हे[2] दुष्टा नोपसर्पितुमर्हथ ।
१०] यदि प्राणैरिहार्थो[3] वो[4] निवर्तध्वं निशाचराः ॥१०॥ [१०
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ।
११] ऊचुरेवा[5]तिसंरब्धाः शूलमुद्गरपाणयः ॥११॥ [११
क्रोधसंरक्तनयना रामं रक्तान्तलोचनम्[6] ।
१२] परुषा[7] मधुराभाषं[8] धृष्टा[9] धृष्टपराक्रमम्[10] ॥१२॥ [१२
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
१३] त्वमेव मोक्ष्यसे प्राणानद्यास्माभिर्हतो मृधे[11] ॥१३॥ [१३
का हि ते शक्तिरेकस्य बहूनां[12] रणमूर्धनि ।
१४] अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥१४॥ [१४
एष बाहुप्रसक्तैर्नः परिघप्रासतोमरैः ।
१५] प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥१५॥ [१५

---

१. रा—युष्माभ्युत्पातकर्मभ्यो । अ—०कर्तृभ्यो ।
२. अ—ते ।
३. च—०हार्थं । ४. ल ब—वा । म—वै ।
५. भ च—ऊचुर्वचः सुसंरब्धाः ।
६. च—संरक्तलो० ।
७. अ—पुरुषा ।
८. कै रा ल अ म ब—०भासं ।
९. रा ल अ म ब—धृष्टा ।
१०. अ म—धृष्ट० ।
११. ल अ म ब—प्राणान्हतोऽस्माभिर्महामृधे ।
कै रा—०र्हतो रणे ।
१२. कै रा ल अ म—बहूनां ।

इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश ।
१६] उद्यतायुधनिस्त्रिंशा रामं समभिदुद्रुवुः ॥१६॥ [१६
अभिपत्य ततो वेगाच्चिक्षिपुस्ते निशाचराः ।
१७] परिघान् पट्टिशान् प्रासांश्चतुर्दश चतुर्दश ॥१७॥ [N
चतुर्दशभिरेकाग्रे राघवो निशितैः शरैः ।
१८] शस्त्राण्यस्त्राणि रक्षोभ्यश्चिच्छेद खगपत्रिभिः ॥१८॥ [१७
ततोऽपरान् महाघोरान् राघवोऽलघुविक्रमः ।
१९] जग्राह परमक्रुद्धश्चतुर्दश शितान् शरान् ॥१९॥ [१८
गृहीत्वा धनुरुद्यम्य लक्ष्यानुद्दिश्य राक्षसान् ।
२०] मुमोच राघवो बाणान् वज्राणीव शतक्रतुः ॥२०॥ [१९
ते शरास्तानि रक्षांसि भित्त्वा बर्हिणलक्ष्मणः ।
२२] चतुर्दशस्तु निष्पेतुश्चतुर्दश शिलीमुखाः ॥२१॥ [N
ते रुक्मपुंखा निशिताः प्रदीप्ता हेमभूषिताः ।
२१] अन्तरिक्षे महोल्कानां बभूवुस्तुमुलस्वनाः ॥२२॥ [२०
ते भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।
२४] निपेतुः शोणितोद्गारा विनिर्कृत्ता निशाचराः ॥२३॥ [२२
तान् भूमौ पतितान् दृष्ट्वा राक्षसी क्रोधमूर्छिता ।
२६] परित्रस्ता पुनर्घोरं रराव सुमहास्वरा ॥२४॥ [२३

१. अ च—०मुक्ता ।
२. म—उत्थिता० ।
३. कै रा ल अ म ब—०रेकोग्रे ।
४. च—अस्त्राण्यस्त्राणि ।
५. कै रा ल अ म ब—बर्हि ।
६. च—नास्ति ।
७. च—निःपेतुः ।
८. अ च—०वृत्ता ।
९. कै—०स्वरं । अ च—०स्वना ।

ते रामशरनिर्भिन्नाः पेतुरुर्व्यां निशाचराः ।
N] बृहच्चाला[1] महारण्ये दग्धा इव दवाग्निना ॥२५॥ [N
सा नदन्ती महानादान् जवाच्छूर्पनखी[2] पुनः ।
२७] जगाम भ्रातरं द्रष्टुं खरं तं सहदूषणम् ॥२६॥ [२४
अभिगम्याब्रवीत्[3] सा तु किञ्चिद् वै शुष्कशोणिता ।
२८] पपात पुनरावृत्ता सनिर्यासेव सल्लकी[4] ॥२७॥ [२५
निपातितांस्तान् बलिनस्तु राक्षसान्
शशंस सा शूर्पनखी[5] पुनः पुनः ।
वधं तु[6] घोरं[7] निखिलेन रक्षसा-
N] मतीव सार्ता भगिनी खरस्य ह ॥२८॥ [२७

इत्यार्षे[8] रामायणे[9] आरण्यकाण्डे राक्षसवधो
नाम पञ्चविंशः सर्गः ॥२५॥

---

१. च—बृहत्ताश्च ।
२. रा—जवां शूर्पन० ।
ल—जवाच् शूर्पन० । म—जवं शूर्पन०
ब—जवाः शूर्पन० । च—जवा सूर्प्प० ।
३. ल ब—°न्मातुः ।
४. रा अ म—मल्लकी ।
५. भ च—सूर्पणखी ।
६. भ—सुघोरं ।
७. कै—नास्ति ।
८. रा—उत्तरकांडे । भ च—नास्ति ।
९. कै रा ल भ म ब च—नास्ति ।

तां पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पनखीं खरः ।[1]
१] उवाच रोषताम्राक्षो भगिनीं पुनरागताम् ॥१॥ [१
यदा त्विदानीं शूरास्ते राक्षसा रुधिराशनाः ।[2]
२] त्वत्प्रियार्थं मयोत्सृष्टाः किमिदं रुद्यते[3] पुनः ॥२॥ [२
भक्ताश्चैवानुरक्ता हि हिताश्च मम सन्निभाः ।
३] न ते च वचनं कुर्युर्जीवितापेक्षया मम[4] ॥३॥ [३
उच्यतां कारणं किञ्चित् पुनर्यत् त्वमुपागता[5] ।
४] हा नाथेति वदन्ती त्वं वाष्पदूषितलोचना ॥४॥ [४
अनाथवद् विलपसे[6] किं त्वं नाथे मयि स्थिते ।
५] उत्तिष्ठोत्तिष्ठ मा शोचं[7] वैक्लव्यं त्यज्यतामिदम् ॥५॥ [५
सा त्वेवं तेन दुर्धर्षा खरेण परिसान्त्विता[8] ।
६] विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥६॥ [६
ननु त्वाहमनुप्राप्ता[9] कृत्तश्रवणनासिका[10] ।

१. रा ल—क्रोधाः शूर्पन० ।
भ च—०त्सूर्प० । म ब—क्रोधा शूर्पन० ।
२. कै रा ल अ म ब—नास्ति ।
३. रा—रुध्यते ।
४. भ च—कुर्युर्वचनं जीवि० ।
५. रा—पुनर्धन्वमु० । भ च—०त्वमिहागता ।
६. रा म—०वर्षिलपसे ? ।
७. च—शोचेः ।
८. च—०शांत्विता ।
९. कै रा ल अ म ब—०मनुप्राप्य ।
१०. भ च—हृतश्रव० ।

N] शोणितौघपरिक्लिन्ना त्वया च स्वागतं कृतम् ॥७॥ [७
प्रेषिताश्च त्वया शूरा राक्षसास्ते चतुर्दश ।
७पू] निहन्तुं राघवं घोरा मत्प्रियार्थं सलक्ष्मणम् ॥८॥ [८
ते तु रामेण सामर्षाः शूलपट्टिश[1]पाणयः ।
७उ] उपेयुषो हताः सर्वे सायकैर्मर्मभेदिभिः ॥९॥ [९
तान् क्षितौ पतितान् दृष्ट्वा दग्धमूलानिव द्रुमान् ।
८] [2]राघवस्य महत् कर्म परित्रासोऽयमागतः ॥१०॥ [१०
साऽस्मि भीता समुद्विग्ना विषण्णा च निशाचर ।
९] शरणं त्वामनुप्राप्ता [3]सर्वशो भयदर्शिनी ॥११॥ [११
विषादनक्रा[4]ध्युषिते परित्रासोर्मि[5]मालिनि ।
१०] किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥१२॥ [१२
मयि तेऽस्ति[6] ह्यनुक्रोशो यदि रक्षःसु तेषु च ।
१२] ये ते विनिहता भूमौ रामेण निशितैः शरैः ॥१३॥ [N
तेषामानृण्यमागच्छ यदि तेजोऽस्ति[7] तेऽधुना ।
१३] दण्डकारण्यनिलयं जहि राक्षस[8]घातकम् ॥१४॥ [१४उ
यदि राममित्रं [9]त्वं मम [10]तं न वधिष्यसि ।

---

१. कै रा ल म ब—°पट्टिस० ।
२. भ च—रामस्य च ।
३. म भ च—सर्वतो ।
४. कै रा ल अ भ म ब—विषादनक्राध्युषितां ।
५. कै रा ल अ भ म ब—परित्रासोर्मिमालिनीम् ।
६. भ च—ते यद्यनुक्रोशो ।
७. ल—तेजोस्तु ।
८. भ च—राक्षसकण्टकम् ।
९. भ च—तं ।
१०. भ च—त्वं । म—तं ।

११] सन्निधौ ते परि[1]संक्ष्ये जीवितं निर[2]पत्रप ॥१५॥ [१५
अपि ते परवीरघ्ना हता रा[3]मेण राक्षसाः । [N
१४] निःसत्त्वस्याल्पसारस्य वा[4]सस्ते कीदृशस्त्विह ॥१६॥ [१९पू
१५पू] अपयाहि जनस्थानात् त्वरितः सह बन्धुभिः । [१९उ
१६उ] रामतेजोऽभिभूतो हि क्षिप्रं त्वं न भविष्यसि ॥१७॥ [२०
स हि तेजःसमायुक्तो रामो दशरथात्मजः ।
१७] भ्राता चास्य महावीर्यो येनास्म्येवं विरूपिता ॥१८॥ [२१
बुद्ध्या यथा तु[5] पश्यामि न त्वं रामस्य संयुगे ।
१८] स्थातुं प्रमुख[6]तः शक्तः सचापस्य महारणे ॥१९॥ [१६
शूरमानी न शूरस्त्वं मिथ्याख्यापितविक्रमः ।
१९] मानुषौ तौ न शक्नोषि निहन्तुं रामलक्ष्मणौ । [१७
N] पदा[7]तिनौ [8]वृतः सै[9]न्यैः प्रभूतगजवाजिभिः ॥२०॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे खरोद्धर्षणं
नाम षड्विंशः सर्गः ॥२६॥

---

१. कै रा अ—परित्यक्षे ।

२. म—निरपत्रपः । च—निरपत्रपा ।

३. ल म ब—वीरेण ।

४. म ब—वसस्ते ? ।

५. भ—नु ।

६. रा—प्रमुखितः ।

७. ल ब—पदातिकौ ।

८. च—बृहत्सैन्यैः ।

९. कै रा ल म ब भ च—नास्ति ।

एवमाधर्षितः शूरः शूर्पनख्या[1] खरस्तदा ।
१] उवाच रक्षसां मध्ये खरः खरतरं वचः ॥१॥ [१
तवापमानप्रभवः[2] कोपोऽय[3]मतुलो महान् ।
२] न शक्यते धारयितुं लवणोर्मिरिवोत्थितः[4] ॥२॥ [२
न रामं गणये वीर्ये मानुषं क्षीण[5]जीवितम् ।
३] आत्मदुश्चरितैः प्राणान् निहतो[6]ऽद्य विमोक्ष्यति ॥३॥ [३
वाष्पः संगृह्यता[7]मेष सम्भ्रमश्च विमुच्यताम् ।
४] अद्य रामं सह भ्रात्रा नयामि यमसादनम् ॥४॥ [४
परश्वधहतस्याद्य[8] गतप्राणस्य[9] भूतले ।
५] रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि[10] ॥५॥ [५
सा प्रहृष्टा[11] वचः श्रुत्वा खरस्य हृदयङ्गमम् ।
८] प्रशशंस पुनः क्रूरा भ्रातरं दीप्ततेजसम् ॥६॥ [६

---

१. ला—शूर्पणख्या ।
२. रा च—उवाच मान० । ल अ म ब—तथापि मान० ।
भ—मया च मान० ।
३. भ च—क्रोधोयम० ।
४. भ च—लवणोर्मिरिवोद्धतः
५. अ—क्षणजीवितम् ।
६. च—हतोद्य स विमो० ।
७. रा संगृह्यता० ।
८. अ—०हतस्यास्य ।
९. भ च—मंदप्राणस्य ।
१०. रा—राक्षसिः ।
११. म—प्रहृष्टवचा ।

ततः शूर्पनखीवाक्यं श्रुत्वा श्रोत्रमनोहरम् ।
१७] अब्रवीद् दूषणं नाम सेनापतिमुपस्थितम् ॥७॥ [७
चतुर्दशसहस्राणि मम चित्तानुवर्तिनाम् ।
१८] रक्षसां भीमवेगानां घोराणां चण्डकर्मणाम् ॥८॥ [८
नीलजीमूतवर्णानामञ्जनाचलवर्चसाम् ।
१९] मांसहिंसाविहाराणां बलिनां कामरूपिणाम् ॥९॥ [९
तेषां शार्दूलवीर्याणां महास्यानां महौजसाम् ।
२१] सर्वोद्योगं समर्थानां रक्षसां सौम्य कारय ॥१०॥ [१०
उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च ।
२२] शरांश्च चित्रान् शक्तीश्च खड्गांश्च विमलान् शितान् ॥११॥ [११
२७उ] अग्रे निर्यातुमिच्छामि बलस्यास्य महाबल ।
वधार्थमविनीतस्य रामस्य रणकोविदः ॥१२॥ [१२
२८] इति तस्य ब्रुवाणस्य स्वर्णवर्णं महारथम् ।
सदश्वैः सुबलैर्युक्तमाचचक्षेऽस्य दूषणः ॥१३॥ [१३
२९] तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् ।
३०पू] हेमचित्रमसम्बाधं वैडूर्यमयकूबरम् ॥१४॥ [१४
मत्स्यैः शैलैर्द्रुमैर्मुख्यैश्चन्द्रादित्यैश्च काञ्चनैः ।

---

१. भ च—शूर्पणखी० ।

२. म—श्रोतृमनोहरं० ।

३. कै रा—चितानुवर्तिनां । रा—पुस्तकेऽनुस्वारलोपः पश्चात्कृतः ।

४. ब—०मंजनांचलब० ।

५. म—सहस्यानां । भ च—महास्त्राणां ।

६. कै रा ल अ म भ च—सर्वोद्योगसमर्था० ।

७. च—तीक्ष्णान् ।

८. रा—अवनीतस्य ।

९. भ—कूवरं० ।

३१] माङ्गल्यैः पक्षिसंघैश्च ताराभिश्च समन्वितम् ॥१५॥ [१५
ध्वजिनं शस्त्रसम्पन्नं किङ्किणीकविभूषितम् ।
३२] सदश्वयुक्तं सामर्षस्तमारोहद्रथं खरः ॥१६॥[2] [१६
खरस्तु तन्महत् सैन्यं घोरवर्मा[3]युधध्वजम् ।
३४] निर्यातेत्यब्रवीद्दृष्टो रथस्थः सर्वराक्षसान् ॥[4]१७॥ [१७
ततस्तद् राक्षसं सैन्यं घोरवर्मा[5]युधध्वजम् ।
३५] निर्जगाम जनस्थानान्महोदधिसमस्वनम् ॥१८॥ [१८
तांस्तु निर्धावितान् दृष्ट्वा राक्षसान् भीमविक्रमान् ।
३९] खरस्यापि रथः किञ्चिज्जगाम तदनन्तरम् ॥[6]१९॥ [१९
ततस्तान् शवलानश्वांस्तप्तकाञ्चनभूषणान् ।
४०] खरस्य मतमाज्ञा[7]य सारथिः समचोदयत्[8] ॥२०॥ [२०
राक्षसानां सहस्राणि सुघोराणि चतुर्दश ।
३८] निर्यातानि जनस्थानात् खरचित्ता[9]नुवर्तिनाम् ॥२१॥ [२१
मुद्गरैरायसैः शूलैः सुतीक्ष्णैश्च परश्वधैः[10] ।
३६] खड्गैश्चक्रैश्च हस्तस्थैर्निर्ययुर्भैरूतर्षभाः ॥२२॥ [२२

---

१. ला भ च—मङ्गल्यं ।
२. भ च—अतः परमधिकः पाठः—
निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः ।
तस्थुः संपरिवार्यैनं दूषणश्च महाबलः ॥
३. कै रा ल अ भ म ब—°चर्मायुध० ।
४. म ब—नास्ति ।
५. कै रा ल अ भ म ब—°चर्मायुध० ।
६. कै भ च—नास्ति । भ—पुस्तके विंशः श्लोकः पश्चात् प्रान्तभागे विनिवेशितः ।
७. कै—मतमज्ञाय ।
८. रा म—प्रतिचोद० ।
९. कै अ—चिंतानु० ।
१०. भ च—परश्वधैः ।

भिण्डिपालैश्च निशितैरतिमात्रैश्च कार्मुकैः ।
३७] गदाभिर्मुसुलैः[1] खड्गैर्गृहीतैरुग्रदर्शनाः ॥२३॥ [२१
स चोदितो रथः श्रीमान् खरस्य रिपुघातिनः ।
४१] शब्देन पूरयामास स दिशः प्रदिशस्तथा ॥२४॥ [२५
प्रवृद्धसैन्यस्तु खरः खरस्वनो[2]
रिपोर्वधार्थं त्वरितो विनिर्गतः ।
प्रचोदयन्[3] सारथिमुन्नदद्[4]भृशं
४२] महाघनो मेघ इवाश्मवर्षवान् ॥२५॥ [२६

इत्यार्षे रामायणे आरण्यकाण्डे खरनिर्याणो
नाम सप्तविंशः सर्गः ॥२७॥

---

१. म—मुसलैः । भ च—मुद्गलैः ।
२. रा ला—स सुस्वनो ।
ल ब—समस्वनो ।
अ—स सस्वनो ।
३. के अ म ब—प्राचोदयन् ।
४. ०मुन्नदन् ।
५. म—नास्ति । अ—खरसैन्यविनाशो ।
६. के रा ल ब म भ च—नास्ति ।

तं प्रयान्तं जयप्रेप्सुमशुभैः शोणितोदकैः ।
१] अभ्यवर्षन्महामेघस्तुमुलो लोमहर्षणः ॥ १ ॥ [१
पपात तुरगश्चास्य स्खलितो हेमभूषणः ।
२] समे तु प्रचिते देशे राजमार्गे यदृच्छया ॥ २ ॥ [२
ततोऽस्य ध्वजमाक्रम्य हेमदण्डसमुच्छ्रितम् ।
३] सहसैव महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ३ ॥ [३
श्यावं रुधिरपर्यन्तं बभूव परिवेषणम् ।
४] अलातचक्रप्रतिमं प्रतिगृह्य दिवाकरम् ॥ ४ ॥ [४
जनस्थानसमीपे च समागम्य खरस्वनाः ।
५] विस्वरान् विविधांश्चक्रुर्मांसादा मृगपक्षिणः ॥ ५ ॥ [५
व्याजहार च दीप्तास्या दीप्तायां दिशि भैरवम् ।

---

१. भ च—°प्सुमशुभाः ।
२. भ च—शोणितोदकाः ।
३. भ च—°स्तुमुलाः ।
४. भ च—लोमहर्षणाः ।
५. कै रा—बलितो । कै—पुस्तके 'बलितो' इत्यस्य स्थाने केनाचित्संशोध्य 'स्खलित' इति पाठः कृतः ।
ल अ ब म—बलिनो ।
६. भ च—परिचिते ।
७. अ—राममार्गे ।
८. ल अ ब म—हेमदण्डं समुच्छ्रितम् ।
९. भ च—प्रतिगृह्य ।
१०. भ—सुदीप्तास्या । च—प्रदीप्तायां ।
११. च—दिशि शब्दं सुभैरवम् ।

६] अशिवा यातुधानानां शकुनी[1] दैवसंज्ञिता[2] ॥ ६ ॥ [६
ते भिन्नगिरि[3]सङ्काशास्तोयशोणितधारिणः ।
७] आकाशं तदनाकाशं चक्रुर्भीमबलाहकाः ॥ ७ ॥ [७
बभूव तिमिरं घोरं सुमहल्लोमहर्षणम् ।
८] दिशो वा विदिशो वाऽपि न व्यक्तं प्रचकाशिरे ॥८॥ [८
क्षतजार्द्र[4]सवर्णस्तु तस्मिन् काले रविर्बभौ ।
N] खरं चाभिमुखा[5] नेदुः खगाः[6] खस्थाः खरस्वनाः ॥९॥ [९
सकबन्धः सपरिघो भास्करं दीप्ततेजसम् ।
N] जग्राह[7] कालपर्याप्त[8]मपर्वणि महाग्रहः ॥ १० ॥ [१२
न चापि पवनः शीतो न शशी सौम्यदर्शनः ।
N] उदयादुदितो दृष्टो निष्प्रभश्च दिवाकरः ॥ ११ ॥ [N
उत्पेतुश्च तदानक्तं[9] ताराः खद्योतसप्रभाः । [१३उ
N] संवश[10]स्तस्थिरे भूमौ ज्वालोद्गारिभिराननैः ॥१२॥ [N
११उ] नित्याशिवकरा युद्धे शिवा घोरनिदर्शनाः । [११पू
१२पू] संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ॥१३॥
तस्मिन् मुहूर्ते न बभुः पुष्पाणि च फलानि च । [१४उ

---

१. च—शकुनिर् ।
२. कै रा अ ब म—चैव संस्थिता । कै—पुस्तके "संस्थिता" इत्यस्य स्थाने "शृगाली" इति पाठोऽर्वाचीनः परहस्तलिखितः ।
ल—चैव संस्थिते ।
३. कै ल अब म—भिन्ना गिरि° ।
४. म ब—क्षतचन्द्रस० ।
५. रा—०श्चापि मुखा ।
६. रा अ ल म ब—खराः स्वस्थाः । भ—खरस्वस्थाः ।
७. भ—जग्रास । ८. भ च—कालपर्यन्त० ।
९. भ—विना नक्तं । च—विना चन्द्रं ।
१०. ब—सर्वतः । भ च—संवशः ।

N] उद्भूतश्च[1] विना वातं रेणुर्जलधरारुणः ॥ १४ ॥
N] चीचीकूचीति[2] वाशन्त्यो बभ्रमुश्चैव सारिकाः[3] । [१५
उल्काश्चापि सनिर्घाता निपेतुर्घोरदर्शनाः ॥ १५ ॥
१३] प्रचचाल मही चापि सशैलवनकानना । [१६
खरस्य च रथस्थस्य नन्दमानस्य दुर्मतेः ॥ १६ ॥[4,5]
१४] प्राकम्पत भुजः सव्यः स्वरश्चैवोपहन्यते[6] । [१७
सास्रः सम्पद्यते दृष्टिः पश्यमानस्य सर्वतः ॥[7] १७ ॥
१५] ललाटे च रुजा जज्ञे न च मोहान् न्यवर्तत । [१८
तान् समीक्ष्य महोत्पातानुत्थितान् घोरदर्शनान् ।[8]
१६] अब्रवीद्राक्षसान् सर्वान् प्रहसन् वाहिनीपतिः ॥[9] १८॥[१९
महोत्पातानिमान् घोरानुत्थितान् घोरदर्शनान् ।[10]
१७] न चिन्तयाम्यहं वीर्याद् बलवानिव दुर्बलान्[11] ॥१९॥ [२०
अपि ताराः शरैस्तीक्ष्णैः पातयेयं नभस्तलात् ।

---

१. भ च—उद्गतश्च ।
२. अ—वीचीकूची० ।
३. अ ब म ल—शारिकाः ।
४. भ च—नर्दमानस्य दुर्मतेः ।
५. ल ब—नास्ति ।
६. कै अ म—°वोपहन्यत ।
भ च—स्वरश्चाभ्यवहन्यत ।
७. भ—सास्रा बभूव दृष्टिश्च पश्यतः तस्य सर्वतः ।
ब ल च—नास्ति ।
८. ल ब—नास्ति ।
भ च—उत्थितांस्तान्महोत्पातान्नश्य (नपश्यद्?)भृशदारुणान् ।
९. रा अ ल ब म—नास्ति ।
१०. कै रा ल अ ब म—नास्ति ।
११. अ—दुर्बलम् ।

१८] मृत्युं मरणधर्मेण योजये चाहमप्यतः ॥२०॥ [२१
राघवं तं बलोत्सिक्तं भ्रातरं चास्य लक्ष्मणम् ।
२०] अहत्वा सायकैस्तीक्ष्णै र्नापवर्तितुमुत्सहे[1] ॥ २१ ॥ [२२
सकामा भगिनी मेऽस्तु राक्षसी कामरूपिणी[2] ।
२१] तन्निमित्तं हनिष्यामि समरे[3] तौ कुमारकौ ॥ २२ ॥ [२३
न क्वचित् प्राप्तपूर्वो मे समरेषु पराजयः ।
२२] युष्माकमेव प्रत्यक्षं नानृतं[4] प्रवदाम्यहम् ॥ २३ ॥[5] [२४
देवराजमपि क्रोधान्मत्तैरावणवाहनम्[6] ।
२३] वज्राङ्कितकरं हन्यां[7] किं पुनस्तौ तु मानुषौ ॥२४॥ [२५
तस्य तद्वचनं श्रुत्वा राक्षसी सा महाचमूः
२४] प्रहर्षमतुलं लेभे मृत्युपाशवशं गता ॥ २५ ॥ [२६
समीयुश्च[8] महात्मानो युद्धदर्शनकांक्षया ।
२५] सुरैः सार्धं मुनिगणाः सिद्धाश्च सह चारणैः ॥२६॥ [२७पू
समेत्य चोचुः[9] सहितास्तेन्योन्यं[10] पुण्यकर्मणः । [२७उ
२६] स्वस्ति गोब्राह्मणायेति[11] लोकेभ्यश्चैव सङ्गताः ॥२७॥ [२८पू
जयतां राघवौ[12] युद्धे पौलस्त्यान्[13] रजनीचरान् ।

१. भ च—°र्नोपावर्तितु० ।
२. भ—कामचारिणी ।
३. ल ब—संपरे ।
४. म—न घृतं ।
५. च—नास्ति ।
६. भ—°त्तैरावतवा० ।
७. अ—हस्तं ।
८. च—समेयुश्च ।
९. भ च—नेदुः ।
१०. भ च—°तास्तेन्योन्यं पुण्यकर्मिणः ।
११. ब—गोब्राह्मणेभ्यश्च ।
१२. ल अ म ब—राघवो ।
१३. कै—पुलस्त्यान् ।

२७] इन्द्रो हन्ता यथा[1]पूर्वं सर्वांश्चासुरराक्षसान्[2] ॥२८॥ [२८उ
एतच्चा[3]न्यच्च बहुधा ब्रुवाणाः[4] परमर्षयः ।
२८] ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥२९॥ [२९
रथेन तु[5] खरो[6] वेगादग्रे सैन्याद् विनिर्गतः ।
२९] तं दृष्ट्वा राक्षसं भूयो राक्षसास्ते विनिःसृताः[7] ॥३०॥ [३०
दूरगामी[8] पृथुग्रीवो यज्ञशत्रुर्[9]महाविषः ।
३०] दुर्जयः परवीरघ्नः[10] परुषः कालकार्मुकः[11] ॥ ३१ ॥ [३१
मेघमाली महाबाहुर्महास्यो लोहिताम्बरः ।
३१] द्वादशैते महावीर्यास्तस्थुः प्रमुखतः खरम् ॥३२॥ [३२
महाकपालः स्थूलाक्षः प्रमाथी[12] त्रिशिरास्तथा ।
३२] चत्वार एते सेनाऽग्रे दूषणं पृष्ठतो ययुः[13] ॥३३॥ [३३

---

१. भ च—यथा युद्धे ।

२. भ—सर्वानसुररा० । च—सर्वांस्तान् सुर० ।

३. रा ल म ब—एतश्चान्यश्च ।
भ च—एताश्चान्याश्च ।

४. भ—°णास्ते विनिसृताः ।

५. अ—तुरगो ।

६. च—निःसृतो ।

७. अ—विनिर्गताः ।

८. ल अ म ब—दूरग्रामी ।

९. रा ल अ म ब—यज्ञशक्रो म० ।

१०. भ च—करवीरघ्नः ।

११. अ—कालकंडकः ।

१२. भ च—प्रमाथिः ।

१३. भ च—०तोन्वयुः ।

तत्कार्मुकैराभरणै[१]र्ध्वजैश्च
तैर्वर्मभिश्चाग्निसमानवर्णैः ।
बभूव रूपं रुधिराशनानां
N] सूर्योदये रक्त इवाभ्रराशिः ॥ ३४ ॥ [N
सा भीमवेगा समराभि[२]कामा
[३]सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसो[४]र्पतस्थे
३३] माला ग्रहाणामिव चन्द्रसूर्यौ[५] ॥ ३५ ॥ [३४

इत्यार्षे रामायणे आरण्यकाण्डे खरोत्पातदर्शनं
नाम अष्टाविंशः सर्गः ॥२८॥

---

१. ल—°णैर्वेणश्च । भ च—°णैर्ध्वजै० ।

२. अ—°राभिकामदा । ल—°भिकामुदा० ।

३. ल—°ददारु० ।

४. भ च—°सोपतस्थौ ।

५. भ—सूर्यचन्द्रौ । च—सूर्यबिंबं ।

६. कै भ च—नास्ति ।

७. भ च—खरनिर्याणो ।

८. कै रा ल भ म व च—नास्ति ।

तमाश्रममनुप्राप्ते खरे खरपराक्रमे ।
१] तानेवोत्पातकान्[1] रामः सह भ्रात्रा ददर्श ह ॥ १ ॥ [१
तानुत्पातान् महाघोरानुत्थितान् रोमहर्षणान् ।
२] द्विषतः[2] संहतान् दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥[3]२॥ [२
इमान् पश्य महाबाहो सर्वभूतापहारिणः ।
३] समुत्थितान् महोत्पातान् संक्षेप्तुमिव मानुषान् ॥३॥ [३
इमे रुधिरधारास्तु सृजन्तः खरनिःस्वनाः ।
४] व्योम्नि मेघा[4] विवर्धन्ते दारुणा भीमदर्शनाः[5] ॥४॥ [४
सधूम्रश्च[6] शनाः सर्वे मम युद्धाभिकांक्षिणः ।
५] रुक्मपृष्ठानि चापानि विवेष्टन्ते[7] च लक्ष्मण ॥५॥ [५
यादृशं हि विकूजन्ति पक्षिणो वनचारिणः ।
६] अग्रतो नो[8] भयं प्राप्तं संशयो जीवितस्य च ॥६॥ [६
संप्रहारश्च सुमहान् भविष्यति न संशयः ।
७] आख्याति[9] दक्षिणो बाहु स्फुरमाणो मुहुर्मुहुः ॥७॥ [७

---

१. च—तदैवोत्पात० ।

२. ला—विद्विषः ।

३. म—नास्ति ।

४. रा—वेगा ।

५. भ च—गर्द्दभारुणाः ।

६. च—सधूम्राः श्च० ।

७. अ भ च—विचेष्टन्ते ।

८. अ ल म व—न ।

९. भ च—अयमाख्याति मे ।

सन्निकर्षश्च[1] नो वीर जयः शत्रुपराजयः ।
८] सुप्रभावं[2] प्रसन्नं[3] च तव वक्त्रं[4] हि लक्ष्यते ॥८॥ [८
उद्यतानां[5] हि युद्धाय येषां[6] भवति लक्ष्मण ।
९] निष्प्रभं वदनं दीनं तेषां विद्यात्[7] पराजयम् ॥९॥ [९
अनागतविधानं च कर्त्तव्यं शुभलक्षण ।
११] आत्मदेशं[8] सदा वीर[9] पुरुषेण विपश्चिता ॥१०॥ [११
त्वं गृहीत्वा तु वैदेहीं शरपाणि[10]र्धनुर्धरः ।
१२] गुहामाविश[11] शैलस्य दुर्गां पादपसंवृताम् ॥११॥ [१२
१४उ] प्रतिकूलितुमिच्छामि न[12] तु वाक्यमहं त्वया ।
१५पू] ख्यापितः खल्वसि मया गम्यतां वीर मा चिरम् ॥१२॥[१३
एवमुक्तस्तु रामेण सीतामादाय लक्ष्मणः ।
१६] सशरं धनुरादाय गुहादुर्गं[13] समाश्रयत् ॥१३॥ [१५
तस्मिन् प्रविष्टे तु गुहां लक्ष्मणे सह सीतया ।

---

१. भ च—सन्निकर्षे ।
२. भ—सुमुखं च ।
३. च—प्रयतं ।
४. ब—च ।
५. कै रा ल अ ब म—उद्धतानाम् ।
६. कै रा ल अ—तेषाम् ।
७. कै रा—विन्द्यात् ।
८. भ—अपदेशं । च—आपदं ।
९. च—तत्कामेन ।
१०. अ म—°पाणिधनु° ।
११. कै—गुहामाविश्य ।
१२. क ल अ म ब—ननु° ।
१३. भ—गुहां दुर्गां ।

१७] हन्तैतद् युक्तमित्युक्त्वा रामः कवचमाददे[1] ॥१४॥ [१६
स तेनाग्निप्रकाशेन कवचेन विभूषितः ।
१८] बभूव रामस्तिमिरं विधूयार्क इवोदितः ॥१५॥ [१७
स चापमुद्यम्य महच्छरांश्चादाय[2] वीर्यवान् ।
१९] बभूवांवस्थितस्तत्र[3] ज्यास्वनैः पूरयन् दिशः ॥१६॥ [१८
सधूमशिखराश्चास्य तूणस्था जज्वलुः शराः ।
N] पर्वतानामिवौषध्यः सूर्येऽस्तं समुपागते ॥१७॥ [N
द्विगुणं पौरुषं चास्य तेजश्च प्रत्यपद्यत ।
N] ऊर्मयः सागरस्येव यथा पर्वणि पर्वणि ॥१८॥ [N
ततो देवर्षिगन्धर्वाः सिद्धाश्च सह चारणैः । [१९पू
२०] ऊचुः परमसन्तप्ता गुह्यकाश्च परस्परम् ॥१९॥ [२०उ
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
२१] एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥२०॥ [२३
कामं नो विदितं योऽयं यथा च वसुधां गतः ।
२२] मानुषीं हि तनुं कृत्वा स्नेहान्नो विक्लवं मनः ॥२१॥ [N
N] इति चिन्तयतां तेषां रामे च युधि संस्थिते ।
नदन्ती हि[4] चमूस्तेषां रक्षसां भीमकर्मणाम् ।
२३] नानाविकृतवेषाणां[5] रामाश्रममुपाद्रवत् ॥२२॥ [N
२४पू] तिष्ठ[6] राम हतोऽसीति दृष्ट्वा विकृतदर्शनाः ।

---

१. भ म—°चमादधे ।

२. अ म ब—महच्चापमादाय ।

३. ल ब—बभूवानुत्थित° । अ—बभूवात्रास्थित० । म—बभूवात्रस्थि० ।

४. अ—नंदते हि । नंदंते हि ।
भ च—नदंतीति ।

५. कै रा ल अ म ब—°वेशानां ।

६. च—रिपु ।

N] विमर्दमानां वसुधां शून्ये विस्रब्धमागताः ॥२३॥ [N
N] नानाप्रहरणा घोरास्ततस्ते राघवाश्रमम् ।
२४उ] अभिपेतुरभिक्रुद्धाः सर्वतः परिवार्य वै ॥२४॥ [N
विप्रकीर्णास्तु तान् दृष्ट्वा सुबहून् राक्षसर्षभान् ।
२५] साक्षाद् राक्षसमुख्यांश्च स खरः सन्न्यवर्तयत् ॥२५॥[N
सन्निवर्त्य तु तत् सैन्यमेकस्थमभवत् तदा ।
२६] पिण्डितं ह्यभवत् सर्वं यथा यूथो विषाणिनाम् ॥२६॥[N
तं तु गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजम् ।
२७] अनीकं यातुधानानां समन्तात् प्रत्यदृश्यत ॥२७॥ [२७
वीरनादान् विसृजतामन्योन्यमभिधावताम् ।
२८] चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः ॥२८॥[२८
प्रघुष्टं हसमानानां तर्जतां चाभिधावताम् ।
२९] तेषां स तुमुलः शब्दः पूरयामास तद् वनम् ॥२९॥[२९

१. रा ल—विमन्दमा० । अ—विमर्दमानां ।
भ च—विनर्दमाना
२. भ च—विश्रब्धमा० ।
३. कै रा ल आ म—राक्षसाश्रमम् । भ च—राममाश्रमे ।
४. भ च—°रतिक्रुद्धाः ।
५. भ च—क्षणाद् ।
६. अ म—राक्षससंमुख्यां ।
भ च—राक्षसमुख्यश्च ।
७. कै रा—संनिवृत्य । भ च—संनिवृत्तं ।
८. भ च—यूथं ।
९. भ च—°चर्मायुधध्वजम् ।
१०. भ च—प्रहृष्टैर्हसमानानां गर्जतां चाभिधावताम् ।
११. कै रा भ च—सुतुमुलः ।

तेन शब्देन वित्रस्तास्तापसा वनचारिणः[1] ।
३०] दुद्रुवुर्यत्र निःशब्दं पृष्ठतो नावलोकयन् ॥३०॥ [३०
अभवन्निष्प्रभः सूर्यस्तिमिरेण समावृतः ।
३१] मारुतः प्रतिकूलश्च राक्षसानामभूत् तदा ॥३१॥ [N
तत् त्वनीकं महावेगं रामं[2] समुपचक्रमे ।
३२] वृतं नानाप्रहरणैर्वर्धमानार्णवोपमम् ॥३२॥ [३१
N] रामो हि[3] वितरन्[4] चक्षुः सर्वतो रणपण्डितः ।
N] ददर्श खरसैन्यं तत् समन्ताद् युद्धकांक्षिणम् ॥३३॥ [३२
३४पू] विनाद्यैव[5] धनुर्घोरं तूणादुद्धृत्य सायकान् ।
क्रोधमाहारयत् तीव्रं वधार्थं सर्वरक्षसाम् ॥३४॥ [३३
३५] दुष्प्रेक्ष्यः[6] सोऽभवत् क्रोधाद् युगान्ताग्निरिव ज्वलन्॥३५॥[३४पू
तं दृष्ट्वा तेजसाविष्टं विव्यथुर्नैर्ऋतर्षभाः[7] । [३४उ
३६] दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिनः ॥३६॥ [३५उ
तं तु दृष्ट्वा स्थितं रामं संक्रुद्धं धृतकार्मुकम् ।
N] स्थितमेकपदे सैन्यं सहसा तदकम्पत ॥३७॥[8] [N
सैन्यं तु स्थितमालोक्य निश्चलं[9] पर्वतोपमम्
३९] पार्श्वस्थं दूषणं क्रुद्धः खरो वचनमब्रवीत् ॥३८॥ [N
न चात्रास्ति[10] नदी[11] तार्या[12] स्थितमेकपदे बलम् ।
४०] किमर्थं ज्ञायतां तावच्छीघ्रं दूषण गम्यताम् ॥३९॥ [N

---

१. क रा ल ब म—बलचारिणः ।
२. कै रा अ म—रामे । ३. कै रा भ च—ऽपि ।
४. कै रा ल अ ब म—विहरं स्वचः ।
५. रा ल अ म भ च—विनस्यैव । ६. ल ब—दुष्पेचः ।
७. कै रा ल अ म ब —°नैर्नृतर्षभाः । ८. च—नास्ति ।
९. म—निश्चलो । १०. च—नास्ति । ११. अ—ज्ञातास्ति न बा ।
१२. अ म—भार्या ।

एवमुक्तस्ततो वीरो[1] दूषणः परवीरहा ।[2]
N] खरस्य वचनादेवं[3] सैन्यमध्ये[4] विनिःसृतः ॥४०॥ [N
रथेन दूषणः शीघ्रमग्रतश्चावलोकयन[5] ।
४१] स ददर्श ततो राममग्रतो विधृतायुधम्[6] ॥४१॥ [N
शरार्चिषं सुसंक्रुद्धं दग्धुकाममिवानलम् ।
N] स निवृत्य[7] रथेनैव दूषणः शत्रुदूषणः ॥४२॥ [N
४२उ] उपगम्य खरं वाक्यमतिसंक्रुद्धमब्रवीत् ।
रामः[8] प्रतिमुखे वीरः सचापः पर्यवस्थितः ॥४३॥ [N
४३] तस्य त्रासादिदं सैन्यं स्थितं न परिसर्पति ।
न खल्वाख्याति ते कश्चिद् रामोऽयमिति संस्थितः॥४४॥[N
N] राक्षसानां विषादेन सं[9] मया परितर्कितः ।
रामस्य संमुखं सूत रथं नोदय मे द्रुतम् ।
N] एकस्माद्धि बलं त्रस्तं विशतीवं[10] परस्परम् ॥४५॥ [N
एवमुक्तो[11] ततो[11] रामं रथेनाभ्यद्रवत् खरः ।
४५] तं दृष्ट्वा सर्वसैन्यानि प्राद्रवन्[12] दूरमग्रतः ॥४६॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे खरसैन्यस्तम्भो
नाम ऊनत्रिंशः[13] सर्गः[14] ॥२९॥

---

१. म—क्रूरो । २. च—नास्ति । ३. च—वचनादेव ।
४. भ च—सैन्यमध्याद् । ५. भ च—°मग्रतोऽप्यवलोकयन् ।
६. रा म—विवृतायुधम् । भ च—विततायुधम् ।
७. भ च—सन्निवृत्य । ८ भ च—एष रामः प्रतिमुखे ।
९. म—यथा सं । १०. कै—विशन्तीव । ११. भ च—एवमुक्तस्ततो ।
१२. कै—प्राद्रवद्दूर० ।
१३. अ—एकोनत्रिंशः । कै रा ळ भ ब म च—नास्ति ।
१४. च—सर्गसमाप्तिर्न दृश्यते ।

अविंत्रस्तं[1] तु[2] तं[2] दृष्ट्वा राघवं रिपुघातिनम् ।
१] ददर्शाश्रममागम्य खरः सहपुरःसरः[3] ॥१॥ [१
तं दृष्ट्वा द्विगुणं क्रुद्धश्चापमुद्यम्य सत्वरः ।
२] रामस्याभिमुखं सूतं[4] चोदयस्वेत्युवाच[5] ह ॥२॥ [२
स खरस्याज्ञया सूतस्तुरगांस्तानचोदयत्[6] ।
३] यत्र रामो महाबाहुरेकस्तु[7] धुनुते धनुः ॥३॥ [३
तं[8] तु निष्क्रान्तमालक्ष्य[9] राघवं रिपुघातिनम् ।
४] नन्दमानां[10] महानादां[11]: सचिवाः पर्यवारयन् ॥४॥ [४
स तेषां यातुधानानां मध्ये[12] रथगतः खरः ।
५] बभूव मध्ये ताराणां लोहिताङ्ग इव ग्रहः ॥५॥ [५
ततस्ते क्रूरकर्माणः क्रुद्धाः[13] सर्वे निशाचराः ।

---

१. भ च—अवष्टब्धं ।
२. रा—भूतं । ?
३. च—त्रुटितः पाठः ।
४. भ च—सूतं ।
५. अ—चोदयस्वेति वाच ?
६. भ च—०गांस्ताननादयत् ।
७. कै—°कस्तु धुनते । भ—°रेकस्तद्धनुते ।
८. ल—ते ।
९. भ च—निष्पतितं दृष्ट्वा ।
१०. ब भ च—नर्दमानाः । अ—नन्द्यमानाः ।
११. भ च—महानादान् ।
१२. भ—मध्यंगतरथः । च—मध्यं रथगतः ।
१३. म—बद्धाः ? ।

६] रामं नानाविधैः शस्त्रैरभ्यवर्षन्[1] सुदुर्जयम् ॥६॥ [७
मुद्गरैरायसैः शूलैः प्रासैः खड्गैः परश्वधैः[2] ।
७] राक्षसाः समरे रामं निजघ्नुस्तीव्रविक्रमम् ॥७॥ [८
ते बलाहकसङ्काशा महानादा महाबलाः ।
८] अभ्यवर्षन्त काकुत्स्थं यातुधाना जिघांसवः ॥८॥ [९
ते रामे शरवर्षाणि ससृजू रक्षसां गणाः ।
९] शैलेन्द्रमिव धाराभिर्वर्षमाणा[3] महाघनाः ॥९॥ [१०
स तैः परिवृतो घोरैः काकुत्स्थो रक्षसां गणैः ।
१०] ऋषिभिश्च महादेवो वृतः परिषदां[4] गणैः ॥१०॥ [११
तानि युक्तानि[5] शस्त्राणि समन्तात् तैर्निशाचरैः ।
११] प्रतिजग्राह काकुत्स्थो नदीवेगानिवोदधिः ॥११॥ [१२
स तैः प्रहरणैर्घोरैः भिन्नगात्रैर्न[6] विव्यथे ।
१२] रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महीधरः ॥१२॥ [१३
स विद्धः क्षतजादिग्धः[7] सर्वगात्रेषु राघवः ।
१३] दिवाकर इवाकाशे सन्ध्याऽभ्रैर्बहुभिर्वृतः ॥१३॥ [१४
विषेदुर्[8]देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
१४] एकं सहस्रैर्बहुभिर्दृष्ट्वा रामं समावृतम् ॥१४॥ [१५

---

१. भ च—°रभ्यवर्षन्त दुर्जयम् ।

२. भ च—परस्वधैः ।

३. कै रा—वर्षमानाः ।

४. भ च—पारिषदां

५. ल भ च—मुक्तानि ।

६. भ च—भिन्नगात्रो न' ।

७. ल ब—चतजाविद्धः ।

८ ल—निषेदु० ।

अथ रामो महातेजा मण्डलीकृतकार्मुकः ।
१५] ससर्ज विविधान् बाणान् शतशोऽथ सहस्रशः ॥१५॥[१६
दुराधर्षान् दुर्विषहान् कालपाशोपमान् रणे ।
१६] मुमोच क्षिप्रमायस्तः शरान् काञ्चनभूषणान् ॥१६॥ [१७
ते शराः खरसैन्येषु मुक्ता रामेण लीलया ।
१७] आददुः समरे प्राणान् कालपाशा इवोद्यताः ॥१७॥ [१८
भित्त्वा राक्षसदेहांस्ते शरा रुधिरभूषिताः ।
१८] अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः ॥१८॥ [१९
असंख्येयाश्च रामस्य सायकाश्चापमण्डलात् ।
१९] विनिष्पेतुर्महावेगा रक्षसां प्राणहारिणः ॥१९॥ [२०
तैर्धनूंषि ध्वजाग्राणि चर्माणि कवचानि च ।
२३] चिच्छेद रामः सहसा शतशोऽथ सहस्रशः ॥२०॥ [२१
राक्षसानां तथा बाहून् सहस्ताभरणान् बहून् । [२१
N] उद्यतान् सायुधान् युद्धे चिच्छिदू रामसायकाः ॥२१॥[N
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्मभिः ।

---

१. म—°कृतकार्मुकम् ।
२. कै—दुरादर्शान् । भ च—दुराधरान् ।
३. भ—मुमोच च क्षमायस्तः ।
४. रा अ ब भ—आदधुः ।
५. रा—राम । ल ब—काल ।
म—त्रुटितः पाठः ।
६. अ—सायकांश्चा० ।
७. च—वर्मांणि ।
८. रा—बाणान् ।
९. कै—चिच्छेदू । रा अ म—चिच्छेदे । ब—चिच्छिदे ।
१०. ल—विकार्मिभिः । ब भ—विकर्णिभिः ।

२४] भीममार्तस्वरं[1] चक्रुर्भिद्यमाना निशाचराः ॥२२॥ [२४
तत् सैन्यं निशितैर्बाणैरर्दितं मर्मभेदिभिः[2] ।
२८] रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥२३॥ [२५
ते शूलशक्तिपरिघान् प्रासान् खड्गान्[3] परश्वधान् ।
३८] चिक्षिपुः परमक्रुद्धा रामाय रजनीचराः ॥२४॥ [२६
तच्छस्त्रवर्षं सुमहद् विमुक्तं रजनीचरैः ।
N] असंभ्रान्तो रणे रामः प्रतिजग्राह वीर्यवान् ॥२५॥ [N
प्रतिगृह्य च[5] तद्[6] वर्षं निमीलित इवाभवत् ।
३पृ] तेषां बाणैः सुनिशितैराददे रघुनन्दनः ॥२६॥ [N
शिरांसि बाहून् सासींश्च विमलांश्च परश्वधान्[7] ।
N] हस्तान् सहस्ताभरणान् धनूंषि कवचानि च ॥२७॥ [N
समग्रदेहै[8]र्निहतैर्निशाचरैः[9]
शिरोभिरुद्धासिकिरीटकुण्डलैः ।
भुजैर्भुजङ्गप्रतिमैश्च साङ्गदै[10]-
N] र्विचित्रिता[11] तत्र रणे बभूव[12] भूः ॥२८॥ [N

---

१. म—भीममांतस्वरं । भ च—°मार्तस्वनं ।
२. रा अ म—मर्मवेदिभिः ।
३. कै—खड्गपरश्व० । भ च—खड्गान्परस्व० ।
४. रा ल अ ब म—वने ।
५. भ च—तु ।
६. च—तं ।
७. भ च—परस्वधान् ।
८. ल—समग्रदेहो ।
९. ल—निशांचरैः ?
१०. ल—सागरैः ?
११. भ च—विचित्रघोरास्तरणेव ।
१२. रा अ ब म—बभूवतुः । भ च—भूर्बभौ ।

ततस्तु रामस्य शरास्तजीविता
निशाचराः संप्रतिपेतुरर्दिताः ।
विसृज्य शस्त्राण्यपरे विदुद्रुवुः
N] समीक्ष्य रामस्य पराक्रमं रणे ॥२९॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे खरसैन्यभङ्गो
नाम त्रिंशः सर्गः ॥३०॥

---

१. च—शरास्त्र० ?
२. च—विष्टज्य ?
३. भ च—नास्ति ।
४. कै रा ळ व म भ च—नास्ति ।

३५पू] तान् सर्वान् पुनरादाय समाश्वास्य च दूषणः ।
३६उ] अभ्यधावत काकुत्स्थं क्रुद्धः क्रुद्धमिवान्तकम् ॥१॥ [३०
अथ ते राक्षसा भूयो दूषणाश्रयनिर्भयाः ।
३७] राममेवाभ्यधा[1]वन्त साल[2]तालशिलायुधाः ॥२॥ [३१
४४उ] तदद्भुतमभूद् युद्धं तुमुलं लोमहर्षणम् ।
N] रामस्य च महाबाहोः पुनस्तेषां च रक्षसाम् ॥३॥ [३३
तद्द्रुमाणां नगानां च वर्षं प्राणहरं महत् ।
N] प्रतिजग्राह धर्मात्मा राघवोऽमोघसायकैः ॥४॥ [स.२६,३
प्रतिगृ[3]ह्य तु तद् वर्षं सुमहत् पर्वतोपमम् ।
स३२,४]चुक्रोध राघवस्तेषां वधे चैव मनो दधे ॥५॥ [४
स तु क्रोधसमाविष्टः शत्रुमर्मविकृ[4]न्तनैः ।
N] शरैर[5]भ्यहनत् सैन्यं सर्वतः सहदूषणम् ॥६॥ [५
विमुखीकृ[6]त्य रक्षांसि दूषणं च महाबलम् ।
N] तस्थौ[7] चासंभ्रमो[7] रामः प्रदीप्तानलसन्निभः[8] ॥७॥ [N

---

१. भ च—राममेवाशु धावंत: ।

२. भ च—शालतालशि० ।

३. अ—परिगृह्य ।

४. रा अ—°विकृत्तनैः । ब ल—शत्रुमर्दविकृन्तनैः । म—अक्रमंदविकृत्तनैः । भ च—°निकृन्तनैः ।

५. म—शरैरभ्यहनत् ।

६. रा—विमुखीकृतरक्षांसि ।

७. म—तस्थौ चासभ्रमो ? इत्यपपाठः ।
च—तस्थावसंभ्रमो ।

८. ल अ म ब—°लसप्रभः ।

राक्षसांस्तान् रणे भग्नान्[1] दृष्ट्वा रामेण धीमता । [N
N] रथस्थो दूषणो रामं शरवर्षैरवाकिरत् ॥८॥ [६उ
सोऽतिविद्धः शरैस्तेन सर्वगात्रेषु राघवः ।
N] क्रोधमाहारयत् तीव्रं दूषणं प्रति वीर्यवान् ॥९॥ [N
स चापमायम्य[2] रणे दूषणाभिमुखः[3] स्थितः ।
N] मुमोच निशितान् बाणान्[4] वज्राणीव शतक्रतुः ॥१०॥[5] [N
ततोऽस्य ध्वजमेकेन चतुर्भिश्चतुरो हयान् ।
N] त्रिभिस्त्रिवेणुं धर्मात्मा द्वाभ्यां तु रथसारथिम् ॥११॥[N
निकृत्य[6] राघवः क्रुद्धः शरैरग्निशिखोपमैः ।
N] आयुधानि च सर्वाणि चिच्छेद लघुहस्तवत् ॥१२॥ [N
स हताश्वो हतरथो भूमौ तिष्ठन् निशाचरः । [९पू
N] गदां चिक्षेप रामाय प्रदीप्तामशनीमिव ॥१३॥ [N
तामापतन्तीं चिच्छेद राघवो निशितैः शरैः ।
N] दूषणं बहुभिर्बाणैर्[7]विव्याध लघुहस्तवत् ॥१४॥ [N
ततः सेनापतिः[8] क्रुद्धो दूषणः शत्रुदूषणः । [६पू
११] जग्राह परिघं[9] घोरमायसं वज्रसन्निभम् ॥१५॥ [९उ

---

१. च—मग्नान् ।

२. ल म—°मायस्य । अ—°मानम्य ।

३. भ च—°भिमुखं । ४. अ—वाणान् ।

५. भ च—अतः परमधिकः पाठः—

दूषणोऽपि शरांस्तीक्ष्णान् ज्वलितान् भुजगानिव ।

रामायाभिमुखो गृह्य क्षिपन् शतसहस्रशः ॥

अथ रामो महाबाहुस्तूर्णमुद्गृह्य सायकान् ।

६. भ च—न्यकृन्तद् ।

७. भ च—चाष्टभिर्बा० ।

८. म—सेनापतिक्रुद्धो ।

९. कै रा ल अ म ब—परमं ।

वेष्टितं काञ्चनैः पत्रै[1]र्बलवानन्तकोपमैः[2] ।
१२] आयसैः शङ्कुभिर्दीप्तैः संयुतं शोणितोक्षितम् ॥१६॥ [१०
वज्राशनिसमस्पर्शं परिघं[3] परदारणम्[4] । [११पू
१३] त्रासनं सर्वभूतानां काञ्चनाङ्गदधारिणम् ॥१७॥ [N
तं महोरगसङ्काशं[5] गृहीत्वा परिघं[6] रणे ।
१४] दूषणोऽभ्यपतत् तूर्णं हतोऽसीति वदन् रणे ॥१८॥ [११उ
भर्त्सयामास संक्रुद्धश्चित्रं विस्फार्य कार्मुकम् ।
रे रे रक्षोधम ! क्रूर वृथा तव पराक्रमः ।
N] प्रतियुध्यस्व समरे मया सार्धं निशाचर ॥१९॥ [N
ये त्वया भक्षिताः पूर्वं दण्डकारण्यवासिनः ।[7]
N] द्रक्ष्यन्ति त्वा मृतं तेऽद्य मुनयः संशितव्रताः ॥२०॥ [N
राघवेणैवमुक्तस्तु दूषणः परुषं वचः ।
N] प्रत्युवाच तदा रामं क्रोधविस्फारितेक्षणः[8] ॥२१॥ [N
प्राकृतान् राक्षसान् हत्वा शूरोऽहमिति मन्यसे ।
N] परिघस्य प्रहारं तु सहस्व मम संयुगे ॥२२॥ [N

---

१. च—पट्टै॰—
२. म—॰नन्तकोपमैः ।
३. अ—परघं ।
४. कै रा ल अ ब म—परदारुणं ।
५. कै रा अ ल भ ब—महावेगसंकाशं ।
६. कै रा—गृहीतं परिघं । ल म ब—गृहीतं परिघं ।
अ—गृहीतपरघं ।
७. कै रा ल अ म ब भ—नास्ति । भ—पश्चादिव प्रान्तभागे विलिख्य मूले सन्निहितं प्रतीयते ।
८. कै रा ल अ म—॰विस्फुरितेक्षणः ।
भ—॰विस्फार्यतेक्षणः ।

एवमुक्त्वा ततो रक्षो रामं रक्तान्तलोचनम् ।
N] नुद्य[1]मानः स्वपरिघं[2] राघवाभिमुखो ययौ ॥२३॥ [N
तस्याभिपततः संख्ये दूषणस्य स राघवः ।
१८] द्वाभ्यां श[3]राभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥२४॥ [१२
तस्य छित्त्वा भुजौ रामः प्रहसन् रघुनन्दनः ।
N] ज्याघाततलशब्देन रक्षसां भयमादधे[4] ॥२५॥ [N
भूर्दिशं खं च[5] घोषेण सर्वतोऽप्यनुनादयन् ।
N] परिघं च महाघोरं पातयामास पश्यतः ॥२६॥ [N
ततस्तस्य महाकायः[6] पपात रणमूर्धनि ।
१९] परिघश्छिन्नहस्तस्य[7] शक्रध्वज इवाग्रतः ॥[8]२७॥ [१३
स कराभ्यां विशीर्णाभ्यां[9] पपात भुवि दूषणः ।
२०] विषाणाभ्यां निकृत्ताभ्यां विषण्ण इव कुञ्जरः ॥२८॥ [१४

---

१. कै—उद्यमानः ।

२. कै रा म—परिघं घोरं ।

अ—सपरिघं ।

भ च—उद्यम्य परिघं ।

३. म—शिराभ्याम् ।

४. कै भ च—भयमादधत् ।

रा—भयमाभरत् ।

ल ब—भयमाददे ।

५. अ—भूर्दिशं खं च ।

६. भ च—महावेगः । भ—पुस्तके चास्य स्थाने 'महाकायः' इत्येव पाठः प्रान्तभागे पश्चात्संशोधनरूपेण केनचिल्लिखितः ।

७. भ च—परिघः छिन्न० ।

८. रा—वारद्वयं लिखितः ।

९. भ च—विदीर्णाभ्याम् ।

दृष्ट्वा सपरिघं भूमौ पातितं[1] तेन तद्रणे ।
२१] साधु साध्विति भूतानि राघवं प्रत्यपूजयन् ॥२९॥ [१५
एतस्मिन्नन्तरे क्रूरा विक्रान्ता राक्षसास्त्रयः । [१६पू
N] महाकपालः स्थूलाक्षः[2] प्रमाथी च महाबलः । [१७पू
२२] सहसाऽभ्यद्रवन् रामं मृत्युपाशवशं गताः ॥३०॥ [१६उ
महाकपालो विमलं शूलमुद्यम्य राक्षसः ।
२२] स्थूलाक्षः पट्टिशं गृह्य[3] प्रमाथी च परश्वधम्[4] ॥३१॥ [१७उ
दृष्ट्वैवापतमानांस्तान् राघवः सायकैस्त्रिभिः ।
२४] तीक्ष्णाग्रैरभिजग्राह सत्कारैरतिथीनिव[5] ॥३२॥ [१८
महाकपालस्य शिरश्चिच्छेदैकेषुणैव सः ।
२५] बाणैश्च बहुभिस्तीक्ष्णैः[6] ममाथ प्रमाथिनम् ॥३३॥ [१९
स्थूलाक्षस्याक्षिणी तीक्ष्णैः[6] पूरयामास सायकैः ।
२६] स पपात क्षितौ छिन्नो विनिकृत्तो यथा द्रुमः ॥३४॥ [२०
ततः पावकसङ्काशैः शरैर्हेमविभूषितैः ।
२७] जघान शेषं तेजस्वी राक्षसं सैन्यमाहवे ॥३५॥ [N
ते रुक्मपुङ्खा विशिखा रामकार्मुकनिःसृताः ।
२८] निजघ्नुस्तानि रक्षांसि वज्राणीव महीधरान् ॥३६॥ [२८
रक्षसां तु शतं रामः शतेनैकेन पत्त्रिणाम्[7] ।
२९] सहस्रं च सहस्रेण जघान रणमूर्धनि ॥३७॥ [२९

---

१. भ च —दूषणं पतितं रणे ।

२. कै रा—स्थूलाक्षं ।

३. कै रा ल अ ब म—पट्टिसं गृह्य ।

४. भ च—परस्वधम् ।

५. ल—सत्कारैः ?

६. ल ब—नास्ति ।

७. कै रा ल अ म च—पत्त्रिणा ।

ते छिन्नवर्माभरणाः छिन्नभिन्नशिरोरुहाः ।
३०] निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥३८॥ [३०
तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः ।
३१] रराज वसुधा कीर्णा मखे वेदी कुशैरिव ॥३९॥ [३१
क्षणेन तद् बलं सर्वं तदानीं हतराक्षसम् ।
३२] बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥४०॥ [३२
तैर्भिन्नगिरिसङ्काशैः पतितैर्वारणोपमैः ।
N] निःशब्दमभवत् सर्वं दीनं निहतराक्षसम् ॥४१॥ [N
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
३४] हतान्येकेन रामेण मानुषेण पदातिना ॥४२॥ [३३
तस्य सैन्यस्य सर्वस्य खरः शिष्टोऽतिपौरुषात् ।
३५] राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ॥४३॥ [३४
ततस्तु तद् भीमबलो बलं रणे
समीक्ष्य रामेण हतं च लीलया ।
तथेति रामं सवरः खरः स्वयं
३६] समाससादेन्द्रमिवासुरेश्वरः ॥४४॥ [३५

इत्यार्षे रामायणे आरण्यकाण्डे दूषणवधो
नाम एकत्रिंशः सर्गः ॥३१॥

---

१. भ च—छिन्नभिन्नशिरोधराः ।
२. भ च—तदा निहतराक्षसम् ।
३. अ म—निरपेक्षं च । ला—नियतप्रख्यं ।
४. भ च—रामं रिपुनिसू ( षू ? ) दनं ।
५. कै—बलो बलो । भ च—°बलोपमं ।
६. ल—रयां ।
७. भ च—बलं यथा ।
८. भ च—रथेन ।
९. भ च—महता ।

तद् दृष्ट्वा राक्षसं सैन्यमनिग्राह्यं[1] महाबलम् ।
N] हतमेकेन रामेण दूषणं[2] च निपातितम् ॥१॥ [N
खरं च रामाभिमुखं प्रयान्तं[3] वाहिनीपतिम्[4] ।
१] राक्षसस्त्रिशिरा नाम सन्निवेश्येदमब्रवीत्[5] ॥२॥ [१
मां नियोजय विक्रान्तं[6] सन्निवर्तस्व साहसात् ।
२] पश्य रामं महावीर्यं संयुगे विनिपातितम्[7] ॥३॥ [२
प्रतिजानामि ते वीर्यात् सत्येनायुधमालभे ।
३] यथा रामं हनिष्यामि रिपुं वै सर्वरक्षसाम् ॥४॥ [३
अहं वास्य[8] रणे मृत्युरेष वा समरे मम ।
४] विनिवर्त्य रणोत्साहं मुहूर्तं प्रेक्षको[9] भव ॥५॥ [४
प्रहृष्टो वा [10]हते रामे जनस्थानं गमिष्यसि ।
५] मयि वा निहते रामं संयुगायोपयास्यसि ॥६॥ [५
खरस्त्रिशिरसा ह्येवं मृत्युकाले प्रसादितः । [६पू
६] एवमस्त्विति तद् वाक्यं प्रहृष्टो राक्षसोऽब्रवीत् ॥७॥ [N

---

१. भ च—°मनिर्ग्राह्यं ।
२. म—दूषिणं ।
३. म—प्रयातं ।
४. अ—वाहिनीपतिः
  ब—नास्ति ।
५. कै रा म—सन्निवेश्यें० ।
६. अ—विक्रान्त ।
७. भ च—च निपातितं ।
८. अ ल ब म भ च—चास्य ।
९. अ म—प्रेक्ष्यको ? ।
१०. कै हतो ।

ततः प्रहृष्टस्त्रिशिराश्चापमुद्यम्य वीर्यवान् । [N
७] गच्छ युद्धेऽभ्यनुज्ञातो[1] राघवाभिमुखो[2] ययौ ॥८॥ [६३
एतस्मिन्नन्तरे सैन्यं समरे रक्षसां महत् ।
८] अन्वेव तं त्रिशिरसं हतशेषं न्यवर्तत ॥९॥ [N
त्रिशिराश्च[3] रथेनैव वाजियुक्तेन भास्वता ।
N] अभ्यधावदथो[4] रामं त्रिशृङ्ग[5] इव शैलराट् ॥१०॥ [७
शरधारासहस्राणि महामेघ इवासृजत्[6] ।
९] व्यसृजत्[7] सुभृशं नादं जलक्लिन्नस्य दुन्दुभेः[8] ॥११॥ [८
आपतन्तं त्रिशिरसं रणे संप्रेक्ष्य राघवः ।
१०] चक्षुषा[9] चातिजग्राह विधून्वन् समरे शरान् ॥१२॥ [९
स सम्प्रहारस्तुमुलो रामत्रिशिरसोस्तयोः ।
११] बभुव हृदयायासी सिंहकुञ्जरयोरिव ॥१३॥ [१०
१३उ] ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः ।
अमर्षी कुपितो[10] रोषाद् रामो वचनमब्रवीत् ॥१४॥ [११
१४] अहो संग्रामशौण्डस्य रक्षसो बलमीदृशम् ।
पुष्पैरिव शरैरस्त्रैर्ललाटेऽस्मि परिक्षतः[11] ॥१५॥ [१२

---

१. रा—ऽत्यनुज्ञातो ।
२. च—°भिमुखं ।
३. भ—त्रिशिरश्च ।
४. भ च—°धावद्रथी ।
५. के—त्रिशीर्ष (अयं पाठः पुनरपरकरेण संशोध्य प्रान्तभागे न्यस्तः ।)
६. भ च—इवासृजन् ।
७. के रा—व्यसृजन् ।
८. अ—दुर्मतेः ।
९. भ च—धनुषा ।
१०. म—रुपितो ।
११. ल—परिक्षितः ।

१६] मया प्रतिगृहीतास्ते शराश्चापमुखाच्च्युताः । [N
N] ममापि प्रतिगृह्णीष्व सायकान् प्रहरामि ते ॥१६॥ [१३पू
एवमुक्त्वा[2] सुसंक्रुद्धः शरानाशीविषोपमान्[3] ।
३१] त्रिशीर्षोरसि संक्रुद्धो निचखान चतुर्दश ॥१७॥ [१३उ
चतुर्भिश्च चतुर्भिश्च तुरगांस्तस्य मार्गणैः[4] ।
३२] न्यपातयत तेजस्वी चतुरो रथयोजितान् ॥१८॥ [१४
सायकैश्चाष्टभिः सूतं रथोपस्थादपातयत् ।
३३] रामश्चिच्छेद बाणेन ध्वजं चामितविक्रमः ॥१९॥ [१५
ततो[5] हतरथात् तस्मादापतन्तं निशाचरम् ।
३५] बिभेद तरसा[6] रामो हृदये दशभिः शरैः ॥२०॥ [१६
शिरांसि चैव संक्रुद्धो रामो राजीवलोचनः ।
३६] त्रीणि त्रिभिः सुसंक्रुद्धो[7] न्यकृन्तत् प्रहसन्निव ॥२१॥ [१७उ
स भूमौ शोणितोद्गारी रामबाणेन पीडितः ।
३७] न्यपतत् पतितैः[8] पूर्वं शृङ्गैरिव महागिरिः ॥२२॥ [१८
हतशेषास्तथा भग्ना राक्षसाः खरसंश्रयाः ।
N] द्रवन्ति नैव तिष्ठन्ति व्याघ्रत्रस्ता[9] मृगा इव ॥२३॥ [१९

---

१ म—चापमुखाः च्युताः । ल—मुखाश्च्युताः ।

२. अ—एवमुक्तः ।

३. म—विशोमवन् ? ।

४. भ च—रथवाजिनः ।

५. अ—हतो ।

६. भ च—रामस्तरसा ।

७. च—स संक्रुद्धो ।

८. भ च—पातितैः ।

९. कै रा ल अ व म—व्याघ्रध्वस्ता ।

अनुयात्रानिमित्तं ये[1] जनस्थानादुपागताः[2] ।
N] श्रुत्वा विपन्नं तत् सैन्यमन्तरालघुवि[3]क्रमम् ॥२४॥ [N
तान् खरो[4] द्रावितान् दृष्ट्वा निवर्त्य च ततः स्वयम् ।
N] राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥२५॥[5]

इत्यार्षे रामायणे आर[6]ण्यकाण्डे त्रिशिरो वधो
नाम द्वात्रिं[7]शः सर्गः ॥३२॥

---

१. भ च—ये ।
२. भ च—०दुपागतम् ।
३. भ च—०रालघुविक्रमम् ।
४. म—खरान् ।
५. भ च—अतः परमधिकः पाठः—
इतानि रक्षांसि समीक्ष्य सर्वतः त्रिशीर्षमाजावनुजं च दूषणम् ।
रथेन दीप्तानलतुल्यवर्चसा खरः प्रगृह्याभिससार राघवम् ॥
६. कै भ—नास्ति ।
७. कै रा ळ म व भ च—नास्ति ।

N] हतं सैन्यं समालोक्य[1] प्रधानान् रजनीचरान् । [N
४०पू] हतं च दूषणं दृष्ट्वा तथा[2] त्रिशिरसं तु तम् ।
४३उ] खरस्य[3] प्राभवत् त्रासो दृष्ट्वा राघवविक्रमम् ॥१॥ [१
N] दृष्ट्वा स[4] राक्षसं सैन्यमविषह्यं महाबलम् ।
४२उ] हतमेकेन रामेण मानुषेण पदातिना ॥२॥ [२
N] बलं तच्चैवं भूयिष्ठं[5] विमनाः प्रेक्ष्य राक्षसः ।
३४,२उ] आससाद खरो रामं नमुचिर्वज्रिणं यथा ॥३॥ [३
स विकृष्य महच्चापं नाराचानग्नितेजसः ।
३] घोरांश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥४॥ [४
ज्यां विधुन्वन् सुबहुशः शिक्षामस्त्रेषु दर्शयन् ।
४] चकार विविधान् मार्गान् बाणै[6] रथगतः खरः ॥५॥ [५
स सर्वाश्च दिशो बाणैर्विदिशश्च महाबलः ।
५] पूरयामास तं दृष्ट्वा रामोऽपि सुमहद् धनुः ॥६॥ [६
स सायकैर्दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः ।
६] रामश्चकार निविडं[7] पर्जन्य इव वृष्टिभिः ॥७॥ [७

---

१. कै भ च—समालक्ष्य ।

२. भ च—तत्र ।

३. कै—खरस्याप्यभवत् । भ च—खरस्यास्याभ० ।

४. भ च—च ।

५. भ च—च हतभूयिष्ठं ।

६. भ—बाणैरबगतः । अ—बाणैर्धंगतैः ।

७. भ च—विवरं ।

तद् रुक्मभूषणैर्बाणैः[1] खररामविसर्जितैः ।
७] अनो[2]वकाशमाकाशं सर्वतः शरसंकु[3]लम् ॥८॥ [८
शरजालावृतः सूर्यस्तत्र नातिप्रकाशते ।
८] अन्योन्यमभिसंरम्भादुभयोः संप्रवृद्ध[4]योः ॥९॥ [९
ततो नालीकनाराचैस्तीक्ष्णाग्रै[5]श्च विकर्णिभिः ।
१०] आजघान रणे रामं तोत्रैरिव महाद्विपम् ॥१०॥ [१०
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् ।
११] ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥११॥ [११
तं सिंहमिव संक्रुद्धं सिंहस्क[6]न्धं महाबलम् । [१३पू
१२] अज्ञाना[7]ज् ज्ञानसंपन्नमभ्यधावत् खरो रणे ॥१२॥ [N
स तेनाग्निनिकाशेन रथेन महता खरः ।
१३] आससाद रणे रामं पतङ्ग इव पावकम् ॥१३॥ [१४
ततोऽस्य सशरं चापं मुष्टिदेशे महाबलः ।
१४] खरश्चिच्छेद रामस्य दर्शयन् पाणिलाघवम् ॥१४॥ [१५
स ततस्त्व[8]परान् सप्त शरानादाय वर्म[9]णि ।

---

१. भ च—बभूव शितै ।

२. ल—अनवकाश० ।

३. अ—मण्डलम् । भ—शरसंगलम् ।

४. भ च—संप्रविष्टयोः ।

५. भ च—तीक्ष्णाग्रैश्चापिक० ।

६. अ—सिंहस्कन्दं ।

७. भ च—अज्ञानात् ।

८. ल—ततस्त्वमपरान् ।

९. ल—कर्मणि । रा—विवख्यान ।

N] वि[1]चखान ततः क्रुद्धः शक्राशनि[2]समस्वनान् ॥१५॥ [१६
ततस्तत्प्रहितै[3]र्बाणैः खरमुक्तैः सुप[4]र्वभिः ।
१८] पपात कवचं भूमौ रामस्यादि[5]त्यवर्चसम् ॥१६॥ [१७
स शरैः पातितं दृष्ट्वा कवचं पावकोप[6]मम् ।
२०] बभूव रामः सम[7]रे विधूमोऽग्निरिव ज्वलन् ॥१७॥ [१९
ततोऽशनिसमप्रख्यं त[8]था शत्रुनिबर्हणम् ।
N] चकार सशरं घोरं सज्जमा[9]शु महाबलः ॥१८॥ [२०
२२] सुमहद् वैष्णवं यत्त[10]दतिसृष्टं महर्षिणा ।
२३उ] वरं तद् धनुरुद्यम्य समरे सोऽभ्य[11]धावत ॥१९॥ [२१
ततः काञ्चनपुंखेन शरेणोन्नतपर्व[12]णा ।
२४] चि[13]च्छेद बहुधा रामः खरस्य समरे ध्वजम् ॥२०॥ [२२
स दर्शनीयो बहुधा विशीर्णः[14] काञ्चनो ध्वजः ।

---

१. कै—विचख्नान । रा—विवख्यान । अ—निश्चखान ।
२. ब—शराशनिस० ।
३. भ च—°स्तत्प्रहतं वाणैः ।
४. ल अ ब—सुपत्रितैः ।
५. ल च—°दितिवर्चसम् ।
६. अ—पावकोत्तमम् ।
७. अ—संसारे ।
८. कै—धनुः । (अयं पाठः 'तथा, इत्यस्यैव स्थाने पश्चादन्येन लिखितः प्रान्तभागे) । भ च—तदा ।
९. ब ल—सज्यमाशु ।
१०. ब भ च—तदतिदिष्टं ।
११. भ—चाभ्यधावत । च—वाभ्यधावत ।
१२. भ च—शरेणानतपर्वणा ।
१३. कै रा अ—चिच्छेद । ल—विच्छेदं । ल ब—विच्छेदं । म—बिच्छेद ।
१४. च—विस्तीर्णः ।

२५] जगाम स्वपुरीं सूर्यो देवतानामिवाज्ञया ॥२१॥ [२३

तं चतुर्भिः खरं क्रुद्धो रामो विव्याध मार्गणैः ।

२६] विव्याध हृदि धर्मज्ञो मातङ्ग इव कोपितः ॥२२॥ [२४

रामोऽपि बहुभिर्बाणैः खरकार्मुकनिःसृतैः ।

२८] विद्धो रुधिरसिक्ताङ्गो बभूव कुपितः स्वयम् ॥२३॥ [२५

स धनुर्धन्विनां श्रेष्ठः प्रगृह्य पुरुषोत्तमः ।

२९] मुमोच परमेष्वासाच्छरानमितलक्षितान् ॥२४॥ [२६

३०पू] शिरस्येकेन विव्याध द्वाभ्यां च द्वौ भुजौ प्रभुः ।

N] त्रिभिश्चन्द्रार्धवक्रैश्च शरीरं तस्य रक्षसः ॥२५॥ [२७

ततः पश्चान्महातेजा नाराचान् भास्करप्रभान् ।

N] खराय रामश्चिक्षेप त्रयोदश शिलीमुखान् ॥२६॥ [२८

३२उ] ततोऽस्य युगमेकेन चतुर्भिश्चतुरो हयान् ।

N] षष्ठेन च शिरः संख्ये शरेण रथसारथेः ॥२७॥ [२९

त्रिभिस्त्रिवेणुं प्रमथन् द्वाभ्यामक्षं महाबलः ।

N] द्वादशेन च बाणेन खरस्य सशरं धनुः ॥२८॥ [३०

छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव ।

N] त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥२९॥ [३१

स निर्भिन्नोऽथ विरथो हताश्वो हतसारथिः ।

---

१. म—सुपुरीं ।

२. रा—खरः ।

३. भ—मार्गज्ञो । च—मार्गज्ञो ।

४. भ च—परमेष्वासः षट् शरानभिकर्षितान् ।

५. भ च—खरस्य ।

६. भ—ध्वजमेकेन ।

७. भ च—तु ।

३३] गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा[1] ॥३०॥ [३२

तद् कर्म रामस्य महाबलस्य

समीक्ष्य देवाश्च महर्षयश्च ।

अपूजयन् प्राञ्जलयः प्रहृष्टा-

३६] स्तदा विमानाग्रगताः समेताः ॥३१॥ [३३

इत्यार्षे रामायणे आरण्यकाण्डे विरथीकरणं[2]

नाम त्रयस्त्रिंशः सर्गः ॥३३॥

---

१. भ च—खरस्तथा ।

२. रा—खराविरथकिरणं ।

अ भ च—खराविरथीकरणो ।

म—विरथो ।

खरं तु विरथं[1] रामो गदापाणिमवस्थितम्[2] ।
१] मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥१॥ [१
गजाश्वरथसंबाधे बले महति तिष्ठता[3] ।
२] इदं ते दारुणं कर्म कृतं लोके जुगुप्सितम् ॥२॥ [२
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।
३] त्रयाणामपि लोकानामीश्वरो नावतिष्ठति ॥३॥ [३
कर्म लोकविरुद्धं[4] तु कुर्वाणं[5] क्षणदाचर ।
४] तीक्ष्णं[6] सर्वो जनो[7] हन्ति सर्पं दुष्टमिवागतम्[8] ॥४॥ [४
लोभात् पापानि कुर्वाणः पापात्मा यो न बुध्यते ।
५] हृष्टः[9] पश्यति तस्यान्तं[10] ब्राह्मणः[11] कारकादिव ॥५॥ [५
वसतो दण्डकारण्ये तापसान् धर्मचारिणः ।

---

१. ब—विरथो ।
२. रा म—गदापाणिरवास्थितम् ।
३. ल ब—तिष्ठतः ।
४. ल ब—लोके विरुद्धं ।
५. भ च—कुर्वाणः ।
६. ब—तीक्ष्णः ।
७. के रा—मर्त्यजनं । ल—हन्तिजनं । अ म—संत्यजनं ? ब—साधुजनं ।
८. के रा ल अ ब म—सर्पो दुष्टमिवा० ।
९. के रा ल अ ब म—दुष्टः ।
१०. के रा अ म च भ—तस्यान्ते ।
११. च—ब्राह्मणो नरकादिव ।
(वस्तुतस्तु 'ब्राह्मणी करकादिव' इति अत्र: पाठः प्रतिभाति । परमस्मदाधारकोशेषु च 'ब्राह्मणः कारकादिवेत्येव' प्रायिकः पाठः । स एव हि मूले न्यस्तः इति स्वयमत्र विद्वांसो याथातथ्यं विचिन्वन्तु ।)

७] किं नु हत्वा महाभागान् फलं प्राप्तं हि राक्षस ॥६॥ [६
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः ।
८] ऐश्वर्यं प्राप्य तिष्ठन्ति जीर्णमूला इव द्रुमाः ॥७॥ [७
अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
९] क्षयं पर्यागते काले द्रुमः फलमिवार्तौ ॥८॥ [८
न चिरात् प्राप्यते लोके पापानां कर्मणां फलम् ।
१०] सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥९॥ [९
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ।
११] अहमासादितो राजा प्रजानां शङ्करस्त्वया ॥१०॥ [१०
अद्य हि त्वां मया मुक्ताः शराः काञ्चनभूषणाः ।
१२] विदार्यातिपतिष्यन्ति वल्मीकमिव पन्नगाः ॥११॥ [११
ये त्वया दण्डकारण्ये भक्षिताः परमर्षयः ।
१३] तानद्य निहतः संख्ये ससैन्योऽभिगमिष्यसि ॥१२॥ [१२
अद्य त्वां निहतं बाणैः पश्यन्तु परमर्षयः ।
१४] निरयस्थं विमानस्था ये त्वया हिंसिताः पुरा ॥१३॥ [१३

---

१. भ च—तु ।
२. कै राल अ ब म—महाभाग ।
३. रा अ—पटगते ।
४. भ च—°माचरतां ।
५. भ च—यमिच्छतां ।
६. च—प्रजानाशंकर त्वया ।
७. रा—विवार्याति॰ ।
अ—विचार्याति॰ ।
भ च—विदार्यासि॰ ।
८. अ—ते ।
९. कै रा अ म च—निहतैर्बाणैः ।
१०. अ—पश्यन्ति । म—पश्यन्त ।

राक्षसैः[1] सह[2] तान् पश्य मृधे[3] हिंसितवानसि ।
१५] यत्र[4] त्वया दण्डकारण्ये सर्वाः परिचरन्[5] दिशः ॥१४॥[N
कर्मणस्तस्य घोरस्य फलं भुङ्क्ष्वाद्य[6] राक्षस ।
१६] अनुपापेन दत्तस्य दुरिष्टस्यैव[7] कर्मणः ॥१५॥ [N
प्रहरस्व यथाकामं कुरु यत्नं महाबल ।
१७] अद्य ते च मथिष्यामि[8] शिरस्तालफलं यथा ॥१६॥ [१४
एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः[9] ।
१८] प्रत्युवाच खरो रामं प्रहसन् क्रोधमूर्च्छितः ॥१७॥ [१५
प्राकृतान् राक्षसान् हत्वा रणे दशरथात्मज[10] ।
१९] आत्मना कथमात्मानमप्रशस्यं[11] प्रशंससि ॥१८॥ [१६

---

१. रा अ म—राक्षसः ।
२. ल व—सहितान्० । च—......न्पश्य ।
भ—सह दुष्टात्मन् ।
३. भ च—ऋषीन् हिंसितवानसि ।
४. रा—यं । भ च—ये ।
५. अ म व भ च—पर्यचरन् ।
६. रा अ म—भुक्त्वाद्य । कै—पुस्तके—
"भुक्त्वाद्य" इत्यस्य स्थाने 'भुङ्क्ष्व'
इति संशोध्य लिखितं प्रान्तभागे ।
७. भ च—दुरिष्टस्येव ।
८. प्रमथिष्यामि ।
९. ल—संकुललोचनः ।
१०. ल व म—०थात्मजः ।
११. म—०मप्रशंस्य० ।

[1]विक्रान्ता बलवन्तो वै ये भवन्ति नरा भुवि ।
२०] न ते गुणानां माहात्म्यं कथयन्ति स्वयं भुवि ॥१९॥ [१७
प्राकृतास्त्वकृतात्मानो लोकेऽस्मिन् कुलपांसनाः ।
२१] निरर्थका [2]विकत्थन्ते यथा राम [3]विकत्थसे ॥२०॥ [१८
[4]बलं व्यपदिशन् वीरः समरे कोऽ[5]भिधावति ।
२२] अन्तकालेऽपि संप्राप्ते स्वयमात्मस्तवं [6]कथम् ॥२१॥ [१९
सर्वथा तु लघुत्वं ते [7]कथितं न विदर्शितम् ।
२३] सु[8]वर्णप्रतिरूपेण [9]तप्यसे वै शि[10]खाग्निना ॥२२॥ [२०
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम् ।
२४] धराधरमिवाक्षोभ्यमे[11]कंचक्रमिवाचलम् ॥२३॥ [२१
पर्याप्तोऽहं गदापाणिः [12]प्राणान् हन्तुं रणे तव ।
२५] त्रयाणामपि लोकानां पाशह[13]स्त इवान्तकः ॥२४॥ [२२

---

१. रा अ म—विक्रान्तबल० ।

२. रा—विकर्थन्ते । म—हि कुर्वन्ति ।

३. रा—विकर्थसे ।

४. भ च—कुलं ।

५. भ च—°भिधास्यति ।

६. भ च—बलं ।

७. भ च—कथितेन वि० । ब—कथितं न हि द्(र्शि० ।

८. म ल—स्ववर्ण० ।

९. म—तपस्ये ? ।

१०. म च—रुषाग्निना ।

११. भ च—°श्रृङ्गमि० ।

१२. ब—प्राणानीह ।

१३. भ च—°हस्तमिवान्तकम् ।

कामं न बहु वक्तव्यं त्वया मय्यग्रतः स्थिते ।
२६] अस्तं गच्छेद्धि सविता युद्धविघ्नं[1] तदा भवेत् ॥२५॥ [२३

इत्यार्षे रामायणे[2] आरण्यकाण्डे खर[3]संवादो
नाम चतुस्त्रिंशः[4] सर्गः ॥३४॥[5]

---

१. ल—युद्धविघ्नस्तदा ।
भ च—युद्धयज्ञस्तदा ।

२. ब—नास्ति ।

३. अ—रामखर० ।

४. कै रा ल ब म—नास्ति ।

५. भ च—सर्गसमाप्ति र्न दृश्यते ।
भ—पुस्तके पश्चात्केनापि प्रान्तभागे सर्गसमाप्तिर्दर्शिता ।

अग्रतस्तु स्थितं दृष्ट्वा तुष्यतीदं मनो मम ।
२७] रणे यस्य तु तुष्यामि स मुहूर्तं न जीवति ॥१॥ [२४
मम कृत्वाप्रियं राम दुर्लभं तव जीवितम् ।
२८] तोयवर्षमिवावर्षे चातकस्येव वार्शतः ॥२॥ [२५
यानि त्वया राक्षसानां सहस्राणि चतुर्दश ।
२९] हतानि तेषां हत्वा त्वां करिष्येऽश्रुप्रमार्जनम् ॥३॥ [२६
अद्य ते गदया राम शिरो मौलिविभूषणम् ।
३०] पातयामि क्षितौ वेगाद्रुरूपांसूत्करान्वितम् ॥४॥ [N
ततो रुधिरनिःष्यन्दैस्त्वच्छरीरप्रवर्तितैः ।
३१] करिष्याम्युदकं तेषां हतानां सर्वरक्षसाम् ॥५॥ [२७
इत्युक्त्वा परमक्रुद्धस्तां गदां हेमभूषिताम् ।

---

१. भ—स्थितिं० ।

२. भ—रुष्यतीदं ।

३. ल अ व म—रुष्यामि ।

४. भ च—वासतः ।

५. रा—राक्षसानां ।

६. भ च—०विभूषितम् । ल—विभीषणाम् ?

७. ल अ व म—०त्करावृतम् ।
भ च—वेगाद्दुष्टपांसूत्करान्वि° ।

८. भ—निस्यन्दैः ।

९. के रा व म—भरिष्याम्युदरं ।
ल—भविष्यामि धरं ? । अ—०विष्याम्युदरं ।

१०. अ व ल म—युधि रक्षसाम् ।

११. ल—इत्युक्तः ? ।

४०] खरश्चिक्षेप रामाय प्रदीप्तामशनीमिव ॥६॥ [२८

४१पू] सा क्षिप्ता तेन[1] वेगेन प्रदीप्ता महती गदा ।

४२पु] भस्म वृक्षांश्च गुल्मांश्च प्रचकार समीपगान्[2] ॥७॥ [२९

तामापतन्तीं ज्वलितां मृत्युपाशोपमां गदाम् ।

४९] अन्तरिक्षगतां रामश्चिच्छेद बहुसायकैः[3] ॥८॥ [३०

सा विकीर्णा शरैश्छिन्ना[4] पपात धरणीतले ।

N] गदा मन्त्रौषधैर्घोरैर्व्यालीव विनिपातिता ॥९॥ [३१

तां निकृत्तां गदां दृष्ट्वा रणे रामेण भूतले ।

५४] न विव्यथे खरः संख्ये धराधर इवाचलः ।

N] न विषादोऽभवत् तस्य न चोत्साहस्तदग्रतः[5] ॥१०॥ [N

छित्त्वा तां तु[6] गदां रामो रणे राजीवलोचनः ।

५६] स्मितपूर्वं खरं वाक्यमिदं दाशरथोऽब्रवीत् ॥११॥[स० ३०, १

५९उ] एतत् ते[7] खलु सर्वस्वं[8] मया भुवि निपातितम्[9] ।

N] हीनशक्तिरशक्तस्त्वं वृथैवं[10] परिकत्थसे ॥१२॥ [२

५८पू] इयं बाणशतैश्छिन्ना गदा ते पातिता मया ।

५९पू] अभिमानप्रगल्भस्य तव प्रत्ययनाशिनी ॥१३॥ [३

---

१. भ—तस्य । च—सर्व० ।

२. च—समीपजान् ।

३. भ च—बहुधा शरैः ।

४. ला—शरैर्भिन्ना ।

५. म—नगोत्सा० । भ च—नचोत्साहं व्यमुंचत ।

६. भ च—तु तां ।

७. च—एतत्तु ।

८. च—बलसर्वस्वं

९. भ च—तु भुवि पातितं ।

१०. के दा ल—वृथैवं

त्वयोक्तं[1] च विनष्टानामयमश्रु[2]प्रमार्जनम् ।
५७] राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥१४॥ [४
६०उ] नीचस्य क्षुद्रवृत्तस्य सद्वृत्तपरिवादिनः ।
६१] प्राणान[3]पहरिष्यामि गरुत्मानमृतं यथा ॥१५॥ [५
अद्य ते कण्ठनिर्गीर्णं[4] फेनबुद्बुदभूषितम् ।
६२] निकृत्तास्यस्य[5] तद्बाणैर्मही पास्यति शोणितम् ॥१६॥ [६
पांसुभूषित[6]सर्वाङ्गः सुसंन्यस्त[7]भुजद्वयः ।
६३] स्वप्स्यसे गां समालिंग्य सुदतीं[8] वल्लभामिव ॥१७॥ [७
६४उ] प्रवृद्धनिद्रां[9] शयिते त्वय्यद्य मुनिकण्टके ।
भविष्यन्त्यद्य[10] शरणा शरण्या दण्डकाश्चिरम् ॥१८॥ [८
६५] जनस्थाने हतस्थाने[11] तव राक्षस मच्छरैः[12]
निर्भया विचरिष्यन्ति सर्वतो मुनयो वनम् ॥१९॥ [९
६६] अद्य शोकरसज्ञास्ता[13] भविष्यन्ति निशाचर ।

---

१. भ च—यत्त्वयोक्तं ।
२. कै रा अ—°यमस्नुम° । ल°—यमस्न° ।
३. अ – प्राणान् परिहरिष्यामि ।
४. कै रा ल—निर्गूर्णं । अ ब म—निर्गूढं ।
५. अ—निकृत्तास्तस्य ।
६ भ—पांशुरूषितस° ।
७. अ—सुसंन्यं च भुजद्वयम् । म—सुसंन्य च भुजद्वयम् ।
८. अ म—सुन्दतीव° । अ म—सुदंतीव° ।
९. ल अ ब म—प्रवृद्धनिद्रां शयिते भ च—प्रवृद्धनिद्राशयिते ।
१०. भ च—° न्यशरण्यानां ।
११. च—कृतस्थाने ।
१२. भ च—मत्सरे ।
१३. म—शोकैरसज्ञास्ता ।

अनुरूपगुणाः पत्न्यो यासां त्वं पतिरीदृशः[1] ॥२०॥ [११
६७] अद्य विप्रसहिष्यन्ते[2] राक्षस्यो[3] हतबान्धवाः ।
N] सबाष्पदीनवदना भयान्मम महावनात्[4] ॥२१॥ [१०
६८उ] नृशंसशील दुष्टात्मन्[5] नित्यं ब्राह्मणकण्टक[6] ।
६९पू] त्वत्कृते शङ्कितैर्हव्यं मुनिभिर्हूयतेऽनले ॥२२॥ [१२
विश्वस्तानामविश्वस्तं मुनीनां भावितात्मनाम् ।
N] क्रूरात्मा सह रक्षोभिर्यैस्त्वं पापाभिवर्तसे ॥२३॥ [N
६९उ] त इमेऽद्य हता दिष्ट्या[7] मया तापसकण्टकाः ।
अधर्मस्य फलं सद्यः प्राप्तं यैः सह संयुगे ॥२४॥ [N
७१] तमेवमभिसंरब्धं[8] ब्रुवाणं राघवं रणे ॥
खरो निवर्तयामास क्रोधात् खरतरं वचः ॥२५॥ [१३
७२] दृढं[9] खल्ववलिप्तोऽसि भयेषु न बिभेषि च ।
वाच्यावाच्यं[10] तथा[11] हि त्वं मृत्युवश्यो न बुध्यसे ॥२६॥ [१४

---

१. कै रा ल अ ब म—संततिरी° ।

२. 'विप्रसहिष्यन्ते' = अभिभूताः पलायिष्यन्ति इत्यर्थकरणेनैव मूलस्थःपाठः कदाचित्संगच्छेत, 'अधेः प्रसहने' इत्यत्र प्रसहनमाभिभव इति काशिकावचनात् । वस्तुतस्तु—ल—पुस्तकस्थः 'विप्रवासिष्यन्त, इत्येव रम्यः पाठः । भ—वै विलपिष्यन्ति । च—विप्रस्थसिष्यन्ति ।

३. म—राक्षसो ।

४. भ च—महावने ।

५. ल—°दुष्टात्म ।

६. कै रा—°णकण्टके ।

७. ल ब म—दुष्टाः ।

८. ल—तमेव सहसंरब्धं ।

९. भ—दृढः ।

१०. अ—वश्यावश्यं । म—वाश्यावाश्यं ।

११. अ—यथा ।

७३] कालपाशपरिक्षिप्तो भवेत[1] पुरुषो यदा ।
७४पू] वाच्यावाच्यं न जानीते प्राकृतोऽसौ भवेत् तदा ॥२७॥ [१५
७६उ] एवमुक्त्वा[2] तु[2] संरब्धः संस्तभ्य[3] भ्रुकुटीं[4] ततः ।
रणे प्रहरणार्थाय सर्वतो व्यवलोकयन्[5] ॥२८॥ [१६
७७] स ददर्श महासालमविदूरे[6] निशाचरः । [ N
स तमुत्पाटयामास सन्दष्टौष्ठपुटं[7] लघुं[8] ॥२९॥ [१७
७८] समुत्क्षिप्य महावृक्षमभ्यधावन्महाबलः ।
राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥३०॥ [१८
७९] तमापतन्तं बाणौघैश्चिच्छेद रघुनन्दनः ।
८०पू] रोषमाहारयत् तीव्रं निहन्तुं संयुगे खरम् ॥३१॥
जातस्वेदस्ततो रोषाद् रामो रक्तान्तलोचनः ।
८३] निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥३२॥[9] [१९
तस्य बाणान्तरे रक्तं बहु सुस्राव तत् तदा ।
८४] गिरेः[10] प्रस्रवणान्तस्य तोयधारा इवाम्बरात्[11] ॥३३॥ [२१

---

१. भ च—भवते ।

२. ल—एवमुक्तस्तु ।

३. कै—संरमय ? । रा—संरभु ? । ल—संस्तभ्य । भ च—संरभ्य

४. ल—भृकुटीं ।

५. कै रा ल ब भ—व्यवलोकयत् ।

६. भ च—महाशाल° ।

७. भ च—संदष्टौष्ठपुठो ।

८. ब—यथ

९. अ—नास्ति ।

१०. अ—स तमापततस्तस्य ।

११. ल—°वासुरात् ।

विह्वलश्च[1] कृतो बाणैः खरो रामेण धीमता ।
८५] मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्[2]द्रुतम् ॥३४॥ [२२
तमेवाभ्यद्रवत्[3] क्रुद्धं कृताङ्गं रुधिरोक्षितम् ।
८६] अपसर्पन् प्रतिपदं[4] किञ्चिच्चैव परिक्रमन् ॥३५॥[5] [२३
८७पू] ततः पावकसङ्काशं[6] वधाय समरे शरम् ।
N] खरस्य रामो जग्राह ब्रह्मदण्डमिवोद्यतम्[7] ॥३६॥ [२४
८८पू] उग्रमस्त्रं[8] महद्[9] दत्तं सुरराजेन धीमता ।
८९पू] सन्धाय[10] रामो धर्मात्मा मुमोचाशु खरं प्रति ॥३७॥ [२५
स विमुक्तो महावेगो[11] निर्घातसमनिःस्वनः ।
९०] रामेण धनुरुद्यम्य[12] खरस्योपरि पातितः ॥३८॥ [२६
९२पू] ततः पावकसङ्काशः प्रज्वलन्निव तेजसा ॥३९॥ [N
स पपात खरो भूमौ दह्यमान इवाग्निना ।
९३] रुद्रेणेव विनिर्दग्धः श्वेतस्यार्थे यथान्तकः[13] ॥४०॥ [२७
स वृत्र[14] इव वज्रेण फेनेन नमुचिर्यथा ।

---

१. भ च—विह्वलः स हतो ।
२. भ च—°भ्यगमन् ।
३. ल—°भिद्रुवत् ।
४. अ—प्रतिपदां ।
५. भ च—नास्ति ।
६. म—°संकासं ।
७. ल—°मिवोदितम् ।
८. च—उग्रशेशं । भ—स दत्तं ।
९. भ—तमगस्त्येन ।
१०. रा—संदाय ।
११. भ च—महातेजाः ।
१२. कै रा—धनुरानम्य । भ च—धनुरायम्य ।
१३. ल—यथाग्निना ।
१४. अ म—वृत्ता ।

९४] वेगेनेन्द्राशनिनिभः पपात निहतः खरः ॥४१॥ [२८
ततो देवर्षयः सर्वे[1] गन्धर्वाश्च महर्षयः ।
९८] सभाज्य मुदितं[2] राममिदं वचनमब्रुवन्[3] ॥४२॥ [२९
एतदर्थं महातेजा महेन्द्रः पाकशासनः ।
१०२] शरभङ्गाश्रमं पुण्यमाजगाम महीतले[4] ॥४३॥ [३०
आनीतस्त्वमिमं देशमुपायेन महर्षिभिः ।
१०३] एवं[5] वधार्थं शूराणां रक्षसां क्रूरकर्मणाम् ॥४४॥ [३१
तदिदं सत्कृतं कार्यं त्वया दशरथात्मज ।[6]
१०४] सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ॥४५॥ [३२
एते देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
१०५] जयाशीर्भिः स्तुवन्ति त्वां विस्मिताः पश्य राघव ॥४६॥ [ N
इदं दृष्ट्वा सुयुद्धं ते ब्रह्मा वेदविदां[7] वरः ।
१०६] देवैः परिवृतः[8] सर्वैर्विस्मितस्त्वां संभाजयन्[9] ॥४७॥ [ N
प्रीतश्चैव महादेवः सर्वैः परिषदैः सह ।
१०७] जये त्वां च[10] विमानस्थः सभाजयति राघव ॥[11]४८॥ [N

---

१. ल ब—सर्वे ।
२. भ च—मुदिताः ।
३. ल अ म—°मब्रवीत् ।
४. अ—°तलं ।
५. रा ल म ब— एष ।
६. रा ब—नास्ति ।
७. भ च—ब्रह्मविदां°
८. भ—परिवृतैः ।
९. ब—°स्त्वामभाजयत् ।
१०. भ च—जयेन त्वां
११. म—नास्ति ।

एवमुक्तस्तु[1] धर्मात्मा मुनिभिर्भावितात्मभिः ।
१०८] नमश्चक्रे विमानस्थान् दृष्ट्वा दूराद् दिवौकसः ॥४९॥[2] [N
एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ।
१०९] गिरिदुर्गाद् विनिष्क्रम्य पुनरायात्[3] स्वमाश्रमम् ॥५०॥ [३७
राघवोऽपि खरं हत्वा पूज्यमानो महर्षिभिः ।
११०] प्रविवेशाश्रमपदं लक्ष्मणेनाभिवादितः[4] ॥५१॥ [३८
दृष्ट्वा विजयिनं रामं महर्षीणां सुखावहम् ।
१११] सीता परमसंहृष्टा परिष्वज्येदमब्रवीत् ॥५२॥ [३९
दिष्ट्यार्यपुत्र सत्या[5] ते प्रतिज्ञा सफलीकृता[6] ।
११२] मुनीनां सततं शत्रुं हत्वैनं राक्षसं खरम् ॥५३॥ [N
सुखं धर्मं चरिष्यन्ति मुनयो हतकण्टकाः ।
११३] त्वद्बाहुबलमाश्रित्य ह्यस्मिन्नियमितेन्द्रियाः ॥५४॥ [N
ततः स रामो मुदितः सलक्ष्मणः[7]
आश्वास्य[8] सीतां[9] मृगचारुलोचनाम् ।
उवास तस्मिन् मुदितः स्वकाश्रमे
११५] सभाज्यमानो मुनिभिः समागतैः ॥५५॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे[10] खरवधो
नाम पञ्चत्रिंशः[11] सर्गः ॥३५॥

---

१. भ च—एवमुक्तः स । २. म—नास्ति ।
३. भ च—°द् गृहं सुखी ।
४. भ च—लक्ष्मणेनानुमोदिता ।
५. कै—प्रत्यक्षा ।
६. ब—सफली कृता ।
७. रा ल अ ब म—सलक्ष्मणो ।
८. रा ल अ ब म—आश्वास्य । भ च—प्रशस्य ।
९. म च—तां वै । १०. ब—नास्ति ।
११. कै रा ल अ ब म भ च—नास्ति ।

तानि शूर्पनखी[1] दृष्ट्वा सहस्राणि चतुर्दश ।
१] हतानि[2] रामेणैकेन मानुषेण पदातिना ॥१॥ [१
जिताहवान् महामर्षान् दुर्धर्षान्[3] सुमहाबलान् ।[4]
N] दृष्ट्वा हतान् महानादं ननाद जलदोपमम् ॥२॥ [२
२उ] तद् दृष्ट्वा कर्म रामेण कृतमन्यैः[5] सुदुष्करम् ।
आजगाम समुद्विग्ना लङ्कां रावणपालिताम् ॥३॥ [३
३] सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् ।
सहोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ॥४॥ [४
४] आसीनं सूर्यसङ्काशं ज्वलन्तमिव पावकम् ।[6] [५
५उ] दशास्यं विंशतिभुजं दर्शनीयपरिच्छदम् ॥५॥ [८पू
विशालवक्षसं रौद्रं राजलक्षणलक्षितम्[7] । [८उ
६] स्निग्धजीमूतसङ्काशं तप्तहाटकभूषितम् । [९पू
सुभुजं श्वेतदशनं महास्यं पर्वतोपमम् ॥६॥ [९उ
७] देवगन्धर्वभूतानामृषीणां च महात्मनाम् ।[8] [N

---

१. ल—शीर्षनखी ।
२. रा—हतास्मि ।
३. म—सुवर्षान् ।
४. भ च —खरं च निहतं दृष्ट्वा दूषणं च महाबलं ।
५ रा अ—कृतं सैन्यैः । म—कृतसैन्यः ।
६. भ च—आसीनं सूर्यसंकाशं कांचने परमासने ।
रुक्मवेदीकृतं साज्यं ज्वलन्तमिव पावकम् ॥
७. रा—°लक्षणाल° । भ—°लक्षणापालितम् ।
८. च—अतः परम्—
राजलक्षणलक्षितं । स्निग्धजीमूतसंकाशं तप्तहाटकभूषितम् । इति पाठः पुनरावृत्तः ।

अजेयं समरे शूरं स्थितं व्यक्तमिवान्तकम् । [N

८] देवासुरविमर्देषु[1] शक्राशनिकृतव्रणम् ।

ऐरावणविषाणाग्रैर्बहुशः[2] कृतलक्षणम्[3] ॥८॥ [N

९] वसूनां शस्त्रपातैश्च बहुशो देवसंयुगे ।

आहताङ्गं समस्तैश्च देवप्रहरणैरपि ॥९॥ [११पू

१०] अक्षोभ्यानां समुद्राणां क्षोभने[4] क्षिप्रकारणम् ॥१०॥ [११उ

भेत्तारं[5] पर्वताग्राणां पुराणां[6] च महाबलम् ।

११] उच्छेत्तारं च धर्माणां परदाराभिमर्षणम् ॥११॥ [१२

N] हन्तारं च महर्षीणां व्रतानां[7] चैव दूषणम् ।

दिव्यानां राक्षसानां च गन्धर्वाणां च संयुगे ।

१२] अस्त्राणां मानुषाणां[8] च प्रयोक्तारं महाबलम् ॥१२॥ [N

पुरीं भोगवतीं गत्वा पराजित्य च वासुकिम् ।

१३] तक्षकस्य प्रियां भार्यां सुन्दरीमाजगाम[9] यः ॥१३॥ [१३

येन वैश्रवणो राजा बलाद् विक्रम्य निर्जितः ॥१४॥ [N

---

१. °रविमन्देषु ।

२. भ—ऐरावत° ।

३. भ—°लक्ष्मणं ।

४. अ—चेोणनाभि प्र० ? ।

५. कै—भेत्ताग्रं । ल—भर्त्तारं ।

६. ल—पुन्नाणां । भ च—शूराणां ।

७. रा—व्रताणां ।

८. ल म—मानुषानां ।

९. भ च—°माजहार । (यद्यप्यस्मदाधारपुस्तकेषु 'आजगाम' इत्येव प्रायिकः पाठस्तथापि 'आजहार' इति रम्यः प्रतीयते । बङ्गदाक्षिणपाठयोरपि 'आजहार' इत्यस्यैवानुसारी पाठः ।)

१४] कैलासं[1] पर्वतश्रेष्ठमध्यास्ते नरवाहनः ।
विमानं पुष्पकं चैव कामगं वै जहार यः ॥१५॥ [१४
१५] प्रासाद[2]द्रुमवन्तं तं नानामृगगणाकुलम् । [N
वनं चैत्ररथं दिव्यं नलिनीनन्दनं वनम् ।
१६] विनाशयति यः क्रोधाद् देवोद्यानानि वीर्यवान् ॥१६॥[१५
चन्द्रसूर्यौ महावेगावुत्तिष्ठन्तौ परन्तपः ॥
१७] निवारयति बाहुभ्यां यः शैलशिखरे स्थितः ॥१७॥ [१६
दशवर्षसहस्राणि तपस्तप्तं महावने । [१७
१८] ऊर्ध्वपादेन गोकर्णे येन पावकसञ्चये ॥१८॥[3] [N
ब्रह्मणा समनुज्ञातं निमेषान्तरचारिणम् ।
१९] कामरूपधरत्वं यः प्रतिपेदे महारथः ॥१९॥
बालेन्दुनिभदंष्ट्राणि वह्निवद्भास्वराणि[4] च । [N
२०] स्वयंभुवे चैव पुरा शिरांस्युपजहार यः[5] ॥[6]२०॥ [१७
मन्त्रैरभिहुतं साज्यमध्वरेषु द्विजातिभिः ।

---

१. भ च—कैलाशं ।

२. म—प्रसाद० । भ च—०द्रुमसंच्छन्नं ।

३. भ—अतः परमधिकः पाठः—
हुतानि स्वत्रराशीनि ( स्वशिरांसीति ? ) पितामहमलोपयत् ।
परितुष्टश्च भगवान् ब्रह्मा लोकपितामहः ॥
वरं ददौ यथाकामं परितुष्टोऽभवत्तदा ।
कै च—कोशयोरयं पाठः प्रान्तभागे लिखितः ।

४. म—०द्भासुराणि च ।
भ च—भास्कराभानि वीर्यवान् ।

५. भ च—सः ।

६. भ च—अतः परमधिकः पाठः—
कर्मणा तेन तुष्टेन वरो दत्तः स्वयंभुवा ।
यस्य राक्षससिंहस्य पर्युत्तिष्ठेच्छिरः पुनः ॥

२१] हविर्द्धानेषु[1] यः सोममुपहन्ति महाबलः ॥२१॥ [१९
उपर्युपरि यस्यैष संगृहीतांशुरंशुमान् ।
२२] पुरीं राक्षसराजस्य भीतभीतो [2]ददर्श ह[2] ॥२२॥ [N
पुण्ययज्ञहनं क्रूरं ब्रह्मघ्नं दुष्टचारिणम् ।
२३] कर्कशं निरनुक्रोशं प्रजानामहिते रतम् ॥२३॥ [२०
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
२४] अवध्यं राक्षसैः सर्वैः संग्रामे न तु मानुषैः ॥२४॥ [१८
रावणं सर्वलोकानां सर्वलोकवि[3]रावणम् ।
२५] राक्षसी भ्रातरं क्रुद्धं[4] तं ददर्श महाबलम् ॥२५॥ [२१
तं दिव्यमाल्या[5]भरणं दिव्यवस्त्रोपशोभितम् । [२२पू
N] [6]अजेयं च[6] महेन्द्राभं[7] पौलस्त्य[7]कुलनन्दनम् ॥२६॥ [२३
अथाब्रवीद् दीप्तविशाललोचना[8]
प्रदर्शयित्वा स्वयमेव[9] मूर्च्छिता ।
सुदा[10]रुणं वाक्यमदीनभू[11]षणं
२६] महाभुजं शूर्पनखी वि[12]रूपिता[12] ॥२७॥ [२४

इत्या[13]र्षे रामाय[13]णे आरण्य[14]काण्डे शूर्पनखीतर्जनं
नाम षट्[15]त्रिंशः सर्गः ॥३६॥

---

१. कै ल ब—हाविर्द्धानेषु । २. भ च—ऽतिवर्तते ।
३. रा अ म—निवारणम् । ४. भ च—क्रुद्धा ।
५. ल अ ब म—०मालाभरणं । ६. ब—राक्षसेन्द्रं ।
७. अ—०न्द्राभमगस्त्यकु० । ८. भ च—०लोचनं ।
९. भ च—भयमोह० । १०. ल अ—स्वदारुणं ।
११. भ च—०मदीनभाषिणं । १२. रा ल अ ब म—विभूषिता ।
१३. ब नास्ति ।
१४. भ च—नास्ति ।
१५. कै रा ल ब म भ च—नास्ति ।

[वं – ३७] = [सप्तत्रिंशः सर्गः] = [ दा–३३ ]

ततः शूर्पणखा दीना रावणं लोकरावणम् ।
१] अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥१॥ [१
प्रसक्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
२] समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥२॥[6] [२
प्रसक्तं कामभोगेषु स्वैरवृत्तं महीपतिम् ।
३] लोका न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥३॥ [३
स्वयं कार्याणि यः काले नानुतिष्ठति भूमिपः ।
४] तस्यात्मा सह कार्येण तेनैवाशु विनश्यति ॥४॥ [४
अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ।
५] वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥५॥[13] [५

---

१. रा अ म—शूर्पनखी । ल ब—शूर्पनखा । भ च—शूर्पणखी ।
२. भ च—नाम ।
३. रा अ—संक्रुद्धं ।
४. भ च—प्रमत्तः ।
५. रा ल ब म—नावबोध्यसे । अ—०वबोधसे ।
६. रा अ—नास्ति ।
७. भ च अ रा—स्वैरवृत्तिं ।
८. भ च—लोके ।
९. भ च—नाम ।
१०. रा ल अ ब—दुर्धर्ष० ।
११. रा—नराधिपाः ।
१२. कै अ—नरं ।
१३. रा—नास्ति । कोशे लिपिकर्त्रा पञ्चमश्लोकस्य द्वितीयपादान्ता-
दारभ्य षष्ठश्लोकस्य द्वितीयपादान्तं यावत्पाठस्त्यक्तः ।

ये[1] तु नेच्छन्ति[2] विषयं पराधीना नराधिपाः ।
६] ते न भग्नाः प्रकाशन्ते[3] गिरयः[4] सागरेष्विव ॥६॥ [६
आत्मवद्भिन्नगेहस्त्वं[5] देवदानवराक्षसैः ।
७] अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥७॥ [७
येषां चारश्च कोशश्च नयश्च जयतां वर ।
८] अस्वाधीना नरेन्द्रा ये प्राकृतैस्ते[6] नरैः समाः ॥८॥ [९
यस्मात् पश्यन्ति दूरस्थाः[7] सर्वानर्थान् नराधिपाः ।
९] चारेण[8] तस्मादुच्यन्ते राजानश्चारचक्षुषः ॥९॥ [१०
अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम्[9] ।
१०] जनस्थानं हतस्थानं यन्मौर्ख्यान्नावबुध्यसे ॥१०॥ [११
खरं त्रिशिरसं चैव दूषणं च निपातितम् ।
११] न बुध्यसे जनस्थाने[10] शयानाञ्शरपीडितान् ॥११॥ [N
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
१२] हतान्येकेन रामेण मानुषेण[11] पदातिना ॥१२॥ [१२

---

१. कैरा भ च—येन । ल—ये ह ।
२. भ च—नेच्छन्ति ।
३. म—प्रकाशयन्ते ।
४. अ—निचयः ।
५. भ च—आत्मवान्छिन्नं गृह्यस्त्वं । म—आत्मच्छिन्न० । म—०द्भिन्नदेहस्त्वं ।
६. ल—प्राकृतैस्तैः ।
७. भ च—दूरस्थान् ।
८. रा—चारेषु ।
९. म—०वैर्धृतम् ।
१०. रा ल म ब—जनस्थानां । अ—जनस्थाना ।
११. म—मानुष्येण ।

ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः[1] ।
१३] धर्षितं च[2] जनस्थानं रामेणाक्लिष्टकर्मणा ॥१३॥ [१३
त्वं तु लुब्धश्च मत्तश्च पराधीनश्च रावण[3] ।
१४] विषये भयमुत्पन्नं बोद्धव्यं नावबुध्यसे[4] ॥१४॥ [१४
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
१५] व्यसने सर्वभूतानि नाभिनन्दन्ति[5] भूमिपम् ॥१५॥ [१५
अभिमानिनमग्राह्यमात्मसंभावितं[6] नरम् ।
१६] क्रोधनं चैव नृपतिं व्यसने घ्नन्ति मानवाः ॥१६॥ [१६
नानुतिष्ठसि[7] कार्याणि भयेषु न बिभेषि च ।
१७] क्षिप्रं राज्याच्च्युतो वीर[8] तृणतुल्यो भविष्यसि ॥१७॥ [१७
शुष्कैस्तृणैर्भवेत् कार्यमथवा लोष्टपांसुभिः ।
१८] न तु राज्यपरिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥१८॥ [१८
उपभुक्तं यथा वस्त्रं स्रजोऽपि[9] मृदिता[10] यथा ।
१९] एवं राज्यपरिभ्रष्टः[11] समर्थोऽपि निरर्थकः ॥१९॥ [१९
अप्रमत्तश्च[12] यो राजा धर्मज्ञो विजितेन्द्रियः ।

---

१. म—दण्डकान् ।
२. कै रा ल अ ब म—तं जनस्थानं ।
३. कै रा ल ब म—रावणः ।
४. ब—०बोध्यसे ।
५. म च—नातिधावन्ति ।
६. भ च—अतिमानिन० ।
७. ल—नानितिष्ठसि ।
८. भ च—वीरस्तृणैस्तुल्यो ।
९. ल अ—सृजो ।
१०. भ च—स्रजो विमृदिता ।
११. भ च—राज्यात्परि० ।
१२. भ च—अप्रमत्तस्तु ।

२०] कृतज्ञो धर्मशील[1]श्च स[2] रा[2]ज्ये तिष्ठते चिरम् ॥२०॥ [२०
नयनाभ्यां प्रसुप्तो यो जागर्ति नयचक्षुषा ।
२१] त्यक्तक्रोधोऽप्रमादश्च यो नयज्ञः स पार्थिवः ॥२१॥ [२१
त्वं तु रावण दुर्बुद्धे गुणैरेतैर्विवर्जितः ।
२२] यस्य तेऽविदितं चारै राक्षसानां महद् भयम् ॥२२॥ [२२
पराभिमर्[3]षी विषयेषु सङ्गतो
न देशकाल[4]प्रतिभासतत्त्ववित् ।
अयुक्तबुद्धि[5]र्गुणदोषनिश्चये
२३] विपन्नराज्यो न चिरादवेक्ष्यते ॥२३॥ [२३
इतीव[6] दोषाः परिकीर्तिता[7] मया
विमृष्य बुद्ध्या क्षणदाचरेश्वर ।
धनेन दर्पेण बलेन चान्वि[8]तः
२४] प्रचिन्तयस्वाद्य हितार्थं[9] रावण ॥२४॥[10] [२४

इत्यार्षे[11] रामायणे आरण्यकाण्डे रावणतर्जनो
नाम[12] सप्तत्रिंशः[13] सर्गः ॥ ३७ ॥

---

१. ल—०शूलश्च ।
२. ल—स्वराज्ये ।
३. भ च—पराविमर्षी ।
४. भ च—०लप्रविभागत० ।
५. भ—न चिराद्विनंक्ष्यति ।
६. भ च—अतीव ।
७. भ च—परिकीर्तितान् ।
८. भ च—चान्वितं ।
९. भ च—हितं हि ।
१०. रा—नास्ति ।
११. व—नास्ति ।
१२. भ च—नास्ति ।
१३. के रा ल व म भ च—नास्ति ।

## [वं—३८] = [ अष्टत्रिंशः सर्गः ] = [दा—३४]

ततः शूर्पनखीं[1] दीनां वदन्तीं परुषं वचः[2] ।
१] अमात्यैः सह संक्रुद्धः परिपप्रच्छ रावणः ॥१॥ [१
कस्य रामः कुतो रामः किंवीर्यः[3] किं पराक्रमः ।
२] कथं स दण्डकारण्यं[4] प्रविष्टो दुश्चरं वनम् ॥२॥ [२
आयुधं किं च रामस्य निहता येन राक्षसाः ।
३] खरश्च निहतो येन दूषणस्त्रिशिरास्तथा ॥३॥ [३
इत्युक्ता राक्षसेशेन राक्षसी क्रोधमूर्छिता ।
४] रामं तस्मै यथातत्त्वमाख्यातुमुपचक्रमे ॥४॥ [४
दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः ।
५] कन्दर्प[5]समरूपश्च रामो दशरथात्मजः ॥५॥ [५
शक्रचापनिभं चापमुत्क्षिप्य[6] कानकाङ्गदम् ।
६] दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान् ॥[7]६॥ [६
नाददानं शरान्[8] घोरान् न मुञ्चन्तं महाबलम् ।
७] कार्मुकं नापि कर्षन्तं रामं पश्यामि संयुगे ॥७॥ [७
हन्यमानं तु तत् सैन्यं रामेण शरवृष्टिभिः ।
८] इन्द्रेणेवोत्तमं सस्यं राघवेणास्त्रवृष्टिभिः ॥८॥[9] [८

---

१. भ च—शूर्पणखीं ।

२. कै ल ब म—पुरुषर्षभः । रा अ—पुरुषर्षभ ।

३. ब—किं वीरः ।

४. भ च—दण्डकारण्ये । ५. कै—कपर्दस० ।

६. भ—चापमुत्क्षिपन् किल राघवः ।

च—चापमुत्क्षिपन्निव राघवः ।

७. च—नास्ति ।

८. ब—महाघोरं । ९. रा म—नास्ति ।

रक्षसां कामवीर्याणां सहस्राणि चतुर्दश ।

९] निहतानि शरैस्तीक्ष्णैस्तेनैकेन महात्मना । [९

N] एका कथञ्चिन्मुक्ताहं परिभूता महात्मना ॥[2]९॥[1] [११

भ्राता तस्य महातेजा गुणवांस्तुल्यविक्रमः ।

१२] अनुरक्तश्च भक्त[3]श्च लक्ष्मणो नाम वीर्यवान् ॥१०॥ [१२

अमर्षा[4]द् दुर्जयो जेता विक्रान्तो बुद्धिमान् बली ।

१३] रामस्य दक्षिणो बाहु नित्यं प्राणो बहिश्चरः ॥११॥ [१३

रामस्य तु विशालाक्षी धर्मपत्नी यशस्विनी ।[5] [१५पू

१४] सीता नाम वरारोहा वेदि[6]प्रतिममध्यमा ॥१२॥ [१६उ

नैव देवी न गन्धर्वी नासुरी न च राक्षसी ।

१५] यथारूपा मया नारी दृष्टपूर्वा महीतले ॥१३॥ [१७

यस्य सीता भवेद् भार्या [7]यं च हृष्टा परि[8]ष्वजेत् ।

१६] अपि जीवेत् स सर्वेषु लोकेष्विव पुरन्दरः ॥१४॥ [१८

सा तु सर्वगुणश्लाघ्या रूपेणाप्रतिमा भुवि ।

---

१. भ च—अतः परमधिकः पाठः—

खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।

२. कै रा ल अ ब म—नास्ति ।

३. भ च—भद्रश्च ।

४. भ च—अमर्षी ।

५. भ च—अतः परमधिकः पाठः—

सा सुनामा सुकेशा च सुपादा च यशस्विनी ।

देवतेव वने तस्मिन् राजते श्रीरिवापरा ॥

तप्तकाञ्चनवर्णा सा रक्ततुङ्गनखा शुभा ।

६. कै रा अ ब म भ च—वेदीप्रतिम० ।

वेदिशब्दस्तु सर्वत्र ह्रस्वेकारान्त एव दृश्यते ।

दाक्षिणात्यास्तु 'वैदेही तनुमध्यमा' इति पठन्ति ।

कदाचिन्मूलपाठोऽप्यस्यैवापभ्रंशः स्यात् ।

७. ल ब म—ये । ८. ल ब म—परित्यजेत् ।

१७] तवानुरूपा भार्या सा त्वं च तस्यास्तथा पतिः ॥१५॥ [१९
सा हि विस्तीर्णजघना पद्मरक्तान्तलोचना । [२०पू
१८] दृश्यमाना प्रयत्नेन ममाप्याक्षिप्यते मनः ॥१६॥ [N
त्वया दृष्टा च वैदेही पूर्णचन्द्रनिभानना ।
१९] मन्मथस्य शराणां त्वं संविधेयो भविष्यसि ॥१७॥ [२१
रूपानुरूपायास्तस्याः सा कथा मधुराक्षरा ।
२०] अकाममपि कामं सा श्रुत्वैव वशमानयेत् ॥१८॥ [N
यदि तस्यामभिप्रायो भार्यार्थे तव जायते ।
२१] शीघ्रमुद्ध्रियतां पादः सीतार्थमपि दक्षिणः ॥१९॥ [२२
कुरु प्रतिक्रियां तेषां रक्षसां राक्षसेश्वर ।
२३] वधात् तस्य नृशंसस्य रामस्याश्रमवासिनः ॥२०॥ [२३
तं शरैर्निहतं दृष्ट्वा लक्ष्मणं च महाबलम् ।
२४] हतनाथा सुदुःखार्ता त्वामुपस्थास्यते हि सा ॥२१॥ [२४
यदि रोचयसे वाक्यं ममेदं राक्षसेश्वर ।
२५] क्रियतां निर्विशङ्केन ह्रियतां चाबला बलात् ॥२२॥ [२५
समीक्ष्य रामेण शरैरजिह्मगै-
हताञ्जनस्थानगतान् निशाचरान् ।
खरं च बुद्ध्वा निहतं सदूषणं
N] त्वमात्मकार्यं न निहन्तुमर्हसि ॥२३॥ [२७

इत्यार्षे रामायणे आरण्यकाण्डे शूर्पनखीप्रोत्साहनो नाम अष्टत्रिंशः सर्गः ॥३८॥

---

१. भ च—०प्याक्षिपते । २. कै—सविधेयो ।
३. रा अ म—अकालमपि । ४. भ च—कामस्य ।
५. भ च—सीतार्थमिह । ६. अ—लक्ष्मणः । म—वृत्तयाः ।
७. ब—तव । ८. भ च—प्रतिपत्तुमर्हसि । ९. ब—नास्ति ।
१०. ब भ च—नास्ति । ११. रा अ—शूर्पनखीं रावणप्रश्नो ।
१२. कै रा ल ब म भ च—नास्ति ।

ततः शूर्पनखीवाक्यं श्रुत्वा तद्रोमहर्षणम् ।
१] सचिवानभ्यनुज्ञाय जगाम स्वं निवेशनम् ॥१॥ [१
तत् कार्यार्थं विदित्वा च यथावदुपलभ्य च ।
२] दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् ॥२॥ [२
इति कर्म विचार्यैव गत्वा निश्चयमात्मनः ।
३] स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥३॥ [३
यानशालां ततो गत्वा प्रच्छन्नं राक्षसेश्वरः ।
४] सूतं सञ्चोदयामास रथं मे युज्यतामिति ॥४॥ [४
एवमुक्तः क्षणे तस्मिन् सारथिर्लब्धविक्रमः ।
५] रथं संयोजयामास तस्यातिरुचिरं शुभम् ॥५॥ [५
६उ] काञ्चनं रथमास्थाय कामगं मणिभूषितम् ।
७पू] पिशाचवदनैर्युक्तं खरैः काञ्चनभूषणैः ॥६॥ [६
N] तेन मेघनिनादेन रथेन धनदानुजः ।
७उ] राक्षसाधिपतिः श्रीमान् ययौ नदनदीपतिम् ॥७॥ [७
स श्वेतबालव्यजनः श्वेतच्छत्रो दशाननः ।
८] स्निग्धवैडूर्यसङ्काशस्तप्तकाञ्चनभूषणः ॥८॥ [८

---

१. भ च—शूर्पणखी० ।

२. रा ल अ म—संप्रदार्य ।

३. भ च—विचार्यैवं ।

४. के रा ल अ ब म—पानशालां ।

५. अ—एवमुक्त्वा ।

६. म—लुब्धवि० । भ च—लघुविक्रमः ।

७. भ च—खरैः कनकभूषणैः ।

८. भ च—श्वेतबाल० ।

दशास्यो विंशतिभुजो[1] दर्शनीयपरिच्छदः ।
N] त्रिदशारिर्मुनिघ्नश्च दशशीर्ष[2] इवाद्रिराट् ॥९॥ [९
काञ्चनं रथमारूढः शुशुभे राक्षसेश्वरः ।
९] विद्युन्मण्डलवान्मेघः सबलाक इवाम्बरे ॥१०॥ [१०
११पू] स शैलान् सागरान् भूयो वीर्यवानवलोकयन् ।
N] नानापर्ण[3]फलैर्वृक्षैरनुकीर्णान् समन्ततः ॥११॥ [११
शीतनिर्मलतोयाभिः पद्मिनीभिः समन्ततः ।
N] सागरं च स्रवन्तीभिः[4] पश्यमानः स सन्ततम् ॥१२॥ [N
४१पू] विशालैराश्रमपदैर्नरनारीसमावृतैः[5] । [१२उ
कदलीवनसम्बाधैर्नारिकेलोपशोभितैः[6] ॥१३॥
१३पू] सालैस्तालैस्तमालैश्च[7] पुन्नागैश्च सुपुष्पितैः । [१३
१४पू] अत्यन्तं[8] नियताहारैः शोभितं[9] परमर्षिभिः ॥१४॥ [१५पू
नागैः सुपर्णैर्गन्धर्वैः किन्नरैश्च सहस्रशः । [१४पू
५१] विद्याधरैश्च सिद्धैश्च चारणैश्चोपशोभितम् ॥१५॥ [N
पाण्डुराणि विशालानि दिव्यमाला[10]युतानि च ।
१९उ] तूर्यघोषा[11]वघुष्टानि विमानानि समन्ततः ॥१६॥ [१९

---

१. म—विंशतिभुजैर्द० ।
२. भ च—दशग्रीव ।
३. भ च—नानावर्णफलै० ।
४. रा—द्रवन्तीभिः ।
५. ल अ ब म—०समावृतम् । भ च—०समाकुलम् ।
६. भ च—नालिकेरैश्च शोभितैः ।
७. भ च—शालै० ।
८. कै—अत्यर्थंनिय० । भ च—अत्यन्तानिय० ।
९. रा—शोभितैः ।
१०. भ च—दिव्यमाल्य० ।
११. कै रा भ च—तूर्यगतावघु० ।

तपसा[1]र्जितलोकानां कामगान्यभिसं[2]पेतन् ।
२०] गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥१७॥ [२०
द्विजैर्वैखानसैश्चैव बालखिल्यैर्मरीचिपैः । [१४उ
N] अत्यन्तं नियताहारैः शोभितं परमर्षिभिः ॥१८॥ [१९पू
दिव्याभरणयुक्ताभिर्दिव्यरूपाभिरावृतम् ।
N] क्रीडारतिविहाराभिरप्सरोभिः समावृतम् ॥१९॥ [१६
सेवितं देवपत्नीभिः श्रीमतीभिः समन्ततः ।
N] देवदानवसङ्घैश्च सेवितं चामृतार्थिभिः ॥२०॥ [१७
तिर्यक्संस्थानमूलानां चन्दनानां सहस्रशः । [२१पू
N] हंसोत्क्रुष्टां प्लवाकीर्णां सारसैः सम्प्रणादिताम् ॥[4]२१॥[N
वैडूर्यप्रस्तरां भूमिं स्निग्धां सागरतेजसा ।[4]
N] वनानि पश्यन् सौम्यानि घ्रा[5]णसन्तर्पणानि च ॥२२॥[२१उ
अगुरूणां च मुख्यानां सुरभीणि[6] वनानि च ।
२२] कक्को[7]लानां च जात्यानां[8] त्वचि[9] स्पर्शसुगन्धिनः ॥२३॥[२२
वेत्राणि च तमालस्य[10] गुल्मान् वै मरिचस्य च ।
N] मुक्तानां चैव[11] सङ्घानि पुष्यमा[12]णानि तीरतः ॥२४॥ [२३

---

१. ल च—तपसा जित० ।
२. भ च—०संपतत् ।
३. कै—कोशे पद्यस्य द्वितीयतृतीयपादौ त्रुटितौ प्रतीयेते ।
४. च—नास्ति । भ—प्रान्तभागे पश्चात्केनापि निवेशितम् ।
५. ल ब—प्राणसंतर्पणानि ।
६. कै रा अ म—सुरभीनिव० । भ च—वनान्युपवनानि ।
७. भ च—कंकोलानां ।
८. रा—जातानां । ९. भ च—त्वचः ।
१०. भ च—तमालाश्च ।
११. भ च—च संघानि ।
१२. भ च—शुष्यमाणानि ।

शङ्खानां प्रस्तरांश्चैव प्रवालान्यपि चार्थितः[1] । [२४पू
N] उद्धृतानि यथाकालं तज्ज्ञैः सलिलजीविभिः[2] ।।२५।। [N
कांचनांश्चैव शैलाग्रान् राजतांश्चैव सर्वशः । [२४उ
२३] ह्रदान् निर्मलतोयांश्च शैलप्रस्रवणानि च ।।२६।। [२५पू
धनधान्योपपन्नानि स्त्रीरत्नैरावृतानि च । [२५उ
२४] हस्त्यश्वरथरूढानि नगराण्यवलोकयन् ।।२७।। [२६
तं समं हरितस्निग्धं मृदुस्पर्शधरातलम्[3] ।
N] अनूपं[4] सिन्धुराजस्य ददर्श धनदानुजः ।।२८।। [२६
ततो ददर्श मेघाभं न्यग्रोधमृषिभिः[5] सह ।
२७] समन्ताद् यस्य ताः शाखाः सर्वतो[6] योजनायताः[7] ।।२९।। [२७
यस्यां हस्तिनमादाय महाकायं सकच्छपम् ।
२८] भक्ष्यार्थी गरुडः शाखामाजगाम महाबलः ।।३०।। [२८
स तां सुमहतीं शाखां भारेण[8] पतगोत्तमः[9] ।
२९] सुपर्णः पर्णबहुलां बभञ्ज सुमहाबलः ।।३१।। [२९
तत्र वैखानसा नाम बालखिल्या मरीचिपाः ।
३०] आसन्नं[10] बभूवु मेध्याश्च[11] संरब्धाः परमर्षयः ।।३२।। [३०

---

१. ल—चार्थितः ।
२. ल अ ब म—सलिलवेदिभिः ।
३. म—सुक्पस्पर्श० ।
४. कै रा ल म—अरूपं ।
५. भ च—न्यग्रो धमृषिभिर्वृतं ।
६. भ च—सर्वांश्च ।
७. ल—योजनायुताः । भ च—शतयोजनाः ।
८. ल—भरेण ।
९. म—पतिरुत्तमः ।
१०. भ च—आसां बभूवु० ।
११. कै—कोशे 'सव्याश्च' इत्यस्य स्थाने (मेध्याश्च) इत्यर्वाचीनः पाठः ।

तेषां दयार्थी[1] गरुडस्तां शाखां योजनायताम्[2] ।
३२] जगामादाय वेगेन तौ चोभौ गजकच्छपौ ॥३३॥ [३१
स[3] निषादेषु धर्मात्मा भक्षयित्वा तदामिषम्[4] । [३१
३३] निषादविषयं कृत्स्नं शाखयाऽभिजघान ह ॥३४॥ [N
निषादविषयं हत्वा शाखया विहगोत्तमः ।
३४] प्रहर्षमतुलं लेभे मोक्षयित्वा तपस्विनः ॥३५॥ [३२
स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः[5] ।
३५] अमृतानयनार्थं वै चकार मतिर्मात्मनि[6] ॥३६॥ [३३
अग्निज्वालासमाकीर्णं तदभेद्यं[7] खगोत्तमः ।[8]
३६] महेन्द्रभवनं गत्वा जग्राहैवामृतं लघु ॥३७॥ [३४
स[9] मत्ताहिगणैर्जुष्टं सुपर्णकृतलक्षणम् ।
N] नाम्ना सुचन्द्रं न्यग्रोधं ददर्श धनदानुजः । [३५
N] शाखाविटपसङ्कीर्णं शुभगन्धं मनोहरम्[10] ॥३८॥ [N
स तु गत्वा परं पारं सागरस्य नदीपतेः । [३६पू
३८] ददर्शाश्रममेकान्ते पुण्यं रम्ये वनान्तरे ॥३९॥ [३६उ
ततः कृष्णाजिनधरं जटामण्डलधारिणम् ।

---

१. म च—कृयार्थं ।
२. भ च—०युताम् ।
३. अ—सुनिषादेषु ।
४. ल अ ब म—तमामिषम् ।
५. ल अ ब स ०विग्रहः ।
६. रा—मतमात्मनि ।
७. ब—तरुभेद्यां ।
८. च—नास्ति । भ—प्रान्तभागे पश्चात् कनकाङ्कितम् ।
९. ब—सुमत्ताहि० । भ च—स महर्षिग० ।
१० ब—शुभगन्धमनो० ।

४०] ददर्श नियताहारं मारीचं नाम राक्षसम् ॥४०॥ [३७
४१पू] रावणस्तु समागम्य विधिवत् स्वेन तेजसा
N] कुशलं परिपप्रच्छ यथावत् तेन पूजितः ॥४१॥ [३८
४१उ] ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥४२॥ [३९उ
४०] मारीच श्रूयतां तावद् वचनं मम भाषतः ।
१] आर्तोऽस्मि मम चान्तस्य त्वत्तो नान्या[2] परा गतिः।४३।[स०३६,३
जानीषे त्वां जनस्थाने[3] यत्र भ्राता खरो मम ।
७] दूषणश्च महावीरः[4] स्वसा शूर्पनखी[5] च मे ॥४४। [२
त्रिशिराश्च महातेजा राक्षसः पिशिताशनः ।
८] अन्ये च बहवः क्रूरा[6] राक्षसाः क्षतजेक्षणाः ॥४५॥ [३
वसन्ति मन्नियोगेन बालिनो दृढविक्रमाः ।
९] बाधमाना महारण्ये मुनीन् धर्मपरायणान् ॥४६॥ [४
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् । [८पू
१०] बहुशो लब्धलक्षाणां[7] खरस्य वशवर्तिनाम् ॥४७॥ [९पू
ते त्विदानीं जनस्थानं वसमाना महाबलाः ।
११] संगताः परमार्यस्ता[8] रामेण किल संयुगे ।।४८॥ [६
तेन सञ्जातरोषेण रामेण रणमूर्धनि ।
१२] अनुक्त्वा[9] विषयं किञ्चिच्छरैराशीविषोपमैः ॥४९॥ [७

१. भ च—तं रावणः ।
२. अ—नान्यः ।
३. म—जनस्थानी ।
४. भ च—महावीर्यः ।
५. भ च—शूर्पणखी ।
६. भ च—शूरा ।
७. भ—लब्धयाणाम् ।
८. अ म—परमावस्ता ।
९. रा—अनर्थां । भ च—अनुक्त्वा ।

ततस्तेन सहस्राणि राक्षसानां चतुर्दश ।
१३] निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना ॥५०॥ [८
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा । [९ पू
१४] ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ॥५१॥ [N
१५उ] पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः ।
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ॥५२॥ [१०
१६] अशीलः कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ।
त्यक्तधर्मो ह्यधर्मज्ञो भूतानामहिते रतः ॥५३॥ [११
येन वैरं विनारण्ये सत्त्वमाश्रित्य केवलम् ।
१८] कर्णनासापहारेण भगिनी मे विरूपिता ॥५४॥ [१२
तस्य भार्या जनस्थाने नाम्ना सीतेति विश्रुता ।
१९] रूपयौवनसम्पन्ना श्रीः पद्मेनेव भूषिता ॥५५॥ [N
भार्या तस्य जनस्थानात् तामहं लोकसुन्दरीम् ।
२०] आनयिष्यामि विक्रम्य सहायस्त्वं तु मे भव ॥५६॥ [१३
त्वया ह्यहं सहायेन पार्श्वस्थेन निशाचर ।
२१] सेन्द्रानपि सुरान् संख्ये ऽनुवञ्चयितुमुत्सहे ॥५७॥ [१४
तत् सहायो भव त्वं मे समर्थो ह्यसि राक्षस ।
२२] वीर्ये बुद्धौ च धर्मे च नेहास्ति सदृशस्तव ॥५८॥ [१५
२३पू] एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर ।
२५उ] शृणु कर्म च साहाय्यं यत्कार्यं भवता मम ॥५९॥ [१७

---

१. भ—सकार्यः ।
२. भ च—कर्कश० ।
३. रा—पद्मनैव विभू० ।
भ च—पद्मेव विभूषिता ।
४. भ च—सहायस्तत्र ।
५. भ च—न चिन्तयितुमुत्सहे ।
६. भ च न ह्यस्ति ।

सौवर्णस्त्वं मृगो भूत्वा चित्रो[1] रजतबिन्दुभिः ।
२६] आश्रमस्थस्य[2] रामस्य सीतायाः प्रमुखं[3] चर ॥६०॥ [१८
त्वां च निःसंशयं सीता निशम्य मृगरूपिणम् ।
२७] गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥६१॥ [१९
ततस्ताभ्यां प्रयाताभ्यां शून्ये सीतां यथासुखम् ।
२८] निराबाधो हरिष्यामि राहुश्चन्द्रप्रभां यथा ॥[4]६२॥ [२०
ततः पश्चात् सुखं रामे भार्याहरणकर्शिते[5] ।
२२] विस्रब्धं[6] प्रहरिष्यामि कृतार्थेनान्तरात्मना[7] ॥६३॥ [२१
तस्य रामकथां श्रुत्वा मारीचस्यागमद् भयम् ।
N] शुष्कमासीच्च वदनं परित्रस्तो बभूव सः ॥६४॥[8] [२२

---

१. भ च—चित्रो ।

२. भ च—आश्रमे तस्य ।

३. कै रा भ च—प्रमुखे ।

४. अ म—राहुरित्यारभ्य प्रहरिष्यामीत्यन्तः पाठो नास्ति ।

५. भ—त्यक्तम् ।

६. भ च—विश्रब्धः ।

७. कै—कृतान्तेना० ।

अ म—कृतार्थो आतुरात्मना ।

८. कै—कोशस्य पार्श्वभागे अतः परमपरहस्ताङ्कितोऽधिकः पाठो यथा—

यत्नेन महता चास्य वाचा वाक्यार्थभूयसी ।
मुहूर्ताल्लब्धसंज्ञाश्च रावणं वाक्यमब्रवीत् ॥
रकारादीनि नामानि रामात्रस्य च रावण ।
रत्नानि च रथांश्चैव त्रासं संजनयन्ति मे ॥

स रावणं तत्र विषण्णचेता
महावने रामपराक्रमज्ञः[1] ।
कृताञ्जलिस्तत्त्वमुवाच[2] काले
34] हितं च भर्तुश्च[3] तथात्मनश्च ॥६५॥ [24

इत्यार्षे रामायणे आरण्यकाण्डे रावणवाक्यं
नाम एकोनचत्वारिंशः सर्गः ॥३९॥

---

१. अ म—०महाक्रमज्ञ ।

२. ल—भूताञ्जलिः ।

३. भ च—भर्त्तुर्हितमात्मनश्च ।

४. भ च—नास्ति ।

५. कै रा ल ब म भ च—नास्ति ।

एवमुक्तस्तु मारीचो[1] दशग्रीवेण रक्षसा ।
N] उद्भ्रान्त[2]नयनः स्तब्धः[3] प्राञ्जलिर्वाक्यमब्रवीत् ॥१॥[4] [१
सुलभा वै महाराज पुरुषाः प्रियवादिनः ।
१] अप्रियस्य सुपथ्यस्य[5] वक्ता श्रोता च[6] दुर्लभः ॥२॥ [२
नूनं न बुध्यसे रामं यथा[7] रामो महाबलः[8] ।
२] अयुक्ताचारचपलो महेन्द्रवरुणोपमः ॥३॥ [३
अपि[9] स्वस्ति भवेत् तात सर्वेषां भुवि[10] रक्षसाम् ।
४] अपि रावण संक्रुद्धः[11] कुर्याल्लोकमराक्षसम् ॥४॥ [४
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
६] अपि सीतानिमित्तं ते न भावि व्यसनं महत् ॥५॥ [५
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् ।

---

१. ब—सुग्रीवो ।
२. म अ—उद्भ्रान्तो न० । भ च —°त्रस्तः ।
३. भ च—प्राञ्जलिर्भयविह्वलः ।
४. भ च—अतः परमधिकः पाठः—
विदीर्णहृदयो दीनो मूर्च्छितोऽभ्यपतद्भुवि ।
अथोत्थितो युक्तियुक्तं प्राञ्जलिर्वाक्यमब्रवीत् ॥
५. ल ब—च पथ्यस्य । भ च—तु पथ्यस्य ।
६. कै रा ल अ म—तु ।
७. ल अ म—यथारामं । ब—यथानाम ।
८. ल अ ब म—यथाबलम् ।
९. ब—अथ ।
१०. म—तु विरक्षसाम् ।
११. ब ल—मा क्रुद्धः ।

८] मा विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥६॥ [६
अपि स्वस्ति भवेत् तात सर्वेषां च क्षपाचरैः ।
N] येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥७॥ [N
पापवृत्तो बहिःशीलैः पापमन्त्री नराधिपः ।
९] आत्मानं स्वजनं हन्ति प्रजां हन्ति सुदुर्मतिः ॥८॥ [७
११पू] स हि पित्रा परित्यक्तो रामश्चात्र कथं भवेत् ।
१२उ] न लुब्धो नातिदुःशीलो नापि क्षत्रियपांसनः ॥९॥ [८
न च धर्मे गुणे हीनः कौसल्यानन्दवर्धनः ।
१४] स तीक्ष्णश्च न भूतानां सर्वेषां च हिते रतः ॥१०॥ [९
वञ्चितं पितरं मत्वा कैकेय्या सत्यवादिनम् ।
१६] करिष्यामीति धर्मात्मा ततः प्रव्रजितो वनम् ॥११॥ [१०
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ।
१७] हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकं वनम् ॥१२॥ [११

---

१. कै भ च—न । रा म ल—भा ।
२. ल ब म—पुरा ।
३. ल—चयादाचर । म—क्षपयाचर ।
भ च—नः क्षपाचर ।
४. भ च—हि दुश्शीलः ।
५. भ च—प्रजाराष्ट्र ।
६. भ च—न ।
७. भ च—कथञ्चन ।
८. ब म ल—लुब्धो ।
९. ल अ ब म—नातिक्षत्रियपाप्मकः ।
१०. कै—धर्म्यैर्गुणैर्हीनः । भ च—धर्मगुणैर्हीनः ।
११. अ भ च—कौशल्या० ।
१२. म—नन्दि० ।
भ च—न स तीक्ष्णश्च ।
१३. कै रा म—दण्डकावनम् ।

न रामः कर्कशस्तात नाविद्वान् नाजितेन्द्रियः ।
१३] अनृतं दुःश्रुतं वाऽपि नैव त्वं वक्तुमर्हसि ॥१३॥ [१२
१८पू] धर्मो विग्रहवान् रामः साधुः सत्यप्रतिश्रवः ।
१६उ] राजा सर्वस्य लोकस्य[2] देवानामिव वासवः ॥१४॥[3] [१३
कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
२०] इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥१५॥ [१४
शरार्चिषमनाधृष्यं[4] चापखड्गेन्धनं[5] रणे ।
२२] रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥१६॥[6] [१५
धनुर्व्यादितदीप्तास्यं[7] शरदंष्ट्रममर्षणम्[8] ।
N] आशीविषमिव क्रुद्धं न रामं द्रष्टुमर्हसि ॥[9]१७॥ [१६
राज्यं सुखं च सन्त्यज्य जीवितं चेष्टमात्मनः ।
२७] नैवासादयितुं[10] तात रामान्तकमिहार्हसि[11] ॥१८॥ [१७
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा । [१८पू
२८] प्रियेभ्योऽपि[12] प्रियतरा रामा राममनुव्रता[13] ॥१९॥ [१९उ

---

१. रा—दुःखश्रुत व । भ च—नैव वक्ता स ।
२. कै रा अ म—लोकानां ।
३. ल अ ब म—अतः परमधिकः पाठः—
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ।
धनुर्व्यादितदीप्तास्यं शरं द्रष्टुममर्षणम् ॥
४. ल—०नाधृष्टं ।
५. कै रा ल ब म—खड्गधरं ।
६. ब अ ल म—अतः परमधिकः पाठः—
खड्गजिह्वं दुराधर्षं शत्रुसेनानिबर्हणं ।
७. म—धनुर्व्याभित० । ब—धनुष्याहित० ।
८. ब अ म—शरं द्रष्टुममर्षणम् ।
९. कै रा ल अ—नास्ति । १०. ल म—नैवासाद० ।
११. कै भ च—रामान्तिकमिहा० ।
१२. ब—प्रियेभ्योऽपि । १३. ब अ ल—राममनुश्रिता ।



न त्वं समर्थस्तां हंतुं रामबाहुबलाश्रयाम् । [१८उ
२६] दीप्तस्येव हुताशस्य शिखां दीप्तां तु मध्यमाम् ॥२०॥ [२०उ
किमुद्यमं व्यर्थमिमं कृत्वा ते राक्षसाधिप ।
३०] दृष्टश्चेत् त्वं वने तेन तदन्तं जीवितं तव ॥२१॥ [२१
३१पू] जीवितं चैव राज्यं च सुखं चैव सुदुर्लभम् । [२२पू
N] दौरात्म्यं सक्ष्यसे राजन् रणे रामेण सङ्गतः ॥२२॥ [N
३८पू] स सर्वैः सचिवैः सार्धं संमन्त्रयितुमर्हसि ।
N] मन्त्रयित्वा च धर्मज्ञैः कृत्वा निश्चयमाहवे ॥२३॥ [२३
दोषाणां च गुणानां च सम्प्रधार्य बलाबलम् ।
३७] आत्मनश्च बलं ज्ञात्वा राघवस्य तथैव च ।
३८उ] आयतिर्वं तथात्वं च ततस्त्वं कर्तुमर्हसि ॥२४॥ [२४
अहं तु मन्ये तव न क्षमं रणे
समागमं कोसलराजसूनुना ।
इदं च भूयः शृणु वाक्यमुत्तमं
३६] क्षमं च युक्तं च निशाचराधिप ॥२५॥ [२५

इत्यार्षे रामायणे आरण्यकाण्डे मारीचवाक्यं नाम चत्वारिंशः सर्गः ॥४०॥

---

१. ल अ ब म—हंतुं ।
२. रा भ च— बाहुबलाश्रयात् ।
३. ब—तदास्तं ।
४. कै रा अ म—त्यजसे ।
५. कै रा ल अ ब म—संप्रदर्श्य ।
६. भ च—आयातिं च ।
७. भ च—तदात्वं ।
८. च—भू ।
९. अ भ च—कोशलराज० ।
१०. अ—०मुद्यमं ।
११. भ च—नास्ति ।
१२. कै रा ल ब ल भ च—नास्ति ।

पुरा वै वीर्यमत्तोऽहं पर्यटन् पृथिवीमिमाम् ।
४पू] बलं नागसहस्रस्य धारयन् पर्वतोपमः ॥१॥ [१
N] नीलजीमूतसङ्काशस् तप्तकाञ्चनकुण्डलः ।
४उ] भयं सर्वस्य जनयन् किरीटी परिघायुधः ॥२॥ [२पू
५उ] आचरं[1] दण्डकारण्य मुनिमांसानि भक्षयन् । [२उ
११उ] विश्वामित्रोऽथ[2] धर्मात्मा संत्रासं समुपागतः ॥३॥
१२पू] अपि गत्वा[3] दशरथं नरेन्द्रमिदमब्रवीत् । [३
१३उ] राजन् रक्षतु मां रामः पर्वकाले ह्युपस्थिते[4] ॥४॥
१४पू] राक्षसेभ्यो[5] भयं घोरं समुत्पन्नं नराधिप । [४
१६पू] इत्येवमुक्तो धर्मात्मा राज्ञा दशरथस्तथा ॥५॥
N] मुहूर्तमिव[6] निश्चेष्टो भूत्वा वचनमाददे । [५
२३पू] ऊनषोडशवर्षोऽयं रामो राजीवलोचनः ॥६॥
न युद्धयोग्यतामस्य[7] पश्यामि सह राक्षसैः । [N
N] कामं नयतु मत्सैन्यं सर्वं तेऽत्र[8] प्रतिष्ठितम् ॥७॥ [६उ
इत्येवमुक्तः स मुनिस् तं नृपं पुनरब्रवीत् ।

---

१. कै रा ल अ ब म—आचरन् ।

२. भ च—विश्वामित्रोऽपि ।

३. कै रा—मत्वा ।

४. भ च—ऽप्युपस्थिते ।

५. भच—मारीचान्मे । ब—राक्षसेभ्योपि ।

६. कै रा ल भ च—मुहूर्तमपि ।

७. अ—युद्धे योग्यतामस्य ।

८. अ म भ च—तत्र ।

२५] रामान्नान्यबलं[1] लोके[2] पर्याप्तं तस्य रक्षसः[3] ॥८॥ [८
बालोऽप्येष महातेजाः पर्याप्तस्तस्य निग्रहे ।
२६] यास्यामि राममादाय स्वस्ति तेऽस्तु नराधिप ॥९॥ [११
इत्येवमुक्त्वा[4] स मुनिस् तमादाय नृपात्मजम् ।
३०] जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम् ॥१०॥ [१२
३१पू] स तथा दण्डकारण्ये पर्वकाले तपस्विनाम्[5] ।
३२उ] बभूवोपस्थितो रामश्चित्रं विस्फार्य कार्मुकम् ॥११॥ [१३
अजातव्यञ्जनः श्रीमान् बाल एव शुभाननः ।
३३] एकवस्त्रधरो धन्वी शिखी काण्डपलाशवान् ॥१२॥ [१४
शोभयन् दण्डकारण्यं शुभेन[6] स्वेन तेजसा ।
३४] अदृश्यत तदा रामो बालश्चन्द्र इवोदितः[7] ॥१३॥ [१५
N] अथाहं मेघसङ्काशस्तप्तकाञ्चनभूषणः ।
३६पू] बली लुब्धवरो[8] दर्पादाजगाम तदाश्रमम्[9] ॥१४॥ [१६
३६उ] तेनादृष्टः[10] प्रविष्टोऽहं तस्मिन् पुण्ये महावने ।
३७पू] मां च[11] दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार ह ॥१५॥ [१७
३८उ] अवज्ञाय त्वहं मोहाद् बालोऽयमिति राघवम् ।
विश्वामित्रं परामर्ष्टुं प्रद्रुतोऽस्मि यथासुखम् ॥१६॥ [१८

---

१. कै—रामान्नातिबलं । भ च—°न्यद्बलं ।
२. कै रा अ म—लोकं ।
३. रा—राक्षसाः ।
४. अ—इत्येवमुक्तः ।
५. भ च—यशस्विनाम् ।
६. कै भ च—दीप्तेन ।
७. म भ च—इवोद्यतः ।
८. भ च—लब्धवरो ।
९. भ च—तमाश्रमम् ।
१०. ब तेन दृष्टः ।
११. अ—स ।

३९] तेन मुक्तस्ततो बाणः श्रितः शत्रुनिबर्हणः ।
N] तेनाहं ताडितस्त्रस्तः समुद्रे पतितः पुरा ॥१७॥ [१९
४२उ] रामस्य शरवेगेन निरस्तोऽहमचेतनः । [२०उ
प्राप्य संज्ञां पुनस्तात लङ्कां प्रतिगतः पुरीम् ॥१८॥ [२१उ
४४] एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे ।
४५पू] अकृतास्त्रेण[2] बालेन[3] रामेणाक्लिष्टकर्मणा ॥१९॥ [२२
मया तु वार्यमाणो[4] चै[4] यदि रामेण विग्रहम् ।
४६] करिष्यस्यापदं[5] घोरां क्षिप्रमाप्स्यसि दुस्तराम् ॥२०॥ [२३
क्रीडारतिविधिज्ञानां समाजोत्सवशालिनाम् ।
४७] राक्षसानां भयं घोरमनर्थं चापि[6] लप्स्यसे[6] ॥२१॥ [२४
हर्म्यप्रासादसंबाधां नानापण्यविभूषिताम् ।
४८] द्रक्ष्यसे त्वं पुरीं लङ्कामाकुलां मैथिलीकृते ॥२२॥ [२५
अकुर्वन्तोऽपि[7] पापानि शुचयः पापसंश्रयात्[8] ।
५०] परपापैर्विनश्यन्ति मत्स्या[9] नागह्रदे यथा ॥२३॥ [२६
दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् ।
४९] द्रक्ष्यस्यभिहतान् भूमौ रणे रामेण राक्षसान् ॥२४॥ [२७

---

१. म—चितः ।
२. म—अक्षतास्त्रेण ।
३. के रा ब—बाणेन ।
४. भ च—वार्यमाणोऽयं ।
५. के अ—°स्यापदां ।
६. भ च—चोपलप्स्यसे ।
७. भ च—अकुर्वाणा हि । म—अकुर्वंतो ।
८. भ च—पापसंचयात् ।
९. ब—मत्स्याशानां ह्रदा ।
ल—मत्स्या नाशाह्रदे ।
म—मत्स्यनागह्रदे ।

हृतदारान् हृतधनान् दशाभिद्रवतो दिशः[1] ।
५२] हतशेषानशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥२५॥ [२८
शरजालपरिक्षिप्ताम[2]ग्निज्वालासमावृताम् ।
५३] प्रदग्धभवनां लङ्कां द्रक्ष्यसि[3] त्वं निशाचर ॥२६॥ [२९
प्रमदानां सहस्राणि तव राजन् परिग्रहः । [३०उ
५४] सीताहेतोः समस्तानि विद्रविष्यन्ति रावण ॥२७॥ [३२उ
आत्मनश्च दशग्रीव पुरस्यान्तःपुरस्य च ।
५५] राक्षसानां विनाशाय मैथिलीमानयिष्यसि ॥२८॥ [३३
सुखं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः । [३१उ
५८] यदीच्छसि चिरं भोक्तुं मा कृथा राममप्रियम् ॥२९॥ [३४उ
निवार्यमाणः सुहृदा मया तु[4]
प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलस् त्वमाहवे
५९] यमक्षयं रामशरास्त[5]जीवितः ॥३०॥ [३५

इत्यार्षे रामायणे आरण्य[6]काण्डे मारीचवाक्यं
नाम एकचत्वारिंशः[7] सर्गः ॥४१॥

---

१. ल—दिशाः ।
२. च—°ग्नामसिज्वाला° ।
३. भ च—द्रक्ष्यसे ।
४. अ ब म—च । भ च—त्वं ।
५. भ—रामशरात्तजीवितः । च—°शरार्त्तजी° ।
६. भ च—नास्ति ।
७. कै रा ल ब म भ च—नास्ति ।

एवमस्मि पुरा मुक्तः कथञ्चित् तेन संयुगे ।
६] इदानीमपि यद् वृत्तं तन्मे शृणु दशानन ॥१॥ [१
राक्षसाभ्यामहं द्वाभ्यां मृगरूपधरो वनम् ।
७] प्रविष्टो दण्डकारण्यं घोरं मुनिजनायुतम् ॥२॥ [२
दीर्घजिह्वो महाकायस् तीक्ष्णदंष्ट्रो महाबलः ।
८] विचरन् दण्डकारण्यं मांसभक्षो महाशनः ॥३॥ [३
अग्निहोत्रेषु वेदीषु चैत्यवृक्षेषु चावसम् ।
९] अत्यन्तनियताहारांस् तापसांस्तानभक्षयम् ॥४॥ [४
निहत्य दण्डकारण्ये तापसान् धर्मसंश्रितान् ।
१०] रुधिराणि पिबंस्तेषां तथा मांसानि भक्षयन् ॥५॥ [५
मुनिमांसाशनः क्रूरस् त्रासयन् वनगोचरान् ।
११] वसारुधिरसिक्तोऽहं विध्वंस्तं दण्डकं वनम् ॥६॥ [६
प्रविश्य दण्डकारण्ये विचरन् राममभ्ययाम् । [N
१४] तापसोऽयमनुज्ञात्वा पुरा वैरमनुस्मरन् ॥७॥ [१०पू

---

१. म—दशाननः ।
२. भ च—द्वाभ्यामार्थितश्च समागतः ।
३. ला—मुनिजनैर्युतं ।
४. अ—वैदेही ? । म—वेदेषु ।
५. के—चैत्ये वृक्षेषु ।
६. के रा श्र म—वा वसन् ।
७. के रा—तानभक्षयत् । म अ—तानभक्षयन् ।
८. ल अ ब—संचितान् । म—संशितान् ।
९. ल अ ब म—°मांसाशनक्रूरः । १०. भ च—विध्वस्तो ।
११. भ च—तथाहं । १२. अ—°मभ्ययौ ।

तेन मुक्तास् त्रयो बाणाः शिताः शत्रुनिबर्हणः ।
१९] विकृष्य बलवच्चापं सुपर्णानिलनिःस्वनाः ॥८॥ [१०उ
तैर्बाणैर्दण्डकारण्ये[1] निपात्याशीविषोपमैः[2] ।
२१] कृतं वितिमिरं सर्वं रामेणाक्लिष्टकर्मणा ॥९॥ [११
ते बाणा वज्रसङ्काशाः सुघोरा रक्तभोजनाः ।
२२] आजघ्नुर्निशिताः सर्वे त्रयस्त्रीन् सुसमाहितान् ॥१०॥ [१२
२३पू] पराक्रमज्ञो रामस्य राजन् दृष्टभयः पुरा ।[3] [१३पू
२६] शरेण मुक्तो रामस्य कथञ्चित् प्राप्य जीवितम् ॥११॥ [१४पू
N] समीपं[4] यदि गच्छेयं तदन्तं जीवितं च मे । [N
वृक्षे वृक्षे हि पश्यामि चीरकृष्णाजिनाम्बरम् । [१५पू
३३] शरचापधरं रामं पाशहस्तमिवान्तकम् ॥१२॥ [१५उ
अपि रामसहस्राणि भीतः पश्यामि रावण । [१६पू
३२] राममूतमिदं सर्वमरण्यं प्रतिभाति मे ॥१३॥ [१६उ
N] राममेव हि पश्यामि रहिते[7] राक्षसेश्वर ॥१४॥[8] [१७पू
रकारादीनि नामानि रामत्रस्तस्य रावण ।
३५] रत्नानि चैव रामांश्च त्रासं सञ्जनयन्ति मे ॥१५॥ [१८

---

१. भ च—दण्डकारण्यं ।

२. भ च—निर्मुक्ताशीवि° ।

३. भ च—अतः परमधिकः पाठः—
उद्भ्रान्तस्त्वस्तमुक्तोऽहं तावुभौ राक्षसौ हतौ ।
ततः प्रव्रजितो भीरुस्तापसोऽहं समागतः ॥

४. भ च—समीपेपि न । ५. भ—अभिरा० ।

६. ल अ ब—°तमिवारण्यं सर्वं च ।

७. म—रहितं ।

८. भ च—अतः परमधिकः पाठः—
दृष्ट्वा स्वपेथि (ि ?) तं राममुद्विजामि निचेतनः ।

९. रा वाक्यानि । १०. ल—रामाश्च ।

N] रणे रामेण ते युद्धं[1] न क्षमं वीर्यशालिना ।
३६७] न ते रामकथा कार्या यदि मां प्रष्टुमिच्छसि[2] ॥१६॥ [२०
इदं वचो[3] बन्धुजनार्थसिद्धये
मयोच्यमानं[4] यदि न ग्रहीष्यसि ।
हितं ततस्त्यक्ष्यसि जीवितं प्रियं[5]
४३] हतोऽद्य रामेण शरैरजिह्मगैः ॥१७॥ [२६

इत्यार्षे रामायणे आरण्यकाण्डे[6] रामपौरुषवर्णनं[7]
नाम द्विचत्वारिंशः सर्गः[8] ॥४२॥

---

१. म—युद्धे ।
२. अ—द्रष्टुमिच्छसि ।
३. रा ल ब म—च वो ।
४. रा म—मयोश्यमानं ।
५. अ म—प्रिये ।
६. भ च—नास्ति ।
७. भ च—रामपौरुषाख्यानं ।
८. कै रा ल ब म भ च—नास्ति ।

मारीचेन तु तद् वाक्यं पथ्यमुक्तं[1] निशाचरः[2] ।
१] हितं न प्रतिजग्राह मर्तुकाम इवौषधम् ॥१॥ [१
तं पथ्य[3]हितवक्तारं मारीचं राक्षसेश्वरः[4] ।
२] अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥२॥ [२
किं किमेतदयुक्तार्थं मारीच[5] मयि कथ्यसे ।
३] वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोषरे ॥३॥ [३
त्वद् वाक्यं न मया ग्राह्यं भेतुं[6] रामस्य संयुगे ।
४] धर्महीनस्य मूर्खस्य सानुजस्य विशेषतः ॥४॥ [४
यस् त्यक्त्वा सुहृदो रामो मातरं पितरं तथा ।
५] स्त्रीवाक्यं प्राकृतं श्रुत्वा वनवासमुपागतः ॥५॥ [५
अवश्यं तु मया तस्य रामस्य खरघातिनः ।
६] प्राणैस्तुल्या वनात् सीता हर्तव्या तव संनिधौ ॥६॥ [६
एषा मे निश्चिता बुद्धिर्मारीच हृदि वर्तते ।
७] न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥७॥ [७

---

१. ल अ ब—चमयुक्तं । रा म—क्षमं युक्तं । (कै—पुस्तकेऽपि मूले 'क्षमं युक्तः' इत्येव पाठः ।)
२. ब—निशाचर ।
३. अ म—प्रतिहितवक्तारं ।
४. अ म—राक्षसेश्वरं ।
५. ल—पाठस्त्यक्तः ।
६. अ म—भेत्तुं ।
७. ल अ ब—पितरं । भ च—प्राकृतः ।
८. भ च—संयुगे ।
९. म—हंतव्या ।
१०. भ च—संयुगेन च ।
११. भ च—निष्ठिता ।

दोषान् गुणान् वासंपृष्टो न मे त्वं वक्तुमर्हसि[1] ।
८] अपायमप्युपायं[2] वा कार्यं वा सविनिश्चयम् ॥८॥ [८
सुहृदा तेन[3] वक्तव्यं प्रथितेन विपश्चिता ।
९] प्रबद्धाञ्जलिना राज्ञे यद्रक्षेद्[4] भूतिमात्मनः ॥९॥ [९
वाक्यं चाप्रतिकूलं[5] हि मृदुपूर्वं हितं शुभम् ।
१०] उपचारेण संयुक्तं वक्तव्यं साधु पार्थिवे ॥१०॥ [१०
सावमानं तु यद् वाक्यं न्यायतो हीनमुच्यते ।
११] नाभिनन्दति तद् राजा मानदो[6] मानवर्जितम् ॥११॥ [११
पञ्च रूपाणि राजानो धारयन्ति महौजसः ।
१२] अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥१२॥ [१२
प्रसाद चापि कुर्वन्ति वाक्यात् कार्यं[7] तथैव च ।
१३] तस्मात् सर्वास्ववस्थासु पूज्यमानाश्च पार्थिवाः ॥१३॥ [१३
त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः ।
१४] अभ्यागतं मां दौरात्म्यात् परुषं[8] वक्तुमर्हसि[9] ॥१४॥ [१४
गुणदोषौ न पृच्छामि क्षमं वा यदि वाक्षमम् ।
१५] अस्मिंस्तु तावत् कृते मे साहाय्यं दातुमर्हसि ॥१५॥[10] [१५

---

१. के रा ल अ ब म—कर्तुमर्हसि ।
२. के—अपायं वाप्यु० ।
३. के रा म—सुहृदानेन ।
४. म ल—यद्रक्ष्ये । ब—यद्रचा ।
५. भ च—प्रीतिमूलं ।
के रा अ म—च प्रतिकूलं
६. भ च—मानार्हो ।
७. भ च—कोपं ।
८. ब अ म—पौरुषं ।
९. के—कर्तुमिहासि ।
१०. ल—नास्ति ।

त्वं काञ्चनाभ्यां पादाभ्यां[1] मृगरूपधरो भव ।
रत्नशृङ्गो मृगो[2] भूत्वा रत्नचित्रतनूरुहः ।[3] [१८पू
१६] प्रलोभयानो[4] वैदेहीं यथेष्टं गन्तुमर्हसि ॥[5]१६॥ [१८उ
त्वां तु मायामयं दृष्ट्वा काञ्चनं[6] जातविस्मया ।
१७] आनीयतामेष इति रामं वक्ष्यति मैथिली ॥१७॥ [१९
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् ।
१८] आनयिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥१८॥ [२२
एवं कृतमिदं कार्य[7] निराबाधं[8] भविष्यति ।
२१] गच्छ सौम्य शिवं मार्गं कार्यस्यास्यार्थसिद्धये ॥१९॥[N
प्राप्य सीतामयुद्धेन वञ्चयित्वा च राघवौ ।
२०] लङ्कामभिपतिष्यामि कृतकार्यस् त्वया सह ॥२०॥ [२५
एवं कृतेऽस्मिन् कार्ये तु त्वत्सहायेन राक्षस ।
N] राज्यस्यार्धं प्रदास्यामि मारीच तव सुव्रत ॥२१॥ [२३
एतत् कार्यमवश्यं मे बलादपि करिष्यसि[9] ।
२१] राज्ञो हि प्रतिकूलो यो न जातु सुखमेधते ॥२२॥ [२६

---

१. भ च—पार्श्वाभ्यां ।

२. भ—रत्नशृङ्गैर्मृगो ।
च—रत्नशृङ्गमयो ।

३. ल अ ब म—अतः परमाधिकः पाठः ।
त्वां तु मायामय दृष्ट्वा चित्रवर्णं मनोहरम् ।

४. भ च—प्रलोभयित्वा ।

५. ल ब—नास्ति ।

६. भ च—चित्रवर्णं मनोहरम् ।

७. के म—हि ।

८. म—निराबाधा ।

९. रा ल अ ब—करिष्यति ।

आसाद्य तं जीवितसंशयं ते[1] ।
मृत्युर्ध्रुवस्तेऽद्य[2] मया विरोधे ।
एवं ध्रुवं[3] चिन्तय यत् सुनीतं
N] सञ्चिन्त्य तत्त्वं कुरु यन्न[4] मतं मे[5] ॥२३॥ [२७

इत्यार्षे रामायणे आरण्यकाण्डे रावणवाक्यं
नाम त्रिचत्वारिंशः सर्गः ॥४३॥

---

१. भ च—
२. रा अ—तस्य ।
३. भ च—गते ।
४. भ च—धर्मतत्तं ।
५. कै रा ळ व म भ च—वास्ति ।

आज्ञप्ते दारुणे वाक्ये प्रतिकूले निशाचरः ।
१] अब्रवीत् परुषं वाक्यं मारीचो नैर्ऋताधिपम् ॥१॥ [१
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ।
२] सपुरस्य सराष्ट्रस्य सामात्यस्य क्षपाचर ॥२॥ [२
कस्त्वया सुखिना राजन् वदंति च नृशंसकृत् ।
३] केनेदमुपदिष्टं ते मृत्युद्वारमपावृतम् ॥ ३॥ [३
शत्रवस्तव सुव्यक्तं हीनवीर्या दशानन ।
४] इच्छन्ति त्वां नाशयितुमपरुद्धं बलीयसा ॥४॥ [४
केनेदमुपदिष्टं ते क्षुद्रेण क्षुद्रकर्मणा ॥५॥ [५पू
N] बुद्धाः खलु न बुध्यन्ते सचिवास्तव रावण । [N
६] ये त्वामत्यर्थमापन्नं विनयन्ति न शाश्वताः ॥६॥ [६उ
अमात्यैः कामवृत्तो हि राजा विषयमाश्रितः ।
७] निग्राह्यः सर्वथा स त्वं निग्राह्यान् न निगृह्यसे ॥७॥ [७

---

१. कै रा—प्रातिकूलो ।
२. कै रा ल अ ब म—नैनृताधिपम् ।
३. ल अ—वदान्ति च । ब—वदेति च । भ च—न बन्दति ।
४. ल—नृशंसवत् ।
५. ल अ ब म—नास्ति ।
६. भ च—विनश्यन्तमप० ।
७. ब ल—यत् ।
८. कै ल म ब—अमात्याः । रा अ—अमात्याः ।
९. अ ब—विनयमावृतः । रा ल अ ब म—विषयामवृतः ।
भ च—विषयमास्थितः ।
१०. ल अ ब म—निग्राह्य ।

धर्ममर्थं च कामं च यशश्च विपुलं भुवि ।
८] स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर ॥८॥ [८
९पू] विपर्यये हि तिष्ठन्तो मन्त्रिणो धनदानुज ।
वृ[१]निं स्वामिवैकल्ये प्राप्नुवन्ति सबान्धवाः ॥[२]९॥ [९
राजमूलो हि वि[३]जयो जयश्च जयतां वर ।
१०उ] तस्मात् सर्वास्ववस्थासु रक्षितव्यो नराधिपः ॥१०॥ [१०
न चापि प्रतिकूलेन नाविनीतेन रावण ।
११] राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ॥११॥ [११
१५उ] रक्ष्यम[४]णा न वर्धन्ते मेषा गोमायुना यथा । [१४उ
निःसंशयं विनश्यन्ति राजन् सर्वे निशाचराः ।
१६] येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥१२॥ [१५
तदिदं काकतालीयं घोरमासादितं मया ।
१७] अत्र किं शोभनं [५]यत् त्वं ससैन्यो विनश[६]ष्यसि॥१३॥ [१६
मां निहत्य तु रामोऽसौ न चिरात् त्वां हनिष्यति ।
N] एतेन कृत[७]कृत्योऽस्मि म्रियेयं द्विषता सह ॥१४॥ [१७
दर्शनादेव रामस्य मृतं मामुपधारय ।
२०] आत्मानं निहतं विद्धि हृत्वा सीतां च जानकीम् ॥१५॥[१८
आनयिष्यसि चेत् सीतामाश्रमात् सहितो मया ।
२१] नैव त्वमसि नैवाहं नैव लङ्का न राक्षसाः ॥१६॥ [१९

---

१. भ च—व्यसनं ।
२. रा ल अ ब म—नास्ति । कै—प्रान्तभागे अपरहस्तेन लिखितम् ।
३. ब—विनयो ।
४. कं रा ल अ म—रक्ष्यमाणा ।
५. भ च—यस्त्वं ।
६. कै रा ल अ ब म—°ऽपि विनश्यसि ।
७. ल अ ब म—एतेनाकृत० ।

निवार्यमाणस्तु मया हितैषिणा
वचो न गृह्णासि हितं दशानन ।
परीतकाला हि गतायुषो नरा
२२] हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥१७॥ [२०

इत्यार्षे रामायणे आरण्यकाण्डे रावणगर्हणं नाम
चतुश्चत्वारिंशः सर्गः ॥४४॥

---

१. रा—गृह्णन्ति ।
२. अ—रावणविगर्हणं ।
भ च—मारीचवाक्यं रावणगर्हणं ।
३. कै रा ल ब भ भ च—नास्ति ।

१पू] भूय एव तु मारीचो रावणं वाक्यमब्रवीत् ।
२पू] आकेशग्रहणाद् राजन् वक्तव्यस्त्वं मया किल ॥१॥
आत्मनश्च हितं कार्यं तव चैव न संशयः ।
N] धर्मं पुरस्कृत्य मया कार्यं हितचिकीर्षुणा ॥२॥
न कामात्मतया धर्मं परित्यक्तुमिहार्हसि ।
N] सत्यधर्मभुवो दारान् न त्वमानेतुमर्हसि ॥३॥
पुरस्तादेव रामस्य गुणास्ते कीर्तिता मया ।
३] भूय एव तु वक्ष्यामि धर्मं तस्य महात्मनः ॥४॥
४पू] तस्य धर्मं निबोध त्वं यत् सुरैरपि दुष्करम् ।
N] पुराऽध्युषितमस्माभिर्जनस्थानं वशीकृतम् ॥५॥
विराधश्च सुबाहुश्च दुराधर्षौ महाबलौ ।
N] तीक्ष्णदंष्ट्रौ महाकायौ बलिनौ राक्षसेश्वरौ ।
५उ] निहत्य विजनेऽरण्ये रमते लक्ष्मणाग्रजः ॥६॥

---

१. कै म—सन्त्यज्य धर्मान् सुवान् सुवादात् ।
रा— ,, धर्मात्मना वादान् ।
ल व अ— ,, धर्मान् दुर्वात् ।
२. कै रा—तत्त्वमाने० ।
ल अ व म—तत्त्वं ह्याने० ।
३. ल—तं ।
४. च—भयंतस्य महाबलौ ।
५. भ—चैवं ।
६. म—निरोध ।
७. च—नास्ति ।
८. भ—विराधं च सुबाहु ।
९. व म—राक्षसेश्वर ।

तस्य दारानुदारस्य निकृत्य[1] हरतस्तव ।
६] विनाशमनुपश्यामि[2] न चिरादात्मनस्तथा ॥७॥
मर्षयेत[3] च काकुत्स्थः कञ्चिदन्यव्यतिक्रमम्[4] ।
७] सतां धर्ममनुस्मृत्य न तु दारप्रधर्षणम् ॥८॥
सर्वस्वहरणादेतदेवं[5] कर्म जुगुप्सितम्[6] ।
८] स्वप्राणान्[7] प्राणिनो ह्यत्र हित्वा कुर्वन्ति विक्रमम् ॥९॥
स रामो दारहरणान्निकृतस्तेऽन्तकृद्[8] भवेत् ।
९] तदनागतमेवात्र[9] बोद्धुमर्हसि रावण ॥१०॥
कामाद् द्वेषादमर्षाच्च प्रकृत्या दृढविक्रमः ।
१०] स तप्यमानस्तेजस्वी समुद्रमपि शोषयेत् ॥११॥
तं शत्रुभिरनासाद्यमासाद्य न भविष्यसि ।
११पू] न चास्मिन् सं[10] मतिं कुर्या रामदारानुधर्षणे[11] ॥१२॥
११उ] विमृशन्[12] न[13] तु पश्यामि[13] सुनीतस्य कलामपि ।
यदि वोऽप्यपनेष्यामि[14] मृगरूपेण राघवम् ॥१३॥

---

१. कै ब ल—निकृत्याहर० ।
२. अ म—विनाशमत्र पश्यामि ।
३. कै रा अ म भ च—मर्षयेन्नहि ।
४. भ च—कांचिदद्य व्य० ।
५. भ च—°हरणादेतत् ।
६. भ च—वीरजुगुप्सितम् ।
७. ब ल—स्वबाणान् । भ च—स्वान्प्राणान् ।
८. ल अ ब म—रिपुर्भवेत् ।
९. अ म—तदनुगत० ।
१०. भ च—संमति कांचिद् । कै ल अ म—स रतिं कुर्याद्
११. कै अ भ च—°नुदर्शने ।
१२. अ—विमृष्य ।
१३. भ च—नानुपश्यामि ।
१४. भ च—चाप्यप० ।

१२] तथाप्यशक्या वैदेही त्वया प्राप्तुं निशाचर ।
अपनीते हि रामे[1] च जीवमाने च लक्ष्मणे ।
१३] नैव सीता त्वया लभ्या लक्ष्मणोऽपि[2] हि[2] तादृशः ॥१४॥
अथवा रहितां[3] ताभ्यां कथञ्चिदुपलप्स्यसे[4] ।
१४] ब्रह्मलोकगतस्यापि स्थानं तत्र न विद्यते ॥१५॥
अथवापि वरारोहां सीतां सत्त्वाद्धरिष्यसि ।
१५] त्रैलोक्यमपि दुष्प्रापं हृदि चेत्युपधारय[5] ॥१६॥
अमन्त्रयित्वा सचिवैर्यो राजा संप्रवर्तते ।
१६] न स तिष्ठेच्चिरं राज्ये सलिलं पुष्करे[6] यथा ॥१७॥
सोऽहं विवक्षितं सद्भिः पश्यन्नात्मानमञ्जसा ।
१७] नानुवर्तितुमिच्छामि परप्रकृतिमात्मना ॥१८॥
वर्धतो[7] हि ममैकस्य न दुःखं तत्[8]प्रयोजनम् ।
१८] यदि केवलमेतत् ते कार्यं न निधनं[9] भवेत् ॥१९॥
नयेनापनयं हत्वा त्वमितो राक्षसेश्वर[10] ।

---

१. भ च—ऽपि ।
२. कै रा अ म भ च—ह्यपि ।
३. ल—रहिता ।
४. ल—°दुपलप्स्यते ।
५. भ च—हृतमित्युपधारय ।
६. भ च—सलिले पुष्करं ।
७. ब—वदतो ।
८. भ च—त्वत् ।
९. ल ब म—त्रुटितः पाठः ।
१०. ल ब—राक्षसेश्वरः ।

१९] प्रतियाहि पुरीं लङ्कामकृत्वा रामकिल्बिषम् ॥२०॥
उच्यमानोऽपि मद्वाक्यं न गृह्णीषे[1] दशानन ।
२०] किं करिष्यामि मन्दात्मा[2] करिष्यामि[3] तव प्रियम् ॥२१॥
२१उ] अकार्यं यदि वा कार्यं प्रियमिच्छसि चेत् प्रभो ॥२२॥

इत्यार्षे रामायणे आरण्यकाण्डे[4] मारीचवाक्यं नाम
पञ्चचत्वारिंशः[5] सर्गः ॥४५॥

---

१. भ—गृह्णीयात् ।
च—गृह्णीया ।
२. भ च—मन्दात्मन् ।
३. भ—हरिष्यामि ।
४. भ च—नास्ति ।
५. कै रा ल ब म भ च—नास्ति ।

मारीचस्य तु तच्छ्रुत्वा करिष्यामीति वै वचः ।
१] रावणः प्रीतिमद्वाक्यं मारीचमिदमब्रवीत् ॥१॥ [५
रामो राज्यात् परिभ्रष्टो मन्त्रहीनो वनेचरः ।
२] किं करिष्यति मारीच शक्रतुल्यबलोऽपि सन् ॥२॥ [N
भक्ष्यभूतः स वै रामः किं त्वमुद्विजसेऽनघ ।
N] बलमारभतां संख्ये ऐश्वर्यं च निरीक्षणे ॥३॥ [N
३उ] कथं रामाद् विहीनार्थाद् भयं मारीच पश्यसि ।
राज्यभ्रष्टस्य हीनस्य मारीच त्वं बिभेषि किम् ।
N] हीनसाधनमित्रस्य मानुषस्याल्पमेधसः ॥४॥ [N
अगतिस्तत्र मर्त्यानां रक्षसां विहिता गतिः ।
४] मैथिलीमहमादाय उत्पतिष्ये विहायसा ॥५॥ [N
प्रयत्नादप्यसौ रामः परं पारं समाश्रितः ।
५] किं करिष्यति लङ्कायां पतन्नपि यथाबलम् ॥६॥ [N
सुराश्चासुरसंघाश्च न मे प्रतिबला युधि ।
६] त्रयाणामपि लोकानामलमस्मि निवारणे ॥७॥ [N

---

१. ब ल—स । म—च ।

२. अ—मंत्रिहीनो ।

३. कै रा म—भक्षभूतः ।

४. भ च—निरीक्षतां ।

५. ल अ ब म—अगतिस्तस्य ।

६. अ—विहृता ।

७. अ—उपतिष्ठे ।

मया विक्रम्य शक्रोऽपि मत्तैरावणमास्थितः ।
७] सवज्रश्चास्त्रैर्निर्भग्नः समस्तैस्त्रिदशैः सह ॥८॥
भ्राता मे धनदश्चैव यमोऽपि वरुणस्तथा ।
८] सर्वे च पृथिवीपाला अवशाः स्थापिता वशे ॥९॥
त्रैलोक्यं निर्जितं कृत्स्नं वशे च स्थापितं मया ।
९] मच्छासनावघुष्टं तु बिभेति स कथं भवान् ॥१०॥
शङ्करः क्रीडमानश्च उमया सह पर्वते ।
१०] भुजाभ्यामुद्धृतो वीर्यान्न च त्रस्तोऽभवत्तदा ॥११॥
१२उ] वैहायसेन यास्यामि सीतामादाय राक्षस ।
लङ्कां चापि प्रवेक्ष्यामि निमिषेण कृतत्वरः ॥१२॥
१३] सागरेण परिक्षिप्तां त्रिकूटशिखरे स्थिताम् ।
लङ्कां गन्तुं कस्य शक्तिः स्वप्नेऽपि स्वमनोरथैः ॥१३॥
१४] मायावी त्वं समर्थश्च कृती शक्तश्च बुद्धिमान् ।
प्रलोभयित्वा वैदेहीं क्षिप्रमन्तर्हितो भव ॥१४॥
१५] त्वयैव सम्प्रधर्याशु मोहयित्वा च राघवम् ।
सुविशुद्धो गमिष्यामि कृतार्थेनान्तरात्मना ॥१५॥

---

१. ल अ ब म—°णमाश्रितः ।
२. कै रा ल अ ब म—°स्त्राशनिर्भग्नः ।
३. कै रा ल अ ब म—मच्छासनावघुष्टं ।
४. भ च—न बिभेति ।
५. म—अभया ।
६. ल ब म भ च—ऽभवं तदा ।
७. अ—पश्यामि ।
८. ल ब—निमेषेण ।
९. ल ब भ च—सुमनोरथैः ।
१०. रा—वृज्जी ।
११. कै रा ल अ म—मयैव ।
१२. ब ल अ—संप्रदायाशु । म—संप्रदायाशु ।

१७] एवं संसान्त्वितस्तेन मारीचो रावणेन वै ।
१८पू] विनिःश्वस्य मुहुश्चैव दृष्टदुःखः स राघवात् ॥१६॥
तमनर्थैः कृष्यमाणमिन्द्रियाणां वशानुगम् ।
N] अशक्नुवन् वारयितुं मारीचो ह्यभ्यपद्यत ॥१७॥
रामादपि च मर्तव्यं मर्तव्यं रावणादपि ।
N] उभाभ्यामपि मर्तव्यं वरं रामो न रावणः ॥१८॥
N] उत्थाय परिदुःखार्तस्त्यक्त्वा जीवितमात्मनः ।
१८उ] प्रतस्थे मनसा पूर्वं दशग्रीवेण नोदितः ॥१९॥

इत्यार्षे रामायणे आरण्यकाण्डे रावणवाक्यं
नाम षट्चत्वारिंशः सर्गः ॥४६॥

---

१. ल भ च—स सान्त्वित० ।
२. कै रा—राघवम् ।
३. म—अशक्नुवद् ।
४. ब—परदुःखार्तः ।
५. भ च—नास्ति ।
६. कै रा ल ब म भ च—नास्ति ।

स चात्ममरणं ज्ञात्वा संशयं परमं गतः ।
१] अकामो भयसंविग्नो निःश्वस्य च मुहुस्तदा ॥१॥ [N
निश्चितं रावणं दृष्ट्वा मारीचो भयविह्वलः । [N
२] गच्छामीत्यब्रवीद् दीनो भयाद् राक्षसमीश्वरम् ॥२॥ [१ उ
दृष्टश्चाहं स[2] रामेण शरचापासिपाणिना ।
N] मद्वधोद्यतशस्त्रेण विनष्टं जीवितं च मे ॥३॥ [२
N] एष गच्छामि हे[3] तात स्वस्ति तेऽस्तु निशाचर । [४उ
प्रहृष्टस्त्वभवत् तेन वचनेन दशाननः ।
३] परिष्वज्य च सुश्लिष्टमिदं वचनमब्रवीत् ॥४॥ [५
एतत् तु वीर्ययुक्तं ते मच्छन्दादिव भाषितम्[4] ।
४] इदानीमपि मारीच मन्यसे मां निशाचर ॥५॥ [६
आरोह त्वमिदं दिव्यं कामगं रत्नभूषितम् ।
५] मया सह रथं[5] युक्तं पिशाचवदनैः खरैः ॥६॥ [७
ततो रावणमारीचौ विमानमिव तं रथम् ।
६] आरुह्य ययतुः शीघ्रं रामाश्रमपदं[6] प्रति ॥७॥ [८
तथैव पश्यमानौ तौ पत्तनानि वनानि च ।
७] गिरींश्च सरितश्चैव सरांसि नगराणि च ॥८॥ [१०
संप्राप्य दण्डकारण्यं राघवस्याश्रमं प्रति ।
८] ददर्श सहमारीचो रावणो राक्षसेश्वरः ॥९॥ [११

---

१. भ च—निश्चित्य ।
२. भ च—च ।
३. के रा ल व म भ च—ते । ४. भ च—भाषतः ।
५. भ च—रथे । ६. अ ब—राघवस्याश्रमं प्रति ।

अवतीर्य रथात् तस्मात् तप्तकाञ्चनभूषणात् ।
९] हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ॥१०॥ [१२
१०पू] एतद् रामाश्रमपदं दृश्यते कदलीवृतम् । [१३पू
N] नानापक्षिगणैश्चित्रैर्घुष्टवाग्भिरलङ्कृतम् ॥११॥ [N
N] मनोहरैस्तरुगणैः पुष्पवद्भिर्विभूषितम् ।
१०उ] क्रियतां तत् सखे शीघ्रं यदर्थं वयमागताः ॥१२॥ [१३उ
स रावणवचः श्रुत्वा मारीचो राक्षसाधिपः ।
१३उ] मृगो भूत्वाऽऽश्रमपदे रामस्य विचचार ह ॥१३॥ [१४
N] विषाणी[2] लोभनीयश्च काञ्चनश्चारुसप्रभः ।
N] रुक्मबिन्दुशतैश्चित्रः प्रवालमणिभूषितः ॥१४॥ [१५
मुक्ताजालपरिच्छन्नः[3] स बभूव मनोहरः ।
१२] सुसारंगलवर्कनिभैश्चित्रैः[4] पार्श्वैः शुभाननः[5] ॥१५॥ [N
१३पू] जातरूपमयैः शृङ्गैश्चतुर्भिर्मणिभूषितैः ।
N] सर्वतश्चार्धचन्द्रैश्च[6] रुक्मताराविचित्रितैः[7] ॥१६॥ [N
१४पू] ततोऽस्य बुद्धिरभवत् तस्मिन् काले गतायुषः ।
N] अस्याश्रमपदस्याग्रे परिवर्तितुमोजसा ॥१७॥ [N

---

१. कै रा ल अ ब म—स वे ।

२. भ च—विटपे ।

३. अ—मुकुटाल° ।

४. रा—सुसारंकनिभैः° ।
ल अ ब म—सुसारगर्भार्कनिभै° ।
कै—चचार नालार्कनिभै°

५ रा—सर्वशुभाननः ।

६. भ च—°तश्चारुचन्द्रैश्च ।

७. भ च—°विचित्रितः ।

१४उ] अकार्यं यदि वा कार्यं कर्तव्यं[1] नात्र संशयः ।
भर्तुराज्ञार्थिना शीघ्रं स्वर्गं वा[2]प्यभिकाङ्क्षता ॥१८॥ [N
१५] स्मृत्वा रामस्य वीर्यं च भर्तुराज्ञां च दारुणाम् ।
श्रेयो मम स्यान् मरणं न जीवितमिहात्मनः ॥१९॥ [N
१६] एतां बुद्धिं समाश्रित्य कृत्वा निश्चयमात्मनः ।
१७पू] मृत्युं चात्मनि सञ्चिन्त्य मारीचः प्रचचार ह ॥२०॥ [N
N] प्रक्रीडितः स विस्रब्धो लाडितैः स पदे पदे[3] ।
१७उ] समीपे तस्य रामस्य सीतायाश्च मनोहरः ॥२१॥ [N
स आससादाभिजनोपपन्नं
मारीच उग्रं नरदेवपुत्रम् ।
रामं प्रतिज्ञाऽभिरतं वनस्थं
१८] दृष्ट्वैव तं धर्मपथे निविष्टम् ॥२२॥ [N
तस्या[5]विदूरेऽभिगता[6]मनिन्द्यां
प्रभामिवार्कस्य[7] विशोभमानाम् ।
स सुन्दपुत्रो[8]ऽथ ददर्श सीतां
१९] सीता च तं सन्नचरं ददर्श ॥२३॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे मारीचगमनं नाम
सप्तचत्वारिंशः सर्गः ॥४७॥

---

१. ल व—गन्तव्यं ।अ म—चन्तव्यं ।
२. भ च—चाप्यभि° ।
३. भ च—सहसा मृत्युचोदितः ।
४. ल अ व—मनस्विनं । म—मनोहरं ।
५. भ—तस्याभिदूरे ।
६. कै—°भिमताम० ।
७. भ च—प्रभामिवार्कं स्वभिशोभ० ।
८. अ—सुन्दपुत्रोपि नि० । भ च—सुन्दपुत्रः प्रददर्श ।
९. भ च—नास्ति ।
१०. कै रा ल व म भ च—नास्ति ।

मणिप्रवरशृङ्गाग्रो भीतस्मितमुखाकृतिः । [१५उ
N] किञ्चिदभ्यानतग्रीव इन्द्रनीलशिरोरुहः ॥१॥ [१६उ
N] कुन्देन्दुहंससदृशेनोदरेण विराजितः । [१७पू
१उ] हेमराजतचित्राभ्यां पार्श्वाभ्यामतिशोभितः ॥२॥ [१
वैडूर्यसदृशखुरस्ताम्रजानुः सुसंहतः ।
N] इन्द्रायुधसवर्णेन पुच्छेनाभिविराजितः ॥३॥ [१८
विचित्रपृष्ठराजिश्च शंकुकर्णो महाहनुः ।
N] रामाश्रमपदद्वारि विचचार यथासुखम् ॥४॥ [२३
स रामं पर्णशालायामुपविष्टं महारथम् ।
N] जगाम मन्दं सौवर्णः सर्वगात्राणि दर्शयन् ॥५॥ [N
N] ततः सीता मृगं दृष्ट्वा कुसुमानि विचिन्वती । [सर्ग ४३, १पू
प्रहृष्टा चानवद्याङ्गी विस्मिता च वरानना । [२पू
N] भर्तारमभिचक्राम लक्ष्मणं च महाबलम् ॥६॥ [२उ

---

१. भ च—°शृंगाग्रः ।
२. अ—भीतः स्मित० । भ च—सितासित० ।
३. कै भ च—किञ्चिदभ्युन्नत० ।
४. भ च—विराजता ।
५. ल म—हेमरजत० ।
अ—हेमराजित० ।
६. भ च—वैडूर्यसदृशखुरस्तनुजानुः सुसंहितः ।
७. भ च—विराजता ।
८. भ—°श्रमपदं द्वारि ।
९. अ—सा ।

व्याहृतौ तौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ।
N] वीक्षमाणार्थं[1] सा ताभ्यां दर्शयामास तं मृगम् ॥७॥ [४
बभूव हृष्टा वैदेही मुहुर्मुहुरुदीक्षती ॥८॥
N] तं मृगं काञ्चनं दृष्ट्वा दिव्यं मृगमिवाम्बरे । [N
५] उवाच राघवं सीता स्मितपूर्वाभिभाषिणी ॥९॥ [N
इमं मणिविचित्राङ्गं पश्य हेममयं मृगम् ।
६] आश्चर्यभूतं काकुत्स्थ कामात् स्वयमिवागतम् ॥१०॥ [N
ईदृशा[2] दण्डकारण्ये यदि हेममया मृगाः ।[2]
७] न मिथ्या खलु काकुत्स्थ लोककान्तमिदं[3] वनम् ॥११॥ [N
आर्यपुत्र मृगस्यास्य जाम्बूनदमयीं[4] त्वचम् ।
९] शष्पवृष्ट्या परीतां तां त्वयेच्छामि सहासितुम् ॥१२॥ [२०
काममुक्तमिदं रौद्रं स्त्रीणामसदृशं मया ।
१०] वपुषा त्वस्य सत्त्वस्य[5] विस्मयो जनितो मम ॥१३॥ [२१
तच्छ्रुत्वा वचनं तस्याः सीतायाः पुरुषर्षभः ।
११] उवाच संहृष्टमनाः सौमित्रिमथ राघवः ॥१४॥ [२३
१२पू] पश्य लक्ष्मण वैदेह्या मृगत्वचि गतस्पृहा । [२४पू
न वने नन्दने दृष्टो नापि चैत्ररथे वने ॥
३२] कुतः पृथिव्यां सौमित्रे योऽस्य कश्चित् समो भवेत् ॥१५॥ [२५उ
प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः ।
३३] शोभयन्ति मृगं रम्यं दर्शनीयं सुसंस्थितम् ॥१६॥ [२६
पश्यास्य जृम्भमाणस्य प्रदीप्ताग्निशिखोपमाम्[6] ।
३४] जिह्वां मुखान्निःसरन्तीं सन्ध्याभ्रादिव विद्युतम् ॥१७॥ [२७

---

१. कै अ म भ च—वीक्ष्यमाणाथ ।
२. अ—ईदृशो दण्डकारण्ये यदि हेममयो मृगः ।
३. कै रा अ म—°कान्तामेमं ।
४. कै रा ल अ ब म—नास्ति ।
५. कै—पश्याभि° ।
६. अ ब—°शिखोपमात् ।

ससारगल्वर्कमयः शंखशुक्तिनिभोदरः । [२८पू

N] विभ्राजमानैः शृङ्गैश्च हिमवान् शिखरैरिव ॥१८॥ [N

तप्तहेममयो ह्येष पादैर्विद्रुमसप्रभैः ।

३५] पार्श्वतो भ्राजते चास्य चन्द्रस्तारासमन्वितः ॥१९॥ [N

मणिस्निग्धच्छविश्चित्रः शंखशुक्तिनिभोदरः । [N

३६] कस्य नामाभिरूपोऽयं न मनो लोभयेन् मृगः ॥२०॥ [२८उ

चारुरूपमिदं दृष्ट्वा जाम्बूनदविभूषितम् । [२९पू

३८] सर्वरत्नाकुलं चित्रं नरः को नाम लभ्यते ॥२१॥ [N

मांसहेतोरपि मृगान् विहारार्थाय धन्विनः ।

३९] घ्नन्ति लक्ष्मण राजानो मृगयायां वने गताः ॥२२॥ [३०

अप्रमत्तेन ते भाव्यं राजपुत्र्या नृपात्मज । [N

यावत् पृषतमेकेन सायकेन निहन्म्यहम् ॥२३॥ [४९पू

हत्वैनं चर्म आदय शीघ्रमेष्यामि लक्ष्मण । [४९उ

५५पू] अहमेवं हनिष्यामि मृगरत्नं न संशयः ॥२४॥ [४६पू

५५उ] इह त्वं भव सन्नद्धः शस्त्रवान् रक्ष मैथिलीम् । [४५पू

यावद् गच्छामि सौमित्रे मृगमानयितुं वनात् ॥२५॥ [४६उ

N] न सर्तव्यमितोऽन्यत्र यावन्नायामि लक्ष्मण ।

५६उ] राक्षसा दुष्टभावत्वाद्द्धि विकर्तुं प्रभवन्ति हि ॥२६॥ [N

---

१. भ च—विभ्राजमानश्शृङ्गश्च । २. ब—नां ।

३. ब—सर्वरत्नाकरं । म—॰रत्नाकुलं । भ च—रत्नाकुरं ।

४. भ च—मृगं ।

५. भ च—वने ।

६. ब—चर्ममादाय ।

७. भ च—अहमेनं ।

८. भ च—शस्त्रबाणसहायवान् ।

९. कै रा अ म भ च—गन्तव्य॰ ।

१०. कै रा ळ अं व म—यावन्नाहमितो गतः ।

अद्य भ्राजिष्यति शुभा मैथिली मृगचर्मणा ।
N] अजिनप्रच्छदे[1] पूर्वमयोध्यायामिवासने[2] ॥२६॥ [N
प्रदक्षिणेनानुमतेन पक्षिणा[3]
जटायुषा वृद्धतमेन मानिना ।
भवाप्रमत्तः परिगृह्य मैथिलीं
N] प्रतीक्ष मां शङ्कित एव सर्वशः[4] ॥२७॥ [५०

इत्यार्षे रामायणे आरण्यकाण्डे[5] मृगदर्शनं नाम
अष्टचत्वारिंशः[6] सर्गः ॥४८॥

---

१. कै रा ल अ ब म—० प्रच्छदां ।
२. म—०मिवासनैः ।
३. म—रक्षिया ।
४. अ—सर्वतः ।
५. भ च—नास्ति ।
६. कै रा ल अ भ च—नास्ति ।

१पू] तथा तु तं समादिश्य भ्रातरं स पुनः पुनः । [१पू
N] ततस्त्रिविततं चापं तप्तहाटकभूषितम् ॥१॥ [२पू
आक्षिप्य च कलापे द्वे जगामोदग्रविक्रमः । [२उ
N] असिं बबन्ध धन्वी स प्रदुद्राव तदुन्मुखः ॥२॥ [३उ
स तं सन्दृश्य रूपेण द्योतमानमिवाग्रतः ।
N] मृगं वै रघुशार्दूलः मार्द्रवत् कुपितेन्द्रियः ।
मृगरूपमिव क्रुद्धो यज्ञं दक्षस्य शूलभृत् ॥३॥ [N
N] तमाकृष्य स दूरं वै मार्द्रवन्तं निरीक्ष्य च ।
५पू] बभूवान्तर्हितस्तस्मात् पुनः सन्दर्शनेऽभवत् ॥४॥ [N
६पू] मुहूर्ताद् दृश्यते दूरान्मुहूर्तान्तर्हितोऽभवत् । [७
१२उ] विच्छिन्नैरिव संवीतः शारदाभ्रैर्निशाकरः ॥५॥ [६उ
N] तथा सन्दर्शनेनैवं चोर्पाकर्षत राघवम् । [८पू
कुटुम्बभरणासक्तं नरं मोक्षपथादिव ॥६॥ [N
N] स गत्वा दूरमध्वानं राघवस्त्वगभीप्सया । [N

---

१. ल—०स्त्रिविततं ।
२. ब—जगामोदग्र० । भ च—जगामोदार० ।
३. भ च—च बध्वा ।
४. म—भ्रातृवत्० ।
५. भ च—मृगरूपधरं ।
६ ल ब—बभूवान्तःस्मित० ।
७. भ च—दर्शनादर्शनेनैव ।
८. कै रा अ म—चोपकर्षत । भ च—सोपाकर्षत ।
९. भ च—कुटुं च दारसंसक्तं नरं मोक्षपथादिह ।

१८पू] मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥७॥ [१४उ
N] सूर्याग्निसदृशं घोरं ज्वलन्तं पावकं यथा ।
तमेव मृगमुद्दिश्य ह्यविच्छिन्नेन मुष्टिना ॥८॥ [N
N] स रक्षो मृगरूपत्वं संनिर्भिद्य वरः शरः ।
१९पू] मारीचस्याशु हृदयं बिभेदाशनिनिःस्वनः ॥९॥ [N
१९पू] तेन मर्मणि निर्विद्धः शरेणाप्रतिमेन च । [१४पू
२२उ] लक्ष्मणेति विचुक्रोश जहौ रूपं मृगस्य तत् ॥१०॥ [१९
१९उ] तालमात्रमथोत्प्लुत्य न्यपतत्तच्छराहतः ।
२१पू] विरुवन् भैरवं नादं धरण्यां शरपीडितः ॥११॥ [१६
अन्तकालेऽपि संप्राप्ते तस्य बुद्धिरभूदियम् ।
२३] सदृशं स्वरमालंब्य रामस्य विदितात्मनः ॥१२॥ [१८
हा लक्ष्मणेति चुक्रोश त्राहीति च हतो वने ।
२२] स्वरमेनं तु संश्रुत्य लक्ष्मणं प्रेषयिष्यति ॥१३॥ [N
सीता शून्येन मनसा भर्तृस्नेहसमाकुला ।
२४] लक्ष्मणेन विहीनां तां मैथिलीं रावणो हरेत् ॥१४॥ [१७
संप्राप्तकालमाज्ञाय तं चकार स्वरं तदा ।

---

१. ल अ ब म दीप्तं शस्त्रं ।
२. ल ब म—ह्यविच्छिन्नेन ।
३. ल अ—मृगरूपं तत । भ च—मृगरूपत्वं ।
४. कै रा अ ब—सनिर्भिद्य ।
५. अ—साविद्धः ।
६. भ च—विचुक्रोशन् ।
७. ल ब म भ च—०त्रमथोत्पत्य ।
८. म—विभवद् । भ च—विरुदन् ।
९. कै रा ल म—महता । भ च—च महा० ।
१०. भ च—स्वरमेतत्तु ।
११. कै भ च—समुत्सुका ।

२५] रावणस्य प्रियं कुर्वन्नन्तकाले निशाचरः ॥१५॥ [N
तत्र विचित्रकेयूरो दिव्याभरणभूषितः ।
N] हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥१६॥ [२०
२१उ] म्रियमाणस्तु मारीचः प्रदध्यौ चैव लक्ष्मणम् ।
२२पू] सदृशं राघवस्यार्थे[1] हा सीते लक्ष्मणेति च ॥१७॥ [N
मृगरूपं तु[2] तं[2] त्यक्त्वा राक्षसं रूपमात्मनः ।
२६] सञ्चक्रे[3] च[3] महाकायं जीवितं राक्षसस्त्यर्जन्[4] ॥१८॥ [१९
तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् ।
२७] जगाम मनसा सीतां रामो हृष्टतनूरुहः ॥१९॥ [२१
तत्र रामे भयं तीव्रमाविवेश विषादजम्[5] ।
N] राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तं स्वरम् ॥२०॥ [२५
न[6] जघान[6] मृगानन्यान् मांसकृत्येन राघवः ।
N] गमने[7] त्वरितो ह्येष[7] आश्रमाभिमुखः[8] स्थितः[9] ॥२१॥ [२६

इत्यार्षे रामायणे आरण्यकाण्डे मारीचवधो नाम
एकोनपञ्चाशः सर्गः ॥४९॥

---

१. ल अ व म—लक्ष्मणस्यार्थ ।
२. भ च—शुभं ।
३. भ च—सुमहाकायं ।
४. भ च—राक्षसोत्यजत् ।
५. म—भयादृजम् ।
६. कै—निजघान ।
७. भ च—जगाम त्वरितस्त्वेव ।
८. म—आश्रमाभिमुखं ।
९. भ च—ततः ।

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
१] उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥१॥ [१
न हि मे हृदयस्थं तज्जीवितं तत्र तिष्ठति ।[2]
२] क्रोशतः परमार्तस्य महान् शब्दः श्रुतो मया ॥२॥ [२
सखायं भ्रातरं ज्येष्ठं मम पन्थानमागतम् । [N
३] आक्रन्दन्तं च सौमित्रे परित्रातुं त्वमर्हसि ॥३॥ [३पू
तत् क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ।
४] रक्षसां वशमापन्नं सिंहानामिव गोपतिम् ॥४॥ [३
न जगाम तयोक्तोऽपि भ्रातुर्विज्ञाय शासनम् ।
८] अथोवाच ततः सीता कुपिता जनकात्मजा ॥५॥ [४
अमित्रं मित्ररूपेण भ्रातुस्त्वमसि लक्ष्मण ।
९] यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ॥६॥ [५
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।
१०] तेन तिष्ठसि विस्रब्धस्तमपश्यन् महाद्युतिम् ॥७॥ [७
किं हि संशयमापन्ने तस्मिन्निह मया तव ।
१३] अर्थः स्यादिह जीवन्त्या यः प्रधानः स्त्रियः पतिः ॥८॥ [८

---

१. भ च—च ।
२. भ च—न हि मे जीवितस्थाने जीविते तात तिष्ठति ।
३. रा ल—महाशब्दः ।
४. अ म—उत्
५. अ—च शरैशिणम् ।
६. कै रा म—तथोक्तो ।
७. भ च—को ।
८. रा—जीवत्याः ।

इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् ।
१४] अब्रवील्लक्ष्मणः [1]सीतां त्रस्तां मृगवधूमिव ॥९॥ [९
देवि[2] देवमनुष्येषु गन्धर्वेषु पतत्रिषु[3] ।
१५] राक्षसेषु पिशाचेषु किन्नरेषु सुरेषु च ॥१०॥ [११
पन्नगेषु च सर्वेषु विद्यते न स[4] शोभने ।[5]
१६] यो रामं प्रतियुध्येत समरे वासवोपमम् ॥११॥ [१२
अवध्यः समरे रामो नैवं[6] त्वं वक्तुमर्हसि ।
१७] न त्वामेकां वने दुर्गे परित्यक्तुमिहोत्सहे[7] ॥१२॥ [१३
[8]अनिवार्यं बलं तस्य बलं बलवतामपि ।
N] त्रिभिर्लोकैः समुद्युक्तैः सामरैरपि सेश्वरैः[9] ॥१३॥ [१४
हृदयं निर्वृतं तेऽस्तु सन्तापस्त्यज्यतामयम् ।
२२] आगमिष्यति ते भर्ता वन्यमादाय पुष्कलम् ॥१४॥ [१५
नैव व्यक्तं स्वैरं[10] मन्ये दर्शनं किञ्चिदेव तु ।
N] गन्धर्वनगरप्रख्या मायैषा रक्षसा[11] कृता ॥१५॥ [१६
न्यासभूतासि[12] वैदेहि न्यस्ता मयि महात्मना ।

---

१. भ च—त्रस्तां सीतां । अ—सीतां त्रस्तां ।
२. ब—देव देविमनु० ।
३. अ—तपस्विषु ।
४. भ च—समो रणे ।
५. म—नास्ति ।
६. कै रा ल ब म—नैव ।
७. कै रा अ ब म - परिरक्षितुमुत्सहे । ल—परित्याक्षितु० ।
८. भ च—अविषह्यं बलं तस्य राघवस्य महात्मनः ।
९. भ च—सासुरैरपि मानवैः ।
१०. भ च—कार्तस्वरं ।
११. कै—राक्षसी । भ च—राक्षसैः ।
१२. कै रा ब म भ च—न्यासभूता हि ।

१८] राघवेण[1] वरारोहे न त्वां त्यक्तुमिहोत्सहे[2] ॥[3]१६॥ [१७
कृतवैराश्च कल्याणि वयमेतैर्न संशयः ।
१९] राक्षसैः सह भद्रं ते जनस्थाननिवासिभिः ॥१७॥ [१८
राक्षसा विविधाचारा विसृजन्ति महावने ।
२०] हिंसाविहारा वैदेहि न प्रेषयितुमर्हसि ॥१८॥ [१९
अप्रमेयं हि तत्तेजः शक्यं तुलयितुं न वै ।
२१] सा विचार्य बलं तस्य न चिन्तयितुमर्हसि ॥१९॥ [N
न तस्य स स्वरो देवि विस्वरोऽयं[4] श्रुतस्त्वया ।
२३] कष्टायामप्यवस्थायां न रामो गर्हितं वदेत् ॥२०॥ [N
लक्ष्मणश्चिन्तयामास सीतां प्रति महाबलः ।
N] कर्तव्यं किं समुत्सृज्य नेति बुद्ध्या[5] विचारयन् ॥२१॥ [N
एवमुक्त्वा तु वैदेही क्रुद्धा रक्तान्तलोचना ।
२४] अब्रवीत् परुषं वाक्यं लक्ष्मणं पथ्यवादिनम्[6] ॥२२॥ [२०
नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् ।
२६] त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥२३॥ [२३
संदुष्टस्त्वं[7] वने पाप रामं नैवानुगच्छसि[8] ।
२७] मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥२४॥ [२४

---

१. रा—रावणेन ।
२. कै रा अ—हंतुमिहोत्सहे ।
म—हंतुमिहोत्सवे ? ।
३. ल अ ब म—सिंहा वराहा ।
४. अ—विस्वरोधं ।
५. ब—नीतिबुद्ध्या ।
६. अ म— प्रतिवादिनम् ।
भ च— तथ्यवादिनम् ।
७. भ च—सदुष्टस्त्वं ।
८. भ च—समनुगच्छसि ।

कथमिन्दीवरश्यामं रामं पद्मदलेक्षणम् ।
२८] उपसंगम्य भर्तारं कामयेयं पृथग्जनम् ॥२५॥ [२५
अश्रुपूर्णमुखी सीता तथोक्त्का पुनरब्रवीत् ।
N] अहं तावत् प्रपश्यामि हतो रामो महात्मवान् ॥२६॥ [ N
इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ।
३१] अब्रवील्लक्ष्मणः सीतां प्राञ्जलिश्चलितेन्द्रियः ॥२७॥ [२७
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
३२] वाक्यमप्रतिरूपं तु न युक्तं तव मैथिलि ॥२८॥ [२८
स्वभाव एष नारीणां त्रिषु लोकेषु कथ्यते ।
३३] विमुक्तधर्माश्चपला भ्रातृभेदकराः स्त्रियः ॥२९॥ [२९
उपशृण्वन्तु मे सर्वे साक्षिभूता वनेचराः ।
३४] न्यायवादी यथा वाक्यमुक्तोऽहं परुषं त्वया ॥३०॥ [३१
विक्लवं धर्मसक्तं च यन्मामेवं विशंङ्कसे ।
३५] स्त्रीस्वभावेन दुष्टेन गुरुवाक्ये व्यवस्थितम ॥३१॥ [३२

---

१. भ च—पद्मनिभेक्षणं ।
२. भ च—उपसंपद्य ।
३. भ च— दीना ।
४. अ—तथोक्ता ।
५. व म भ च—एव ।
६. भ च—भर्तृभेदकराः ।
७. भ च—सर्वं ।
८. व म—न्याय्यवादी ।
९. रा—विमुक्तवास्तुप्रणयं ।
भ च—धिक्त्वामाशु प्रणश्येः त्वं ।
१०. भ च—विगर्हसे ।
११. कै रा—गुरुर्वाक्ये व्यवस्थितः । ल व—गुरुर्वाक्यो व्यवस्थित ।
अ—गुरुवाक्या व्य० । म—गुरुवाक्यं व्यव० ।

यास्यामि यत्र काकुत्स्थः स्वस्ति[1] तेऽस्तु वरानने ।
३७] रक्षन्तु त्वां विशालाक्षि समये वनदेवताः ॥३२॥ [३३
निमित्तानि च घोराणि यानि प्रादुर्भवन्ति मे ।
३८] अपि त्वां सह रामेण पश्येयं[2] पुनरागतः ॥३३॥ [३४
लक्ष्मणेनैवमुक्ता तु वैदेही जनकात्मजा ।
३९] प्रत्युवाच ततो वाक्यं सीता बाष्पपरिप्लुता ॥३४॥ [३५
गोदावरीं प्रवेक्ष्यामि विना रामेण लक्ष्मण ।
४०] उद्बध्य[3] वा विमोक्ष्यामि विपिने[4] देहमात्मनः ॥३५॥ [३६
अप्यहं ज्वलितं दीप्तं प्रविशेयं हुताशनम् ।
४१] विषं वा भक्षयिष्यामि विना रामेण लक्ष्मण ॥३६॥ [३७
N] रामेण[5] हि[6] विनाभूता न त्वहं स्थातुमुत्सहे । [N
तामार्तरूपां रुदतीं निशम्य
सौमित्रिरालोक्य विशालनेत्राम् ।
आश्वासयामास न चैव भर्तुस्[7]
४३] तं भ्रातरं किञ्चिदुवाच सीता ॥३७॥ [३८

---

१. भ च—स्वस्तिरस्तु ।

२. भ च—पश्यामि ।

३. कै अ म—उदबाद् । ल रा ब—लटबाद् ।

४. भ च—विषमं ।

५. ल अ ब म—अद्याहं । म—अपि ह ।

६. भ च—राघवेण ।

७. अ म—स ।

ततस्तु सीतामभिवाद्य लक्ष्मणः
कृताञ्जलिः किञ्चिदभिप्रणम्य[1] ।
अवेक्ष्य(क्ष ?)[2]माणो बहुशश्च मैथिलीं
४४] जगाम रामस्य सकाशमात्मवान् ॥३८॥ [४०

इत्यार्षे रामायणे आरण्यकाण्डे लक्ष्मण[3]प्रयाणं
नाम पञ्चाश[4]त्तमः सर्गः ॥५०॥

---

१. कै रा अ ब म—किञ्चिदपि प्रणम्य ।
२. कै—अवीक्ष्यमाणो । अ ब—अवीक्षमाणो ।
३. च—लक्ष्मणवाक्यप्रमाणं ।
४. कै रा ल ब म भ च—नास्ति ।

[वं—५२] = [एकपञ्चाशः सर्गः] = [दा—४९]

१पू] तया परुषमुक्तस्तु रुषितो राघवानुजः ।
३उ] अवेक्षमाणो[1] बहुशः प्रतस्थे नचिरादिव ॥१॥ [१
एतदन्तरमासाद्य दशग्रीवः प्रतापवान् ।
४] परिव्राजकलिङ्गेन[2] वैदेहीं समुपागमत् ॥२॥ [२
रावणश्चाप्रतिबलो[3] भ्रातृभ्यां रहितां वने ।
५] रहितामर्कचन्द्राभ्यां सन्ध्यामिव महत् तमः ॥३॥ [४
विहीनां रामचन्द्रेण पतितां कमलेक्षणाम् ।
N] रोहिणीं शशिना हीनां दिवि घोर इव ग्रहः ॥४॥ [५
१०पू] तमुग्रतेजःकर्माणं जनस्थानमुपागतम् ।
११पू] दृष्ट्वैव वृक्षाः कम्पन्ते प्रववौ न च मारुतः ॥५॥ [६
११उ] शीघ्रं सीतां[4] चैव[5] तं दृष्ट्वा वीक्ष्य संरक्तलोचनम् ।
१२पू] स्तिमितं गन्तुमारेभे यावद् गोदावरीं नदीम् ॥६॥ [७
१३उ] रामस्य त्वन्तराप्रेप्सू रावणस्तदनन्तरम् ।
१४पू] प्राप्योपस्थगतां[6] सीतां भिक्षुरूपेण राक्षसः ॥७॥ [८
१४उ] अभव्यो[7] भव्यरूपेण[7] भर्तारं समनुव्रताम् ।

---

१. रा भ च—अवेक्ष्यमाणो । व—अवीक्षमा० ।

२. भ च—परिव्राजकरूपेण ।

३. भ च— तामाससादातिबलो ।

४. भ च—श्रोताश्च ।

५. भ च—भयाद् ।

६. भ च—प्राप्योपतस्थे तां ।

७. म—अभव्यं भवरूपेण ।

अभ्यगच्छत वैदेहीं चित्रामिव शनैश्चरः ॥८॥ [९
१५उ] स पापः साधुरूपेण तृणैः कूप इवावृतः ।
१६पू] अभितः प्रेक्ष्य वैदेहीं पत्नीं रामस्य रावणः ॥९॥ [१०
१६उ] स तां रुचिरदन्तौष्ठीं पूर्णचन्द्रनिभाननाम् ।
१७पू] आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ॥१०॥ [११
१९उ] पद्मपत्रविशालाक्षीं पीतकौशेय[2]वासिनीम् ।
२०पू] अभ्यगच्छत वैदेहीं[1] दुष्टचेता निशाचरः ॥११॥ [१२
२०उ] स मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् ।
२१पू] अब्रवीत्[3] प्रश्रितैर्वाक्यैरभितो[4] राक्षसेश्वरः ॥१२॥ [१३
उत्तमां सर्वलोकेषु पद्महीनामिव श्रियम् ।
२२] विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥१३॥ [१४
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ । [१९उ
२४] समौ निरन्तरौ पीनौ वृत्तौ नरमनोहरौ ॥१४॥ [N
चारुस्मिते चारुदन्ति चारुविस्तृत[5]लोचने ।
२३] मनो हरसि मे भीरु नदीवेगं[6] इव प्लवम् ॥१५॥ [२०
२५उ] काञ्चनाम्भोज[7]गर्भाभा पीतकौशेयवासिनी । [१५पू
२६उ] ह्रीः[8] कान्तिश्च शुभा लक्ष्मीरथवा त्वं वरानने ॥

---

१. रा—दुष्टचेता निशाचरः । कदाचिदयं पाठः भ्रममूलः स्यात् । अत एवातः परं शेषान् श्लोकान् विहाय 'स मन्मथे' त्यादि सार्धश्लोकमेकं लिखितम् ।

२. ल अ ब म—°यवाससम् ।

३. भ च—अथ तां प्रसृतैर्वाक्यैरवदद् ।

४. भ च—जुष्टौ ।

५. कै रा भ च—चारुनेत्रविशालिनि ।

६. कै रा ल अ ब म—नदीवेगमिव प्लवः ।

७. भ च—का त्वं काञ्चनगर्भाभा ।

८. भ च—श्रीः कीर्तिः ।

भूतिर्वासि वरारोहे रतिर्वा स्वैरचारिणी ॥१६॥ [१६

२७] समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव । [१७पू

३४उ] विशाले विपुले नेत्रे रक्तान्ते कृष्णतारके ॥१७॥

३२उ] विशालं जघनं पीनमूरू [1]गजकरोपमौ । [१८

[2]करसम्मितमध्यासि सुकेशी कठिनस्तनी ॥१८॥ [२१

३५] नैव देवी न गन्धर्वी नासुरी न च किन्नरी ।

एवंरूपा मया नारी [3]दृष्टरूपा महीतले ॥१९॥ [२३

३६] रूपमग्र्यं च ते लोके सौकुमार्यं यशस्विनि ।

इह वासश्च कान्तारे किमर्थं ते वरानने ॥२०॥ [२२

३७] संप्रतिक्र(क्रा?)म भद्रं ते न त्वं वस्तुमिहार्हसि [4]।

राक्षसानामयं वासो घोराणां कामरूपिणाम् ॥२१॥ [२४

३८] प्रासादाग्राणि दिव्यानि नगरोपवनानि च ।

३९पू] सपद्मानि [5]सुगन्धीनि युक्तान्यासेवितुं त्वया ॥२२॥ [२५

४०पू] वरं माल्यं वरं वस्त्रं [6]वराण्याभरणानि च ।

४०उ] भर्तारं च [7]वरं मन्ये तव युक्तं वरानने ॥२३॥ [२६

४२पू] का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ।

४२उ] का वसूनां वरारोहे देवानां प्रतिभासि मे ॥२४॥ [२७

नेहागच्छन्ति गन्धर्वा न देवा न च मानुषाः ।

४४] रक्षसामयमावासः कथं च त्वमिहागता ॥२५॥ [२८

इह व्याला मृगाः सिंहा व्याघ्राश्च पृषतास्तथा ।

---

१. अ—गजकरोपमौ ।

२. कै रा ल अ ब म—करम्भितसुमध्यासि ।

३. ब—दृष्टपूर्वा ।

४. ल—नास्ति ।

५. कै रा ल अ ब म—सुगन्धानि ।

६. ब म—वस्त्राण्याभर° । ७. भ च—परं ।

४५] ऋक्षास्तरक्षवो येऽन्ये तेभ्यस्त्वं न बिभेषि किम् ॥२६॥ [२९

घोराणां गिरिकल्पानां कुञ्जराणां तरस्विनाम् ।

४६] कथमस्मिन् महारण्ये न बिभेषि वरानने ॥२७॥ [३०

कासि कस्य कुतश्चा[1]सि किं निमित्तं च दण्डकं[2]म् ।

४७] एका चरसि कल्याणि घोरराक्ष[3]ससेवितम् ॥२८॥ [३१

द्विजातिवेषे[4]ण हि[5] तं[5] दृष्ट्वा रावणमागतम् ।

५०] सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥२९॥ [३२

तपनीयासनं भद्रं पादेनोपनिवे[6]श्य च ।

५१] अब्रवीत् सिद्धमित्येवं तं पापं सौम्यदर्शनम् ॥३०॥ [३३

द्विजातिरूपेण हि वीक्ष्य रावणं

तमा[7]गतं शस्त्रकुशान्तपाणिनम् ।

अशंक्यमुद्द्रेष्टुमुपायदर्शनं[8]

N] न्यमन्त्रयद् ब्राह्मणमेवमङ्गना ॥३१॥[9] [३४

इयं बृसी ब्राह्मण काममास्यता-

मिदं च पाद्यं प्रतिगृह्यतां त्वया ।

इदं च सिद्धं परमान्नमुत्तमं[10]

N] त्वदर्थमग्रे[11] तदिहोपयुज्यताम् ॥३२॥ [३५

---

१. भ भ—कुलस्यासि ।

२. अ—दण्डके ।

३. भ च—घोरं राक्षससेवितम् ।

४. कै रा ल अ ब म—द्विजातिवेशेन ।

५. ब—युतं ।

६. कै रा—पादेनोपनिमन्त्र्य ।

७. कै—समागतम् ।

८. भ—°क्यमुद्वेष्टि° ।

९. च—नास्ति । भ—पुस्तकस्य पार्श्वभागे पश्चादङ्कितः ।

१०. कै—°समुन्नतं । ११. भ च - त्वदर्थमन्यं ।

निमन्त्रया (मा?)णां परिपूर्णभाषिणीं
नरेन्द्रपत्नीं समवेक्ष्य रावणः ।
प्रसह्य तस्या हर[1]णे दृढव्रतः
५२] शुभाननां तां न तथाऽभ्यमन्ये[2]त ॥३३॥ [३६
सा तं वरोरुर्मृगयागतं तदा
निरीक्षमा[3]णा सहलक्ष्मणं पतिम् ।
अजातमाना हरणं समन्ततो
५३] महद् वनं प्रीतमना ददर्श ह ॥३४॥ [३८

इत्यार्षे रामायणे आरण्यकाण्डे रावणादर्शनं नाम
एकपञ्चाशत्तमः सर्गः ॥५१॥

---

१. ल ब—हरणं ।
२. भ च—तथाभ्यभाषत ।
३. रा अ भ च—निरीक्ष्यमाणा ।
४. भ च—नास्ति ।
५. कै रा ल ब म भ च—नास्ति ।

रावणेन तु वैदेही तथा पृष्टा शुचिस्मिता ।
N] परिव्राजकरूपेण शशंसात्मानमात्मना ॥१॥ [१
तदुक्तं मधुरं वाक्यं रावणेन वरानना ।
१] अर्चयित्वा तु वैदेही तमुवाच दशाननम् ॥२॥ [२
दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
२] सीता ब्राह्मण भद्रं ते पत्नी रामस्य धीमतः ॥३॥ [३
उषित्वा द्वादशैवाहं समाः श्वशुरवेश्मनि ।
३] भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥४॥ [४
तत्र त्रयोदशे वर्षे राजामन्यत मे पतिम् ।
४] अभिषेचयितुं राज्ये समेतो राजमन्त्रिभिः ॥५॥ [५
ततः संभ्रियमाणे[1] तु[2] राघवस्याभिषेचने ।
५] कैकेयी नाम भर्तारमार्या वरमयाचत ॥६॥[3] [६
नाद्य भोक्ष्ये न च स्वप्स्ये न च पास्ये[4] कथञ्चन ।
७] एष मे जीवितस्यान्तो[5] रामो यद्यभिषिच्यते[6] ॥७॥ [८
इति ब्रुवाणां कैकेयीं श्वशुरो मे समन्मथः ।
११] उवाच वाक्यैरन्वर्थैर्वरं नान्यदयाचत[7] ॥८॥ [९

---

१. कै रा ल—संभ्रियमाणे ।  २. भ च—च ।
३. भ च—अतः परमाधिकः पाठः—
प्रतिगृह्य तु कैकेयी प्रथमं सुकृतैः पतिं ।
मम प्राव्राजनं भर्तुर्वरं परमयाचत ॥
४. भ च—यास्ये ।
५. ल ब—जीवितस्यार्थो ।
६. रा ल ब—यद्याभिषेच्यते ।
७. भ च—नान्यमयाचत ।

१२पू] मम भर्ता तदा ब्रह्मन् वयसा सप्तविंशकः ।
N] अष्टादश तु वर्षाणि ममाप्यायुर्विगण्यते ॥९॥ [१०
१२उ] लोके राम इति ख्यातो गुणवान् सत्यविक्रमः ।
N] विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥१०॥ [११
कामार्तश्च महातेजाः पिता तस्य महात्मनः ।
१३] कैकेय्याः प्रियकामार्थं राघवं नाभिषिक्तवान् ॥११॥ [१२
तदाभिषेकाय पितुः समीपं राममागतम् ।
१४] कैकेयी मम भर्तारमित्युवाच दृढव्रतम् ॥१२॥ [१३
तव पित्रा समाज्ञप्तं ममेदं रघुनन्दन ।
१५] भरताय प्रदातव्यं स्फीतं राज्यमकण्टकम् ॥१३॥ [१४
त्वया च खलु वस्तव्यं नव वर्षाणि पञ्च च ।
१६] वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् ॥१४॥ [१५
तथेत्युक्त्वा च तां रामः कैकेयीमकुतोभयाम् ।
१७] स चकार वचस्तस्या मम भर्ता दृढव्रतः ॥१५॥ [१६
दद्यां न प्रतिगृह्णीयां सत्यं ब्रूयां न चानृतम् ।
१८] इति ब्राह्मण रामस्य व्रतधर्ममनुत्तमम् ॥१६॥ [१७
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
१९] रामस्य पुरुषव्याघ्रः सहायः समपद्यत ॥१७॥ [१८

१. ल अ ब म भ च—अष्टादशापि ।

२. ल अ ब म—महाबुद्धिः ।

३. भ च—तथाभिषेकापायितुं ।

४. भ च—तु ।

५. ब—चानृतां ।

६. भ च—व्रतं धर्मम° ।

७. अ—सौमित्रिर् ।

८. भ च—सहायं ।

स भ्रातरं महाबाहुर्भक्त्या परमवीर्यवान्[1] ।
२१] अन्वगच्छन्महातेजाः प्रव्रजन्तं मया सह ॥१८॥ [१९
ते वयं प्रच्युता राज्यात् कैकेय्यास्तु कृते त्रयः ।
२२] विचरामो द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥१९॥ [२१
२३उ] समाश्वस मुहूर्तं च शक्यं वस्तुमिह त्वया ।
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥२०॥ [२२
२४] स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः ।
२५पू] एकस्त्वं दण्डकारण्ये[2] किमर्थं चरसि द्विज ॥२१॥ [२३
२६उ] एवं ब्रुवन्त्याः सीताया रामपत्न्या महाबलः ।
२७पू] प्रत्युवाच ततस्तीव्रं[3] रावणो राक्षसाधिपः ॥२२॥ [२४
२८उ] येन वित्रासिता[4] लोकाः सामराः सचराचरा[5]
२९पू] अहं स रावणो नाम सीते राक्षसपुङ्गवः ॥२३॥ [२५
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम्[6] ।
३३] नाहं स्वकेषु दारेषु रतिं विन्दाम्यनिन्दिते ॥२४॥ [२६
बह्वीनामुत्तमस्त्रीणां भार्याणां मम मैथिलि ।
३४] सर्वासां त्वं वरारोहे सारमग्र्या[7] भविष्यसि ॥२५॥ [२७
लङ्का नाम समुद्रस्य द्वीपे श्रीमति सा पुरी ।
३५] सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥२६॥ [२८

---

१. भ च—परमयात्मवान् ।
२. भ च—दण्डकारण्यं ।
३. भ च—ततस्तीक्ष्णं ।
४. म—विश्रासिता ।
५. के—नास्ति ( त्यक्तः )
६. ब—विन्दाम्यानिन्दितां ।
७. भ च—तासामग्र्या ।

३७उ] नीलजीमूतवर्णानां राक्षसानां महापुरी ।
३८पू] विश्वकर्मकृता दिव्या त्रिंशद्योजनमायता ॥२७॥ [N
३९पू] तत्र सीते मया सार्धं वनेषु विहरिष्यसि[1] ।
३९उ] न चास्यारण्यवासस्य स्पृहयिष्यसि भामिनि ॥२८॥ [२९
पञ्च दासीशतानि त्वां[2] सर्वाभरणभूषिताम्[3] ।
४१पू] सीते परिचरिष्यन्ति भार्या मे भव शोभने ॥२९॥ [३०
४२उ] रावणेनैवमुक्ता[4] सा कुपिता जनकात्मजा[5] ।
तमुवाचानवद्याङ्गी अनादृत्य तु राक्षसम् ॥३०॥ [३१
४३] महाचलमिवाकम्प्यं[6] नागेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यम्[7]अहं राममनुव्रता ॥३१॥ [३२
४४] पूर्णचन्द्रनिभं रामं[8] राजपुत्रं जितेन्द्रियम् ।[9] [३५पू
४५उ] महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ॥३२॥ [३४पू
सिंहं सिंहीव दुर्धर्षमहं राममनुव्रता । [३४उ
४६] जम्बुकस्त्वं नरव्याघ्रीं[10] मामुपासितुमिच्छसि[11] ॥३३॥ [३७पू

१. कै रा—विचारिष्यसि ।
२. ब—पद्मपत्रविशालाक्षीं ।
३. भ च—°भूषिताः ।
४. ब—रावणेन विमुक्ता ।
५. ब—त्रुटितः पाठः ।
६. कै रा म भ च—महाबमि° ।
ल—महाबलामिवाकम्पं । ब—त्रुटितः पाठः ।
७. ल —°मिवाक्षोभ्य° ।
८. भ च—वीरं ।
९. भ च—अतः परमधिकः पाठः—
पृथुकीर्तिं महावीर्यमहं राममनुव्रता ।
१०. भ च – नरव्याघ्र !
११. भ च— °सितुमर्हसि ।

न[1] च शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा[2] यथा । [३६उ
४७] पावकस्य समृद्धस्य शिखां त्वं स्प्रष्टुमिच्छसि ॥३४॥ [N
N] कालकूटं विषं पीत्वा स्वस्तिमान्[3] रन्तुमिच्छसि । [३९उ
अक्षि सूच्या विमृशसि जिह्वया लिह्यसि क्षुरम् ।
५०] यो रामस्य प्रियां भार्यामपहर्तुं[4] त्वमिच्छसि ॥३५॥ [४०
५१पू] व्याघ्र्यास्तरुणपुत्रायाः प्रजामादातुमिच्छसि ।
N] सिंहं सुप्तं वने दुर्गे मौर्ख्याद् दोधूयसे[5] पदा ॥३६॥ [N
यदन्तरं सिंहसृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ।
सुराष्ट्रसौवीरकयोर्[6]यदन्तरं
५६] तदन्तरं वै तव राघवस्य च ॥३७॥[7] [४४
यदन्तरं काञ्चनसीसलोहयोर्
यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने
५७] तदन्तरं वै तव राघवस्य च ॥३८॥ [४५
यदन्तरं वायसवैनतेययोर्
यदन्तरं काकमयूरयोर्वने[8] ।
यदन्तरं सारसगृध्रयोर्वने
५८] तदन्तरं वै तव राघवस्य च ॥३९॥ [४६

---

१. भ च—न शक्याहं ।
२ भ च—प्रभा ।
३. भ च—स्वस्तिमानास्तुमिच्छसि ।
४. म—°र्यामपहर्तुं ।
५. अ भ च—बोधयसे ।
६. ल अ ब म—सौवीरजयो° ।
७. भ च—नास्ति ।
८. भ च—°र्भवेत् ।
९. ब—नास्ति ।

तस्मिन् सहस्राक्षसमप्रभावे
रणस्थिते राक्षस चण्डवेगे ।
हृतापि तेऽहं न जरां गमिष्ये
५९] वज्रो यथा मक्षिकया निगीर्णः ॥४०॥ [४७
इत्येवं तद् वाक्यमदुष्टभावा
सुरूक्षमुक्त्वा रजनीचरस्य ।
गात्रप्रकम्पैर्व्यथिता बभूव
६१] स्पृष्टेव मुक्ता कदली गजेन ॥४१॥ [४८
तां वेपमानामुपलभ्य सीतां
स रावणो मृत्युरिवोग्रतेजाः ।
कुलं बलं वीर्यमथापि चात्मनः
६२] स्वमाचचक्षे भयकारणार्थम् ॥४२॥ [४९

इत्यार्षे रामायणे आरण्यकाण्डे रावणभर्त्सनं नाम
द्विपञ्चाशत्तमः सर्गः ॥५२॥

---

१. ल —°प्रभावये ।
२. कै रा भ च—रणे स्थिते ।
३. भ च— हृतीव ।
४. ल अ व—स्पृष्टेव । अ—स्पृष्टैव । म—स्पृष्ट्वैव ।
५. ल अ ब म भ च—मृत्युमिवोग्र० ।
६. भ—नास्ति ।
७. कै रा ल ब म भ च—नास्ति ।

भ्राता वैश्रवणस्याहं सापत्न्यो¹ वरवर्णिनि ।
२] रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥१॥ [२
यस्य देवाः सगन्धर्वाः पिशाचाः पतगोरगाः ।
३] विद्रवन्ति भयाद् भीता मृत्योरिव सदा प्रजाः² ॥२॥ [३
येन वैश्रवणो राजा³ द्वैमात्रः⁴ कारणान्तरे ।
४] द्वन्द्वमासाद्य युद्धेन बलेनाशु मया⁵ जितः ॥३॥ [४
मद्भयाच्च परित्यज्य स्वमधिष्ठानमृद्धिमत् ।
५] कैलासपर्वतं श्रेष्ठमध्यास्ते नरवाहनः ॥४॥ [५
तस्य तत् पुष्पकं नाम विमानं कामगं महत् ।
६] वीर्येण विजितं भद्रे तेन यामि विहायसा ॥५॥ [६
मम सञ्जातरोषस्य मुखं दृष्ट्वैव मैथिलि ।
७] प्रपतन्ति परिभ्रष्टाः सर्वभूता⁶ दिशो दश ॥६॥ [७
यत्र तिष्ठाम्यहं तत्र मारुतो वाति⁷ शङ्कितः ।
१२] दीप्तांशुः शिशिरांशुर्मे⁸ भयात् संपद्यते रविः ॥७॥ [८
निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः⁹ ।
१३] भवन्ति तत्र यत्राहं तिष्ठामि वरवर्णिनि ॥८॥ [९

१. भ च—सापत्नो ।
२. भ च—सदा प्रजा: ।
३. भ च—भ्राता ।
४. भ—वैमात्रः ।
५. भ च—विनिर्जित: ।
६. के रा—सहभूता: ।
७. अ—याति ।
८. भ च—शिशिरांशुस्त्वं ।
९. अ—स्वमितोदका:

मम पारे समुद्रस्य लङ्का नाम महापुरी ।
१४] सम्पूर्णा राक्षसैर्घोरैरिन्द्रस्येवामरावती ॥९॥ [१०
प्राकारेण समृद्धेन[1] पाण्डुरेण विराजिता[2] ।
१५] हेमकक्ष्यान्तरा रम्या वैडूर्यमणितोरणा ॥१०॥ [११
हस्त्यश्वरथसम्पूर्णा नानातूर्यनिनादिता ।
१६] सर्वकामफलैर्वृक्षैरुद्यानैरुपशोभिता[3] ॥११॥ [१२
तत्र सीते वसन्ती त्वं राजपुत्रि मया सह ।
१७] न स्मरिष्यसि नारीणां मानुषीणामनिन्दिते ॥१२॥ [१३
भुञ्जाना मानुषान् भोगान् दिव्यांश्च वरवर्णिनि ।[4]
१८] न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥१३॥ [१४
स्थापयित्वा प्रियं पुत्रं राज्ये दशरथेन वै ।
१९] मन्दवीर्यतरः पुत्रो दुष्टः[5] प्रस्थापितो वनम् ॥१४॥ [१५
तेन किं भ्रष्टराज्येन रामेण गतचेतसा ।
२०] करिष्यसि विशालाक्षि कृपणेन तपस्विना ॥१५॥ [१६
सर्वराक्षसभर्तारं रावणं स्वयमागतम् ।
२१] न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥१६॥ [१७
प्रत्याख्याय च मां भीरु परितापं गमिष्यसि ।
२२] पदाभिहत्येव[6] पुरा पुरूरवसमुर्वशी ॥१७॥ [१८
एवमुक्ता तु वैदेही क्रुद्धा रक्तान्तलोचना ।
२३] अब्रवीत् परुषं वाक्यं रावणं राक्षसाधिपम् ॥१८॥ [२०

१. कै म भ च—प्रवृद्धेन ।
२. रा ल अ ब म भ च—विराजता ।
३. म—°रूपशोभितैः ।
४. म—नास्ति ।
५. कै रा ल अ ब म—दृष्टः ।
६. ल ब—°हन्येव । म—°हतेव ।

कथं वैश्रवणं देवं सर्वभूतनमस्कृतम् ।
२४] भ्रातरं व्यपदिश्य त्वं पापं कर्तुमिहेच्छसि ॥१९॥ [२१
अवश्यं तु विनश्यन्ति सर्वे रावण राक्षसाः ।
२५] येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥२०॥ [२२
अपनीय शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् ।
२६] न तु रामस्य वै भार्यामपनीयास्ति जीवितम् ॥२१॥ [२३
जीवेच्चिरं वज्रधरस्य हस्ता-
च्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं रावण धर्षयित्वा
२७] जीवेद्धि लोकान्तरगोऽप्यमर्त्यः ॥२२॥
श्रियमतिविपुलां विहाय रौद्र
द्विजनृपदेवगणान् प्रमथ्य संख्ये ।
यमविषयमतो गमिष्यसि त्वं
२८] ध्रुवमिह लक्ष्मणसायकैः प्रदीप्तैः ॥२३॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे सीतावाक्यं नाम
त्रिपञ्चाशः सर्गः ॥५३॥

---

१. भ च—त्वमपकर्तु° ।
२. अ—विनश्यन्तु ।
३. अ—°मपनीयासि ।
४. रा अ—जीवितुम् ।
५. रा—प्रविष्टां प्रतिरूपरूप्यम् ।
६. भ च—राक्षस ।
७. भ च—पि मर्त्यः ।
८. भ च—रौद्रो ।
९. ल ब म—°मतो । अ—°गतो ।
१०. भ च—नास्ति ।
११. कै रा ल ब म भ च—नास्ति ।

सीताया वचनं श्रुत्वा दशग्रीवो महाबलः ।
१] हस्तेन हस्तं निष्पिष्य चकार सुमहद् वपुः ॥१॥ १]
६उ] स मैथिलीं पुनर्वाक्यं बभाषे कुपितो भृशम् ।
८उ] उन्मत्ते न श्रुतं मन्ये मम वीर्यं त्वयाऽतुलम् ॥२॥ [२
उद्वहेयं च बाहुभ्यां मेदिनीमम्बरोपरि ।
९] प्रपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितम् ॥३॥ [३
अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्भिन्द्यामपि महीतलम् ।
१०] कामरूपिणमुत्सिक्तं पश्य मां कामचारिणम् ॥४॥ [४
एवमुक्ता तु वैदेहीं रावणस्य शिखिप्रभे ।
११] क्रुद्धस्य परि पर्यन्ताद् रक्ते नेत्रे बभूवतुः ॥५॥ [५
तच्च सौम्यं परित्यज्य भिक्षुरूपं स राक्षसः ।
३] स्वरूपं कालरूपाभं भेजे वैश्रवणानुजः ॥६॥ [६
स रक्तनयनः श्रीमांस्तप्तकाञ्चनकुण्डलः ।
१२] दशास्यः कार्मुकी बाणी बभूव क्षणदाचरः ॥७॥ [७

---

१. कै रा ल अ ब म—हस्ते ।

२. कै रा ल अ ब म—विनिष्पिष्य ।

३. कै रा ल अ म भ च—°मंबरेपि च ।

४. कै रा ल अ ब म—°अकरथ्याः ।

५. ल अ ब म—कामरूपिणम् ।

६. कै ल अ ब म—शिखिप्रभां ।
रा—शिखिप्रभं ।

७. भ च—परिपर्यन्ते ।

स परिव्राजकच्छद्म[१] महाकायो विहाय तत् ।
२] प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः ॥८॥ [८
स[२] रक्तनयनः क्रोधाज् जीमूतनिचय[३]प्रभः ।
१.३] रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं[४] प्रेक्ष्य मैथिलीम् ॥९॥ [९
स तामसितकेशान्तां भास्वरो[५]ल्काप्रभामिव ।
१.४] वसनाभरणोपेतां प्रत्युवाचाथ रावणः ॥१०॥ [१०
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ।
N] मामाश्रय[६] वरारोहे तवाहं सदृशः पतिः ॥११॥ [११
राज्याच्च्युतम[७]सिद्धार्थं रामं परिमितायुषम् । [१३उ
२०] कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि ॥१२॥ [१४पू
यः स्त्रियो वचनाद् राज्यं विहाय ससुहृज्जनम् । [१४उ
२१] अस्मिन् व्याला[८]नुचरिते वने वसति दुर्मतिः ॥१३॥ [१५
१.६उ] मां भजस्व चिरायाद्य श्लाघ्योऽहं तव संश्रयः ।
नैवायासं क्वचिद् भद्रे लप्स्यसे त्वं विना प्रियम् ॥१४॥ [१२
१.७] त्यज्य[९]तां मानुषो भावो मयि स्नेहो निपात्यताम् । [१३पू
२२उ] इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् ॥१५॥ [१६पू

---

१. अ—°व्राजच्छद्मन् ।
कै रा ल ब म—°कच्छद्मा ।
२. कैरा अ म भ च—संरक्तनयनः ।
३. ल अ ब म—°तंचयसप्रभः ।
४. म—श्रीरत्नं ।
५. कै रा अ भ च—भास्करोल्का० ।
६. ल ब—मामाश्रयं ।
अ म—ममाश्रय ।
७. भ च—राज्यच्च्युत० ।
८. भ च—व्याडानु० ।
९. अ म—त्यजताम् ।

२६उ] वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।
२७पू] ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥१६॥ [१७
२८उ] तं दृष्ट्वा गिरिसङ्काशं तीक्ष्णदंष्ट्रं महाबलम् ।
२९पू] प्राद्रवन् जातसन्त्रासा भयार्ता वनदेवताः॥१७॥ [१८
३१उ] स तु मायामयो दिव्यः खरयुक्तः खरस्वनः ।
३२पू] प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ॥१८॥ [१९
३२उ] ततस्तत्परुषैर्वाक्यैरभिगर्जन् दशाननः ।
३३पू] अङ्केनादाय वैदेहीं रथमारोपयत् तदा[1] ॥१९॥ [२०
३४उ] सा गृहीता वि[2]चुक्रोश रावणेन मनस्विनी ।
३५पू] रामेति सीता दुःखार्ता रा[3]मे दूरं ग[3]ते वनम् ॥२०॥ [२१
तामकामां सुदुःखार्तां पन्नगेन्द्रवधूमिव ।
N] वेष्टमानां परिष्वज्य खमुत्पपात रावणः ॥२१॥ [२२
३५उ] ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
मन्दं मन्दमथोवाच क्षिप्तचित्तेव चातुरा ॥२२॥ [२३
३६] हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ।
३७पू] ह्रियमाणां न जानासि रक्षसा पापकर्मणा ॥२३॥ [२४
N] जीवितं सुखमर्थांश्च धर्महेतोः परित्य[4]जन् ।
३८उ] ह्रियमाणामधर्मेण मां[5] राघव न[6] पश्यसि ॥२४॥ [२५

---

१. रा—तथा ।
२. भ च—गृहीतापि चुक्रोश ।
३. ल अ ब म—रामं दूरे गतं ।
४. भ च—परित्यजेः ।
५. भ च—न मां ।
६. भ च—नास्ति ।

ननु रामाविनीतानां विनेताऽसि परन्तप ।
३९] कथं चैवंविधं पापं नानुशासंसि राक्षसम् ॥२५॥ [२६
४०पू] न तु सद्योऽपनीतस्य दृश्यते कर्मणः फलम् ।
N] काले ह्यन्तो भवेद्यत्र सस्यानामिव पक्तयः ॥२६॥ [२७
N] स कर्म कृतवानेष कालोपहतचेतनः ।
४० उ] जीवितान्तकरं घोरं रामाद्य मनसाऽऽप्स्यसि ॥२७॥ [२८
हन्तेदानीं सकामाऽस्तु कैकेयी सह बान्धवैः ।
४१] ह्रिये ऽहं धर्मकामस्य धर्मपत्नी चिराय वै ॥२८॥ [२९
आमन्त्रये जनस्थानं कर्णिकारांश्च पुष्पितान् ।
४३] क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥२९॥ [३०
दैवतानि च यान्यस्मिन् वने विविधपादपे ।
४७] नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ॥३०॥ [३३
यानि कानिचिदप्यस्मिन् सत्त्वानि निवसन्ति हि ।

---

१. भ च—नामा० ।
२. कै रा अ म—विनीता ।
३. स्वादित्वमार्षम् ।
४. भ च—तु ।
५. ल अ ब म—कालेन तस्य दृश्यन्ते ।
६. ब म—पङ्क्तयः ।
७. ल ब म—हतेदानीं ।
८. ल म—ह्रियेे ह । अ-ह्रियेव
ब—ह्रियेयं ।
९. ल—नास्ति ।
१०. भ च—अतः परमधिकः पाठः—
दण्डके त्वां शिखरिणं वन्दे प्रश्रवणं गिरिं ।
हंससारससंघुष्टां वन्दे गोदावरीं नदीम् ।
११. भ च—वै शंस ।

४८] सर्वाणि शरणं यामि मृगपक्षिगणानपि ॥३१॥ [३४
ह्रियमाणां प्रियां भार्यां प्राणेभ्योऽपि गरीयसीम् ।
५१] विवशां मां पतौ सीतां रावणेनेति शंसथ ॥३२॥ [३५
विदित्वा[1]ऽपि महाबाहुरमुत्रापि महामनाः ।
५२] आनयिष्यति विक्रम्य वैवस्वतगृहादपि ॥३३॥ [३६
इमं मम यथातत्त्वं जटायो हरणं त्वया ।
N] रामलक्ष्मणयोः क्षिप्रमाख्यातव्यमशेषतः ॥३४॥ [४१
रावणो नाम दुर्बुद्धी राक्षसो धनदानुजः ।
N] सीतां हरति दुष्टात्मा तत्र प्रतिविधीयताम् ॥३५॥ [N

इत्यार्षे रामायणे आरण्य[2]काण्डे सीता[3]प्रलापो नाम
चतुःपञ्चाश[4]त्तमः सर्गः ॥५४॥

---

१. भ च—विदित्वा मां ।
२. भ च—नास्ति ।
३. अ—सीताहरणप्रलापो ।
भ च—सीताप्रमाथे सीताप्रलापो ।
४. कै रा ल ब म भ च—नास्ति ।

N] ततः पर्वतकूटाभस्तीक्ष्णतुण्डः खगोत्तमः ।
८ उ] वनं प्रतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥१॥ [२
दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः[1] ।
९ ] जटायुर्नाम नाम्नाऽहं गृध्रराजो महाबलः ॥२॥ [३
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
१२] लोकानां च हिते युक्तो रामो दशरथात्मजः ॥३॥ [४
तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
१३] सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि[2] ॥४॥ [५
कथं राजा स्थितो धर्मे परदारान् परामृशेत् ।
१४] रक्षणीया विशेषेण परदारा महायशः[3] ॥ ५ ॥ [६
१५ पू] निवर्तय मतिं नीचां परदाराभिमर्शिनीम्[4] । [७पू
N ] मया साम्ना प्रोच्यमानो यदि सीतां न त्यक्ष्यसि ॥६॥ [N
१५ उ] वृन्तादिव फलं पक्वं पातयामि रथोत्तमात् । [N
१६पू] न तत् समाचरेद् वीर यत् परस्तु विगर्हयेत् ॥७॥ [N
१६उ] यथाऽऽत्मनस्तथाऽन्येषां दारा रक्ष्या विशेषतः । [७उ
N ] आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥८॥ [N

---

१. कै रा ल अ ब म—सत्यसंस्तवः ।

२. म—हेतुमिहेच्छसि ।

३. अ ब—महायशाः ।

भ च—महात्मना ।

४. अ—०भिमर्षिताम् ।

ल ब म—०मर्षिनाम् ।

कामं स्वभावो यो यस्य न स शक्यः प्रमार्जितुम् ।
१७] न हि दुष्टात्मनामार्या निवसन्त्यालये चिरम् ॥९॥ [११
अर्थं वा यदि वा कामं नष्टं शास्त्रेष्वनागतम्[1] ।
१८] व्यवस्यन्ति वरात्मानो धर्मं पौलस्त्य धर्मतः ॥१०॥ [८
राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः ।
१९] धर्मं शुभं वा पापं वा राजमूलं प्रवर्तते ॥११॥ [९
पापस्वभावश्चपलः कथं त्वं राक्षसाधमः । [१० पू
२०] तस्मान् नार्हसि संप्राप्तुमिमां सीतां यशस्विनीम् ॥१२॥ [N
विषये वा पुरे वाऽपि तव रामो महाबलः ।
२१] नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥१३॥ [१२
यदि शूर्पनखी[2]हेतोर्जनस्थानगतः खरः ।
२२] अतिवृत्तो[3] हतः पूर्वं[4] रामेणाक्लिष्टकर्मणा ॥१४॥ [१३
अत्र ब्रूहि यथासत्यं को नामास्य[5] व्यतिक्रमः[6] ।
२४] यस्य त्वं लोकनाथस्य भार्यां हर्तुमिहेच्छसि ॥१५॥ [१४
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा ।
२५] दहेद् दहनभूतेन वृक्षमिन्द्राशनिर्यथा ॥१६॥ [१५
सर्पमाशीविषं बद्धं[7] वस्त्रान्ते नावबुध्यसे[8] ।
२६] ग्रीवायां प्रतिसंयुक्तं कालपाशं न पश्यसि ॥१७॥ [१६

---

१. म—शास्त्रेषु नागतं ।
२. भ च—शूर्पणखी ।
३. कै रा ल अ ब म—अनिवृत्तो ।
४. भ च—सर्व्वं ।
५. भ च—रामस्य ।
६. म—व्यतिद्रुमः ।
७. कै रा—रुद्धं ।
८. म भ च—नाववध्यसे ।

भारः स[1] सम्यग् हर्तव्यो भारो[2] यो न विषादयेत ।
२७] तदन्नमुपभोक्तव्यं[3] जीर्यते यदनामयम ॥१८॥ [१७
यत् कृत्वा न भवेद् धर्मो न कीर्तिर्न यशो भुवि ।
२८] शरीरतो भवेत्कर्म[4] कथं प्राज्ञस्तदाचरेत ॥१९॥ [१८
षष्टिवर्षसहस्राणि मम जातस्य रावण ।
२९] पितृपैतामहे राज्ये यथावदनुतिष्ठतः ॥२०॥ [१९
N] न श्रुतं न च मे दृष्टं परदाराभिमर्षणम ।  [N
वृद्धोऽहं त्वं युवा धन्वी रथस्थः कवची शरी ।
३०] असन्त्यज्येह[5] वैदेहीं कुशली त्वं न यास्यसि ॥२१॥ [२०३
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
३१] हेतुभिर्न्यायसंयुक्तैर्मूढो[6] वेदश्रुतीमिव ॥ २२॥ [२१
युध्यस्व यदि वीरोऽसि मुहूर्तं तिष्ठ रावण ।
N] शयिष्यसे हतो भूमौ यथा भ्राता खरस्तव ॥२३॥ [२२
असकृत् संयुगे येन निहता दैत्यदानवाः ।
N] न चिराच् चीरवासास्त्वां रामो युधि वधिष्यति॥२४॥ [२३
किं तु शक्यं मया कर्तुं गतौ दूरं[7] नृपात्मजौ ।
N] क्षिप्रं त्वं नश्यसे नीच तयोर्भ्रात्रोर्न संशयः॥२५॥ [२४

---

१. कै रा ल अ ब म—सस्यस्य ।
२. कै रा भ च—यो भारो ।
३. भ च—तदन्नं नृप भोक्तव्यं ।
४. कै रा ल अ ब म—भवेद्धर्मः । 'शरीरस्य भवेत्क्लेशः, इति दा० पाठः । म अ—भवेद्धर्मः ।
५. भ च—न संत्यज्येह ।
६. भ च— °कैः शूद्रो ।
७. म—दूरे ।

न हि मे जीवमानस्य नयिष्यसि निशाचर ।
N] सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥२६॥ [२६
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ।
N] जीवितेनापि रामस्य तथा दशरथस्य च ॥२७॥ [२७
तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य मे बलम् ।
युद्धातिथ्यं[1] प्रदास्यामि यथाप्राणं निशाचर ।
N] सीतां सन्त्याजयिष्यामि स्थिरो भव सुदुर्मते ॥२८॥ [२८

इत्यार्षे रामायणे आरण्यकाण्डे सीताप्रमाथे[2] जटायुर्वाक्यं नाम
पञ्चपञ्चाशत्तमः[3] सर्गः ॥५५॥

---

१. कै ल ब म अ—यथातिथ्यं ।
२. कै रा ल ब म—सीता प्रमाथे।
अ—जटायुवाक्यं ।
३. कै रा ल ब म भ च—नास्ति।

इत्युक्तस्य यथान्यायं रावणस्य जटायुषा ।
३२] क्रुद्धस्याग्निनिभाः संख्ये विरेजुः शरवृष्टयः ॥१॥ [१
स रक्तनयनः श्रीमांस्तप्तकाञ्चनभूषणः ।
३३] राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणम् ॥२॥ [२
स संप्रहारस्तुमुलस्तयोस्तस्मिन् महावने ।
३४] बभूव वातोद्धतयोर्मेघयोर्गगने यथा ॥३॥ [३
तद् बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा ।
३६] सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥४॥ [४
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
३७] अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलम् ॥५॥ [५
शितानि शरजालानि गृध्रः पत्ररथेश्वरः ।
३८] जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥६॥ [६
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
४०] चकार बहुधा गात्रे व्रणान् पतगनायकः ॥७॥ [७
अथ क्रोधाद् दशग्रीवो जग्राह दश मार्गणान् ।
N] मृत्युदण्डसमान् घोरान् शत्रुमर्मावभेदिनः ॥८॥ [८

---

१. म—वातोहतयो० ।

२. भ च—०राक्षसयोर्मृधे ।

३. भ—विकर्षिभिः ।

४. रा—व्रह्मन् ।

५. भ च—पतगसत्तमः ।

६. अ—मृत्युदण्डकरान् ।
भ च—मृत्युदण्डोपमान् ।

७. कै रा ल अ ब म—मर्माणि भेदिनः ।

स तैर्बाणैर्महावीर्यो रुक्मपुंखैरजिह्मगैः ।
N] बिभेद निशितैर्घोरैर्गृध्रं तीक्ष्णैः शिलाशितैः ॥९॥ [९
४४पू] ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । [११पू
N] पक्षाभ्यां स महातेजा बभञ्ज पतगेश्वरः ॥१०॥ [N
N] तस्याग्निसंदृशं दिव्यं रावणस्याशुदंशनम् । N
४४उ] चरणाभ्यां महातेजा बभञ्ज सुमहाबलः ॥ [११उ
N] सारथिं च रथोपस्थात् स जघान नखाङ्कुशैः ॥११॥ [N
४८पू] काञ्चनोरश्छदान् हत्वा पिशाचवदनान् खरान् [१६पू
N] पूर्णचन्द्रप्रतीकाशं छत्रं तस्य न्यपातयत् ॥१२॥ [१८पू
४९उ] मणिहेमविचित्राङ्गं बभञ्ज स महारथम् ॥१३॥ [१७उ
ततश्च तं परबलमानभञ्जनं
सुरासुरैः समरमुखेष्वनिर्जितम् ।
पराजितं पतगवरेण रावणं
५३] विसिस्मयुः सुरमुनयो विलोक्य तत् ॥१४॥ [N

---

१. भ च—०र्महावीरै ।
२. भ च—र्वाणैर्गृ० ।
३. ल अ ब म—सुमहाबलः ।
४. कै—तथाग्नि० । भ—तच्चाग्नि० । च—तच्चापि सशरं ।
५. ल अ ब म—नास्ति ।
६. कै र ल अ ब म—काञ्चनरथच्छदान् ।
अयं मूलधृतपाठस्यैवापभ्रंशोऽवभाति ।
७. ल ब—व्यपातयत् ।
८. भ च—ततस्तु ।
९. भ च—वीक्ष्य ।
१०. भ च—खेचरभूरचा जनाः ।

अभिष्टुवन्[1] पतगवरं शुभा गिरेः[2]
सुदुष्करं कर्म कृतं त्वयाऽद्भुतम् ।
प्रभासितो[3] द्विजवरराजसत्तमो
९४] व्यवस्थितः पुनरपि युद्धनिश्चये[4] ॥२९॥ [N

इत्यार्षे रामायणे[5] आरण्यकाण्डे जटायुर्युद्धं[6] नाम
षट्पञ्चाशत्तमः[7] सर्गः ॥५६॥

---

१. कै रा ल अ ब म—अभिष्टुतं ।
२. अ म—गिरेः ।
३. भ च—प्रशंसितो ।
४. भ च—युद्धनिश्चयः ।
५. भ च—रामायणे महर्षिवाल्मीकिविरचिते ।
६. अ—जटायुरावणयुद्धं ।
७. कै रा ल ब म भ च—नास्ति

स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
५१] अङ्केनादाय वैदेहीमुत्पपाताशु[1] रावणः ॥ १ ॥ [२०
अथ तां नेतुकामस्य रावणस्यातिकोपतः ।
५७-३] जटायुरब्रवीद् वाक्यमिदं न्यायार्थसंयुतम् ॥२॥[2] [२३
४उ] अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् ॥३॥[3] [२४ उ
५ पू] यैाता[4] समित्रबन्धुस्त्वं सबलः सपरिच्छदः [२५ पू
N] यमस्य लोकं बाणार्तो रामस्य शरखण्डितः ॥४॥ [N
५ उ] विषपानं पिबस्येतत् पिपासित इवोदकम् ॥५॥ [२५ उ
बद्धस्त्वं कालपाशेन क्व[5] गतस्तस्य मोक्ष्यसे ।
७] बन्धाय बडिशं गृह्य सामिषं जलजो यथा ॥६॥ [२७
न हि जातु दुराधर्षो धर्मसेतुः प्रधर्षणाम्[6] ।
९] सीतायाश्चाश्रमस्यास्य राघवो[7] मर्षयिष्यति[8] ॥७॥ [२८

---

१. भ च—० त्पपाताथ ।
२. कै भ च—अतः परमधिकः पाठः—
तं त्वरन्तं निधायाङ्के हरंत जनकात्मजां ।
गृद्ध्रराजः समुत्पत्य जटायुरिदमब्रवीत् ॥
वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण ।
कै-पुस्तके पार्श्वभागेऽयं पाठः कोशान्तरादिवोद्धृत्य विन्यस्तः ।
३. भ च—अतः परमधिकः पाठः—
सपुत्रमित्रबंधस्त्वं सबलः सपरिच्छदः ।
४. कै रा—यदा ।
५. कै रा ल अ ब म—क्व गतस्त्वं विमोक्ष्यसे ।
६. अ—प्रधर्षणम् ।
७. भ च—धर्षणां चाश्र० ।
८. भ च—राघवौ मर्षयिष्यतः ।

११पू] हत्वा वा हरते शूरः शेते वा निहतः परैः ॥८॥[1]
१३ उ] नचिराद् रघुशार्दूलः स त्वां पाप हनिष्यति ॥९॥ [N
परीतकालो[2] हि रूपा यत् कर्म प्रतिपद्यते[3] ।
१८] विनाशायात्मनोऽधर्मं प्रतिपन्नोऽसि कर्मकृत्[4] ॥१०॥ [३१
पापानुबन्धो यस्य[5] स्यात् कर्मणः को नु कर्म तत्[6] ।
१९] कुर्वीत लोकाधिपतिः[7] स्वयंभूर्भगवानपि ॥११॥ [३२
अनुबन्धमजानन्तः कर्मणामविचक्षणाः । [२६पू
समित्रबान्धवजनाः[8] सामात्याः सपरिच्छदाः । [२५पू
N] क्षिप्रमेव विनश्यन्ति तथा त्वं विनशिष्यसि ॥१२॥ [२६ उ
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः[9] ॥
२१] निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥१३॥ [३३
स विनुन्नैः[10] नखैस्तीक्ष्णैः[11] विचचाल समन्ततः[12] ।
२३] अवरूढो वरारोहैर्यथा स्याद्दुष्टवारणः ॥१४॥ [३४

---

१. भ च—अतः परमाधिकः पाठः—
तस्कराचरितो मार्गो नैष वीरनिषेवितः ।
२. भ च—परीतकालपुरुषो ।
३. कै रा म—प्रतिपाद्यते ।
४. अत्र 'कर्म तत्' इति युज्यते पाठः ।
५. कै रा ल अ ब म—यस्यास्य ।
६. ल भ च—°कृत् ।
७. भ च—कुर्याल्लोकस्याधिपातिः ।
८. कै रा ब म—समन्त्रिबान्धवा जाताः ।
ल अ—समित्रबान्धवा जाताः ।
९. रा—रक्षकः ।
१०. कै रा ल अ ब म—वितुण्डो ।
११. कै रा ल अ ब म—°स्तस्य पृष्ठं ।
१२. कै रा ल अ ब म—नास्ति ।

स विदार्य नखैस्तीक्ष्णैस्तस्य पृष्ठं समन्ततः ।
२५] केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥१५॥ [३५
स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः ।
२६] अमर्षात् स्फुरितोष्ठश्च[2] स प्राकंपत राक्षसः ॥१६॥ [३६
तां परिष्वज्य वैदेहीं वामेनाङ्केन रावणः ।
२७] तलेनाथ जघानार्तो जटायुषममर्षणम् ॥१७॥ [३७
तस्य क्रुद्धो दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
२९] मुष्टिभ्यां चरणाभ्यां च जटायुषमपोथयत् ॥१८॥ [४०
तयोर्मुहूर्तं संग्रामो बभूवातुलवीर्ययोः ।
३०] राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥१९॥[3] [४१
तस्य व्यायच्छमानस्य राघवार्थे स रावणः[4] ।
३१] पक्षौ[5] तुण्डं च पादौ च[5] खड्गमुद्यम्य चिच्छिदे ॥२०॥ [४२
स छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
३२] निपपात ततो गृध्रो धरण्यामल्पजीवितः ॥२१॥ [४३

---

१. कै रा ल अ ब म—नास्ति ।

२. भ च—स्फुरितौष्ठश्च ।

३. भ च—अतः परमधिकः पाठः—

विददार खगेन्द्रोऽसौ राक्षसेन्द्रभुजान्खगः ।
हृदयं च नखैस्तीक्ष्णैर्दारयामास पक्षिराट् ॥
लोचनानि महावीर्यश्चञ्च्वाघातैर्विदारयन् ।
आयुधान्यपि चिक्षेप खगेन्द्रं सर्वतोदिशं ॥
गतास्त्राणि शरीराणि चकार च नखैः खगः ।
चरणैश्च नखैश्चैव वदनेन तु रावणम् ॥
जघान बहुधा क्रुद्धो जटायुर्विहगाधिपः ।

४. म—नास्ति ।

५. अ—पक्षतुण्डौ च पादं ।
म—पक्षं तुण्डं च पादौ ।

दृष्ट्वा निपतितं भूमौ क्षतजार्द्रं जटायुषम् ।
३३] अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥२२॥ [४४
तं नीलजीमूतनिकाशवर्णं
सुपाण्डुरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काऽधिपतिः पृथिव्यां
३४] जटायुषं शान्तमिवाग्निदावम् ॥२३॥ [४५
ततस्तु तं पत्त्ररथं महीतले
निपातितं रावणवेगनिर्जितम् ।
पुनः परिष्वज्य शशिप्रभानना
३५] रुरोद सीता जनकात्मजा तदा ॥२४॥ [४६

इत्यार्षे रामायणे आरण्यकाण्डे सीताप्रमाथे जटायुर्वधो नाम
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१. कै रा अ भ च—जाटयुवधो ।
२. कै रा ल ब म भ च—नास्ति ।

तमल्पजीवितं भूमौ क्षतजार्द्रं जटायुषम् ।
1] ददर्श गृध्राधिपतिं समीपे राघवाश्रमात् ॥१॥ [१
सीता ताराधिपमुखी रावणेन समीक्ष्य[1] तम् ।
4] गृध्रराजं विनिहतं विललाप सुदुःखिता ॥२॥ [२
निमित्त[2]लक्षणं ज्ञानं [3]ज्ञानिनां [4]स्वरदर्शनम् ।
5] अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥३॥ [४
न नूनं रामं[5] जानासि महद्व्यसनमात्मनः ।
10] तवैव[6] नूनं काकुत्स्थ अनर्थाः सह[7]चारिणः ॥४॥ [५
असकृद् राम रामेति तथा लक्ष्मण[8]मङ्गनाम् ।
11] आक्रन्दमानां सन्त्रस्तां किन्नरीं वा वनान्तरे ॥५॥ [N
तां क्लिश्य[9]मानाभरणां विवर्णवदनां पुनः ।
12] अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥६॥ [१२

---

१. कै रा ल अ ब म—समीक्षितम् ।
२. भ च—निमित्तं ।
३. भ च—शाकुनं ।
४. ल ब—सुरदर्शनम् ।
म—सुरदर्शिनम् ।
५. रा—नाम ।
६. कै रा ल अ ब म—तथैव ।
७. भ च—संगचारिणः ।
८. भ च—लक्ष्मणमङ्गना । आक्रन्दमाना संत्रस्ता किन्नरीव ।
कै रा—°किन्नरीं च ।
९. भ च—क्लिष्टमाल्याभरणां ।

पादपेषु च सज्जन्तीमालिङ्गन्तीं महाद्रुमान् ।
१३] मुञ्च मुञ्चेति बहुशः क्रोशन्तीं कुररीमिव[1] ॥७॥ [१३
एकां क्षामस्वरां दीनां रामेण रहितां तदा[2] ।
१४] रक्षःपतिस्तां[3] केशेषु जग्राहान्तकसन्निभः ॥८॥ [१४
प्रधर्षितायां वैदेह्यां बभूव सचराचरम् ।
१६] जगत् सर्वममर्यादं महता[4] तमसावृतम् ॥९॥ [१५
दृष्ट्वा सीतां परामर्शदीनां[5] दिव्येन चक्षुषा ।
१७] कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ॥१०॥[6] [१७
हृष्टाश्च परमप्रीता आसन् सर्वे महर्षयः ।
१८] दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ॥११॥ [१८
वदन्तीं राम रामेति रुदन्तीं लक्ष्मणेति च ।
१८] जगामाकाशमादाय रावणो राक्षसाधिपः ॥१२॥ [१९
स्रस्ताभरणसर्वाङ्गी पीतकौशेयवासिनी ।
१९] राजपुत्री रराजाथ विद्युत् सौदामिनी यथा ॥१३॥ [२०
उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ।
२०] अधिकं परिबभ्राज[7] गिरिर्दीप्त इवाग्निना ॥१४॥ [२१

---

१. रा—कुररीरिव ।

२. भ च—वने ।

३. भ च—जीवितान्ताय ।

४. भ च—अन्धेन ।

५. कै रा ल म—परामृष्य दीनां ।
अ—परामृष्टां दीनां ।

६. भ च—नास्ति ।

७. भ च—नीलमेघावृतोऽभ्राजत

तस्याः कुसुमगन्धीनि ताम्राणि सुरभीणि[1] च ।
२३] पद्मपत्राणि वैदेह्या अभ्यकीर्यन्त रावणम्[2] ॥१५॥ [२२
तस्यास्तद् विमलं वक्त्रमाकाशे रावणाङ्कगम् । [२४पू
२५] बभासे जलदं नीलं भित्त्वा चन्द्र इवोदितः ॥१६॥ [२५पू
सुललाटं सुकेशान्तं पद्मपत्राभमव्रणम्[3][4] । [२५उ
N] रुदितस्यापमृष्टास्रं चन्द्रवत् प्रियदर्शनम् ॥१७॥
सुनासं चारुताम्रौष्ठमाकाशे कनकप्रभम् । [२७
N] राक्षसेन्द्रसमाधूतं[5] तस्यास्तद् वदनं शुभम् ।
N] शुशुभे न विना रामं विननक्तमिवोडुपः[6] ॥१८॥ [२८
सा हेमवर्णा नीलाङ्गं[7] मैथिली राक्षसाधिपम्[8] ।
२६] शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता ॥१९॥ [२९
सा पद्मगौरी[9] नीलाङ्गे[10] रावणे जनकात्मजा ॥२०॥
२७] विद्युद् भ्रान्ता इवाम्भोदे शुशुभे तप्तभूषणा ॥२१॥ [३०
तस्या भूषणशब्देन वैदेह्या राक्षसाधिपः ।
२८] बभूव विमलो नीलः सघोष इव तोयदः ॥२२॥ [३२

---

१. ब—सुरभीनि ।
२. कै रा ल अ ब म—राघवम् ।
३. ल ब म—°भमव्रजं ।
४. भ च—अतः परमधिकः पाठः—
श्लक्ष्णतीक्ष्णसमैर्दन्तैः प्रभावद्भिरलङ्कृतम् ।
तस्यास्तत्सुनसं वक्त्रमाकाशे रावणाङ्कगम् ।
न रराज विना रामं विनालमिव पंकजम् ॥
५. रा ल अ ब म—°न्द्र समाभूतं ।
६ रा—°मिवोत्तमः । म—°मिवोत्तपः ।
७ ब—नास्ति ।
८ भ च—मेवाभे ।

उत्तमाङ्गाच्च्युता तस्याः पुष्पवृष्टिः समन्ततः । [३३पू
२९] समाश्रुत्य दशग्रीवं पुनरेव व्यशीर्यत ॥२३॥ [३४उ
३०पू] सा तु रावणवेगेन समाश्रुता समन्ततः । [३४पू
अभ्यवर्षत पुष्पाणां वृष्टिर्वैश्रवणानुजम् ॥२४॥ [३५पू
३१] तनुपल्लवरक्ता सा नीलाङ्गं राक्षसेश्वरम् । [३१पू
भूषणैर्विविधैः सा तु राक्षसेन्द्रमशोभयत् । [N
N] नक्षत्रमाला विमला मेरुं नगमिवोत्तमम् ॥२५॥ [३५उ
तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ।
३५] सघोषाण्यवकीर्यन्त उल्का भ्रष्टा इवाम्बरात् ॥२६॥ [३८
चरणान्नूपुरं भ्रष्टं वैदेह्याः पावकोपमम् ।
N] विद्युद्वलयसङ्काशं पपात मधुरस्वनम् ॥२७॥ [३६
अशोभयत वैदेही गजकक्षेव काञ्चनी ॥२८॥ [३१उ
N] तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
N] जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥२९॥ [३७
विशीर्णः पाण्डुरः श्रीमांस्तस्या हारः स्तनान्तरात् ।
३६] वैदेह्या न्यपतद् गां वै दिवो गङ्गेव भूतले ॥३०॥ [३९

---

१. ल ब—नागमिवोत्तमं ।
२. ल—उल्को भ्रष्टा इ० ।
म—उल्काभ्रष्टमिवा० ।
भ च—क्षीणास्तारा इवा० ।
३. कै रा ल भ च—पावकोत्तमम् ।
४. कै रा म भ च—विद्युद्वलय० ।
५. रा—गजकक्षीव काञ्चने ।
६. अत्र पूर्वार्धस्य भ्रंशः प्रतीयते । वस्तुतस्तु अयं पाठः 'तनुपल्लवरक्ता' इत्यादिना २५ तमस्य श्लोकस्य पूर्वार्धेन युज्येत ।
७. अ—दिवि ।
८. कै—भूतलम् ।

उत्पातवाताभिहता भ्रान्ता द्विजगणाकुलाः ।
३७] मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥३१॥ [४०
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः ।
३८] सखीमिव निरुच्छ्वासाः शोचन्तीव स्म मैथिलीम्॥ ३२॥[४१
समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः ।
३९] अभ्यधावंस्तदा रोषात् सीताच्छायाऽनुयायिनः।३३।[४२
जलप्रवाहैर्विरुतैः शृङ्गैरुच्छ्रितबाहवः ।
४०] सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥३४॥ [४३
ह्रियमाणां च वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
४१] प्रतिध्वस्तप्रभः श्रीमानासीत् पाण्डुरमण्डलः ॥३५॥ [४४
नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
४२] यत्र रामस्य वैदेहीं भार्यां हरति रावणः ॥३६॥ [४५पू
इति सर्वाणि भूतानि गगने पर्यदेवयन् । [४५उ
४३] दृष्ट्वा सीतां परामृष्टां रावणेन तपस्विनीम् ॥३७॥ [N
त्रस्तका दीनमुखका उन्मुखा मृगपोतकाः ।
N] उद्वीक्ष्योद्वीक्ष्य नयनैरस्रुपाताविलेक्षणाः ॥३८॥ [४६
संप्रवेपितगात्राश्च बभूवुर्वनदेवताः ।
N] विक्रोशन्तीं भृशं सीतां दृष्ट्वा दुःखं तथागताम् ॥३९॥[४७

---

१. ल ब—विधूताश्च ।

२. कै रा ल ब म—॰व्याघ्रमिव ।

३. भ च—अनुयान्ति ।

४. कै रा म भ च—॰वितते

५. म—परामृष्ट्वा ।

६. भ—संप्रवेशित॰।

सतीमाकुलकेशान्तां विप्रमृष्टशिरोरुहाम् ।
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥४०॥ [४९

ततस्तु सीता रुदती व्यचिन्तयद्
विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ
विवर्णवक्त्रा भयभारपीडिता ॥४१॥ [५०

इत्यार्षे रामायणे आरण्यकाण्डे सीताप्रमाथो नाम
अष्टपञ्चाशत्तमः सर्गः ॥५८॥

---

१. कै रा भ च—सीता० ।
२. भ—विप्रभ्रष्ट० ।
३. भ—नास्ति ।
च—आरण्यकाण्डे वाल्मीकीविरचिते ।
४. कै रा ल ब म भ च—नास्ति ।

[वं—५९]=[ ऊनषष्टितमः सर्गः ]=[दा—५९]

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
N] दुःखिता परमोद्विग्ना भये महति वर्तते ॥१॥ [१
वेपमाना वलत्कायाँ पूर्णचन्द्रनिभानना ।
N] व्यसनस्यात्मनो नान्तं पश्यन्ती वरवर्णिनी ॥२॥ [N
विहायसा नीयमाना रुदन्ती करुणं वनात् ।
N] अचिन्तयद् वरारोहा दुःखे महति वर्त(र्ति?)नी ॥३॥ [N
कथं ज्ञास्यति मे भर्ता लक्ष्मणो वा महाबलः ।
N] रावणस्य वशं प्राप्ता मिथिलाधिपतेः सुता ॥४॥ [N
N] रुरोद करुणं बाला विललापातिदुःखिता । [N
१ उ] रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ॥५॥
२पू] विक्रुश्य रावणं सीता ह्रियमाणेदमब्रवीत् । [२
N] यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः ॥६॥ [५पू
न व्यपत्रपसे नीच कर्मणानेन रावण ।
३] ज्ञात्वा विरहितां यो मां छलात् त्वं हर्तुमर्हसि ॥७॥ [३

---

१. अ—समुत्पतन्तं ।
२. ल म—वर्तती । वस्तुतस्तु मूले 'वर्तिनी' इति दाक्षिणात्यसम्मतः पाठो युज्येत ।
अ—वर्तिते ।
३. ब म—वलाच्छाया ।
४. कै रा ल ब म भ च—वर्तती ।
५. कै रा—वशे ।
६. कै रा ल ब म—विक्रुवं ।
७. ब म—ऽप्युद्यतस् ।
८. म—विपत्रपसे ।
९. कै रा म—हि रहितां ।
भ च—हि रहिते ।
१०. अ—बलात् ।
११. म—हन्तु० ।

त्वयैव नूनं दुष्टात्मन् भीरुणा पापकर्मणा ।
४] ममापवाहितो भर्ता मृगरूपेण मायया ॥८॥ [४
परमं खलु वीर्यं ते दृश्यते राक्षसाधिप ।
६] विश्राव्य नामधेयं स्वं युद्धे नास्मि जिता त्वया ॥९॥ [६
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
७] स्त्रियोऽपहरणं नीच रहिते च परस्य च ॥१०॥ [७
कथयिष्यन्ति[1] लोकेषु पुरुषाः[2] कर्म कुत्सितम् ।
८] सुनृशंसमधर्मिष्ठं तव शौटीरमानिनः[3] ॥११॥ [८
धिक् ते वीर्यं च सत्त्वं च यत्त्वया कथितं स्वयम् ।
९] कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम् ॥१२॥ [९
किं शक्यं कर्तुमेवेह यज्जवेनाभिधावसि ।
१०] मुहूर्[4]तमवतिष्ठस्व न जीवन् प्रतियास्यसि ॥१३॥ [१०
न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः ।
११] ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥१४॥ [११
न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथञ्चन ।
१२] वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥१५॥ [१२
मुञ्च मां रावणासाधोऽसाधो मुञ्चस्व रावण ।
N] बुद्ध्या सञ्चिन्त्य शनकैर्न[5] त्यक्ष्यसि यथा तथा ॥१६॥ [N

---

१. अ म—कथयिष्यति ।
२. अ म—पुरुषः ।
३. कै—सौधीर० ।
ब—शौटीर्य० ।
भ च—शौटीरमालिनः ।
४. कै अ ल ब म—मुहूर्तमेव० ।
भ च—मुहूर्तमिव ।
५. कै रा ल अ ब म—०कैर्निक्षप त्वं ।

मत्प्रधर्षणरुष्टो हि[1] सह भ्रात्रा पतिर्मम ।
N] विधास्यति विनाशं ते देशात् तेनोपमोक्ष्यसे[2] ॥१७॥ [१४
येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि[3] ।
१३] व्यवसायः स ते पाप भविष्यति निरर्थकः ॥१८॥ [१५
न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमम् ।
१५] उत्सहे शत्रुवशगा प्राणान् धारयितुं चिरम् ॥१९॥ [१६
१७पू] नूनं च नात्मनः श्रेयः संप्रेक्षितुं यथेच्छसि ॥२०॥
N] मृत्युकाले यथा मर्त्यो[4] विपरीतानि सेवते । [१७
मुमूर्षूणां हि मर्त्यानां यत् पथ्यं तन्न रोचते ॥२१॥
१८] पश्याम्येव च[5] कण्ठे त्वां कालपाशावसादितम् । [१८
यथा चातिभय[6]स्थाने न बिभेषि दशानन ॥२२॥
१९] व्यक्तं हिरण्मयान् हि त्वं[7] संपश्यसि[8] वने नगान्[9] । [१९
त्वं हि वैतरणीं मृत्यो रचितामूर्मिमालिनीम्[10] ।
२०] खड्गपत्रवनानद्धामिमां[11] द्रष्टाऽसि[12] राक्षस ॥२३॥ [२०

---

१. कै रा—° रुष्टोपि ।
ल—रुष्टोस्ति ।
२. कै रा ल ब म भ च—° मोक्ष्यसि ।
३. ल अ ब म—हंतुमि० ।
४. ब—मृत्यो ।
५. भ च—हि ।
६. कै—चाभिभय० ।
७. ल ब—त्वा ।
८. अ—संपश्यामि ।
९. कै रा भ च—वनेचरान्
१०. ब—रचिराशुगमा० । ब—रचिताशुग० ।
म—रचिताशुगशालिनां ।
११. अ म—°वनारुद्धा० ।
१२. अ—द्रक्ष्यसि ।

तप्तकाञ्चनपुष्पं च वैडूर्यप्रवरच्छदम् ।
२१] ईक्षसे शाल्मलिं तीक्ष्णैर्घोरैरायसकण्टकैः ॥२४॥ [२१
न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ।
२३] जीवितुं शक्यसे मूढ विषं पीत्वेव बालिशः ॥२५॥ [२२
बद्धस्त्वं कालपाशेन दुर्विदार्येण[1] रावण ।
२२] क्व गतो लप्स्यसे शर्म सपुत्रामात्यबान्धवः ॥२६॥ [२३
निमिषान्तर[2]मात्रेण विना भ्रात्रा महावने ।
२४] हतानि रक्षसां येन सहस्राणि चतुर्दश ॥२७॥ [२४
स कथं राघवो वीरः[3] सर्वास्त्रकुशलो बली ।
२५] न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् ॥२८॥ [२५
एतच्चान्यच्च संततं मैथिली रावणाङ्कगा ।
२६] भयशोकसमाविष्टा करुणं विललाप[5] ह ॥२९॥ [२६
तथा भृशं तां बहुरूपभाषिणीं
विलापपूर्वं करुणं च भामिनीम्[6] ।
जहार तां पापमति विवेष्टन्तीं[7]
२७] नृपात्मजामागतदुःखवेपथुम् ॥ ३०॥ [२७

इत्यार्षे रामायणे आरण्यकाण्डे सीताप्रमाथे सीताप्रलापो नाम
एकोनषष्टितमः सर्गः ॥५९॥

---

१. म—दुर्विधार्येण ।
भ च—दुर्निवार्येण ।
२. अ—निमेषान्तर० ।
३. कै रा ल अ ब म—वीर ।
४. भ च—पुरुषं ।
५. म—च विलाप ।
६. भ च—भामिनीम् ।
७. अ भ च—विचेष्टतीम् ।
८. भ च—नास्ति ।
९. कै रा ल ब म भ च—नास्ति

ह्रियमाणा तु वैदेही कञ्चिन्नाथमपश्यती ।
७] ददर्श गिरिशृङ्गस्थांस्तत्र[1] वानरपुङ्गवान् ॥१॥ [१
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
६] उत्तरीयं वरारोहा शुभान्याभरणानि च ॥२॥ [२पू
७पू] मुमोच मां हि[2] रामाय शंसेयुरिति मैथिली । [२उ
N] एतां बुद्धिं तदा[3] कृत्वा सीता करतलोदरी[4] ॥३॥ [N
संभ्रमाच्च दशग्रीवो वैदेहीं नोपलब्धवान् । [३उ
१३] भूषणानि विधुन्वन्ती[5] तेषां मध्ये वनौकसाम् ॥४॥ [N
ततस्तेऽपि[6] विशालाक्षीं नेत्रैरनिमिषैरपि[7] ।
१०] विवे(चे ?)ष्टन्तीं तदा सीतां ददृशुर्वानरर्षभाः ॥५॥ [४
स तु पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ।
१५] बाहुना रुदतीं[8] गृह्य मैथिलीं राक्षसेश्वरः ॥६॥ [५
जहार तां सुसंहृष्टो रूपिणीं मृत्युमात्मनः ।
N] उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥७॥[9] [६

---

१. भ च—°शृङ्गस्थान्पञ्च ।
२. रा म अ भ च—सा ।
३. रा—ततः ।
४. कै रा ल अ म—करतलोदरे ।
५. ल अ ब म—विनिघ्नन्ती ।
६. भ च—पिङ्गाक्षास्ते ।
७. कै रा ल अ ब म—पद्भ्या० ।
अयं ह्यसङ्गतः पाठः ।
८. कै रा—ददतीं ।
९. भ च—उत्संगेनेव भुजगं तीक्ष्णदंष्ट्रं महाविषं
ल ब म—उत्संगे भुजगीं ना ती० ।

वनानि सरितः शैलान् सरांसि च विहायसा ।
१६] पश्यंस्तूर्णमतीयाय चापाच्छर इव च्युतः ॥८॥ [७
मीनन[1]क्राकुलं तं तु वरुणालयमक्षयम् ।
N] सरितः समतिक्रम्य समतीयाय सागरम् ॥९॥ [८
संभ्रमात् परिवृ[2]त्तोर्मिः क्रुद्धमीनमहोरगः ।
१८] वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥१०॥ [९
अन्तरिक्षगता वाचः ससृजुर्दारुणास्तदा ।
१७] एतद[3]न्तं दशग्रीव इति सिद्धास्तदाब्रुवन् ॥११॥ [१०
स तु सीतां विचे[4]ष्टन्तीमङ्केनादाय रावणः ।
२०] प्रावेशयत् पुरीं लङ्कां वि[5]शङ्को मृत्युमात्मनः ॥१२॥ [११
सोऽभिगम्य पुरीं दिव्यां प्रविभक्तमहापथाम् । [१२पू
२१] निदध्यौ रावणः सीतां मयो मायामिवा[6]सुरीम् ।१३। [१३उ
२२पू] अथाब्रवीद् दशग्रीवः पिशाचीर्घोरदर्शनाः ।
२२उ] यथा मां[7] मत्स्त्रियं तद्वत् सीतां पश्यत संमताम् ॥१४॥ [१४
२४उ] मणिमुक्ताप्रवालानि वस्त्राण्य[8]जिनचन्दनम् ।
यद् यदिच्छेत् तत्तदस्यै देयम[9]च्छन्दतोऽपि वा[10] ।१५।[१५

१. भ च—तिमिनक्रा० ।
२. अ—वारिवृत्तो० ।
३. भ च—एतदन्तो ।
४. कै रा ल अ ब म—विवेष्टन्ती० ।
५. भ च—रूपिणीं ।
६. अ—०मिवावरीं ।
७. कै—मे न पुमांस्त्री वा ।
रा—मां स्त्री मां स्त्री वा ।
८. रा—वस्त्राणि जिनवंदनं ।
९. अ च—देयं मच्छन्द० ।
१०. भ च—च ।

२५] यच्च वक्ष्यति वैदेही वचनं किञ्चिदप्रियम् ।
२६उ] अज्ञानाद् यदि वा ज्ञानात्तत् सोढव्यं निरन्तरम् ।१६। [१६
२५उ] राक्षसीश्च तथोक्त्वा स राक्षसेन्द्रः प्रतापवान् ।
२७] निर्गत्यान्तःपुरात् तस्मात् किं कृत्यमिति चिन्तयन् ।[3]
ददर्शाष्टौ महावीर्यान् राक्षसान् पिशिताशनान् ॥१७॥ [१८
२८] स तान् दृष्ट्वा महावीर्यो वरदानेन[4][5] मोहितः ।
उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥१८॥ [१९
२९] नानाप्रहरणोपेताः क्षिप्रं गच्छत[6] सत्वराः ।
जनस्थानं हतस्थानं भूतपूर्वं खरालयम्[7] ॥१९॥ [२०
३०] तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ।
पौरुषं बलमाश्रित्य त्रासमृत्सृज्य दूरतः ॥२०॥ [२१
३१] बलं च मे बहुरूपं[8] जनस्थाने निवेशितम् ।
३२पू] सदूषणखरं[9] युद्धे हतं तद्रामसायकैः ॥२१॥ [२२

---

१. कै भ च—त्तत्रासां जीवितं प्रियम् ।

रा—त्तेनासां जीविताप्रियम् ।

२. भ च—निर्गम्या० ।

३. भ च—अतः परमधिकः पाठः—

स चिन्तयित्वा सुचिरं रावणो राक्षसेश्वरः ।

४. कै रा ल अ व म—नास्ति ।

५. रा—वरान्मानेन ।

६. भ च—गच्छन्तु ।

७. अ—वरालयम् ।

८. भ च—बहुश्रुतं ।

९. कै—सदूषणं खरं ।

N] तस्य क्रोधान्महामर्षो वीर्यं[1] च समवर्धत ।
वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥२२॥ [२३
३३] निर्यातयितुमिच्छामि तस्य वैरमहं रिपोः[2] ।
३४पू] न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥२३॥[२४
तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।
३५] रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥२४॥ [२५
N] मया हतस्य समरे चीरवल्कलधारिणः ।
N] वज्राङ्गा[3] भक्षयिष्यन्ति तस्याङ्गानि दुरात्मनः ॥२५॥[N
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रितौ[4] ।
३६] प्रवृत्तिरधिगन्तव्या किं करोमी(?ती)ति तत्त्वतः ।२६।[२६
अप्रमादश्च[5] कर्तव्यः सर्वैरेवं[6] निशाचरैः ।
३७] कर्तव्यश्च भवेद् यत्नो राघवस्य वधं प्रति ॥२७॥ [२७
युष्माकं हि बलज्ञो[7]ऽहं[8] बहुशो रणमूर्धनि ।
३८] अतोऽपि वै जनस्थाने मया वै विनियोजिताः॥२८॥ [२८
ततः प्रियं वाक्यमवेत्य राक्षसा
महार्थवन्तं प्रणिपत्य[9] रावणं[10] ।

१. भ—रोष च । च—रोषः च ।
२. ल अ ब म—वैरं महारिपोः ।
३. अ—वजाङ्गं ।
४. भ च—राममाश्रितैः ।
५. कै रा ल अ ब म—अप्रमादेश्च कर्तव्यं ।
६. कै—सैवैरेवं ।
७. कै—च ।
८. भ च—मदज्ञोऽहं ।
९. कै रा ल अ ब म—प्रतिपद्य ।
१०. कै रा ल ब अ—रावणात् ।

विहाय लङ्कां सहसा प्रतस्थिरे
३९] यतो जनस्थानमलक्ष्य[2]दर्शनाः ॥२९॥ [२९
ततस्तु सीतां प्रतिलभ्य रावणः
सुसंप्रहृष्टः परिगृह्य[3] मैथिलीम् ।
प्रसह्य रामेण च वैरमुत्तमं
N] मुदान्वितो राक्षसराड् बभूव ह ॥३०॥ [३०

इत्यार्षे रामायणे आरण्य[4]काण्डे सीताप्रमाथो नाम
षष्टितमः[5] सर्गः ॥६०॥

---

१. भ च—सहिताः ।
२. कै रा ल श्र ब म—°नमलक्ष° ।
३. कै रा—प्रतिगृह्य ।
ल श्र ब म—प्रतिलभ्य ।
४. भ च—नास्ति ।
५. कै रा ल ब म भ च—नास्ति

सन्दिश्य राक्षसान् घोरान् रावणोऽष्टौ[1] महाबलान् ।
१] आत्मनो बुद्धिदौर्बल्यात् कृतं कार्यममन्यत ॥१॥ [१
स[2] चिन्तयानो वैदेहीं कामबाणबलार्दितः ।
२] प्रावेशयद्[3] गृहं रम्यं सीतां शोकपरायणाम् ॥२॥ [२
अश्रु[4]पूर्णमुखीं दीनां मलिनामपि शोभिताम् ।
N] वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥३॥[5] [४
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ।
४ अधोमुखीं तु तां दीनां मलिनामपि शोभिताम् ॥४॥[5] [५
चन्द्रलेखामिवाम्भोदै[6]राच्छन्नामम्बरे निशि ।
N] सद्यो वनादुपानीतां त्रस्तां वत्सतरीमिव ॥५॥ [N
सर्वा दिशश्च वीक्षन्तीम[7]भ्येत्य स[7] निशाचरः । [५उ
N] भृशं शोकसमाविष्टां बलवान् राक्षसेश्वरः ।
विवशां दर्शयामास गृहं देवगृहोपमम् ॥६॥ [६
५] हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् ।
नानापक्षि[8]गणैर्जुष्टं नानारत्नसमाकुलम् ॥७॥ [७

---

१. रा—रावणोष्ट० ।
२. कै म भ च—सञ्चिन्तयानो ।
३. ब—प्रावेशयं ।
४. रा अ ल ब म—अस्त्रु० ।
५. रा—नास्ति ।
६. म—° वाम्भोधै० ।
७. कै म—वीक्ष्यन्तीम० ।
अ—वीक्षन्तीं समभ्येत्य नि० ।
८. रा—°पणिगणै० ।

६] काञ्चनै राजतैश्चारु दान्तैश्च स्फाटिकैस्तथा ।
७पू] वज्रवैडूर्यगर्भैश्च स्तम्भैर्दृष्टिमनोहरैः ॥८॥ [८
N] दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम् ।
१२पू] चित्रकाञ्चनसोपानमारुरोह तया सह ॥९॥ [९
दान्ताश्च राजताश्चैव गवाक्षाः प्रियदर्शनाः ।
१३] हेमजालवृताश्चासंस्तत्र प्रासादपङ्क्तयः ॥१०॥ [१०
सुधामणिविचित्राणि भूमिवन्ध्यानि सर्वशः ।
१५] दशग्रीवः स्ववेश्मानि तस्या दर्शयते तदा ॥११॥ [११
१७उ] दीर्घिकाः पुष्करैः कीर्णा नानावृक्षसमावृताः ।
१८पू] रावणो दर्शयामास सीतां शोकपरायणाम् ॥१२॥ [१२
दर्शयित्वा तु वैदेह्याः कृत्स्नं तद् भवनोत्तमम् ।
२०] उवाच वाक्यं पापात्मा रावणो जनकात्मजाम् ॥१३॥ [१३
२२पू] दश राक्षसकोट्यश्च द्वात्रिंशच्च महौजसाम् ।
येषां प्रभुरहं सीते शूराणां भीमकर्मणाम् ॥१४॥ [१४
N] तेषामपि च शूराणां सर्वेषामनिवर्तिनाम् । [N

---

१. कै म—राजतश्चारु ।
ब ल—राजदन्तैश्च ।
रा अ—राजतैश्चारु ।
भ च—० श्चारु० ।
२. भ च—० दन्तैश्च ।
३. रा म—० वृताश्चाहं० ।
४. ल म—सुवेश्मानि ।
५. कै—० क्षसमागताः ।
६. ल—राजकात्म० ।
७. कै रा अ भ च—०कोट्यो मे ।
८. अ—घोरकर्मणां ।

N] सहस्रमेकमेकस्य समीयुर्ये पुरःसराः ॥१९॥ [१९उ

एतन्मे सुमहत् सैन्यमक्षयं रिपुनाशनम् । [N

२६] वर्जयित्वा जरावृद्धान् बालांश्च रजनीचरान् ॥१६॥ [१९पू

तदिदं राज्यतन्त्रं हि त्वयि संप्रति तिष्ठति ।

२८] जीवितं च[1] विशालाक्षि त्वं मे प्राणैर्गरीयसी ॥१७॥ [१६

बहूनां स्त्रीसहस्राणां[2] मम योऽयं[3] परिग्रहः ।

२९] तस्य त्वमीश्वरी सीते मम भार्या[4] भव प्रिये ॥१८॥ [१७

साधु किं तेऽन्यया[4] बुद्ध्या रोचयस्व वचो[5] मम ।

३०] भद्रे[6] कामाभितप्तस्य प्रसादं कुरु याचतः ॥१९॥ [१८

परिक्षिप्ता समुद्रेण लङ्केयं शतयोजना ।

३१] नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥२०॥ [१९

न देवेषु न यक्षेषु न गन्धर्वमहर्षिषु ।

३२] पश्यामि तमहं भद्रे यो मे वीर्ये समो भवेत् ॥२१॥ [२०

राज्यभ्रष्टेन दीनेन तापसेन गतायुषा ।

३३] किं करिष्यसि रामेण मानुषेण पदातिना ॥२२॥ [२१

भजस्व सीते मां हि त्वं भर्तारं सहसा प्रिये ।

३४] यौवनं ह्यध्रुवं भीरु रमस्वेह मया सह ॥२३॥ [२२

---

१. ब—हि ।

२. अ—स्त्रीसहस्राणि ।

३. अ—यूयं ।

४. अ—ते तया । ब—मेन्यया ।

५. ल अ ब म—मनो ।

६. अ—भद्रं ।

७. म—हि ध्रुवं । अपपाठः ।

८. अ ब म—नाम ।

९. अ ब म—तद्भजस्व ।

दर्शने मा कृथा[1] बुद्धिं राघवस्य वरानने ।
३५] कस्य शक्तिरिहागन्तुमपि सीते मनोरथैः ॥२४॥ [२३
न शक्यं वायुमाकाशं पाशैर्बद्धुं[2] मनोजवम् ।[3]
३६] दीप्यमानस्य चाप्यग्नेर्[4] ग्रहीतुं विमलां शिखाम् ॥२५॥ [२४
त्रयाणामपि लोकानां न तं[5] पश्यामि शोभने ।
३७] विक्रमेण नयेद् यस्त्वां मद्बाहुबलरक्षिताम् ॥२६॥ [२५
लङ्कायाः सुमहद् राज्यमिदं त्वमनुपालय । [२६ पू
३८] अभिषेकोदकक्लिन्ना हृष्टा[6] रमं मया सह ॥२७॥ [२७
दुष्कृतं यत् पुरा कर्म वनवासेन तद् गतम् ।
३९] यच्च ते सुकृतं कर्म तस्येदं[7] फलमाप्नुहि ॥२८॥ [२८
इह सर्वाणि माल्यानि दिव्य[8]गन्धानि मैथिलि ।
४०] भूषणानि च मुख्यानि तानि सेव मया सह ॥२९॥ [२९
पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ।
४१] विमानं सूर्यसङ्काशं तरसा निर्जितं मया ॥३०॥ [३०
विशालं रमणीयं च तद् विमानं मनोरमम् ।
४२] तत्र सीते मया सार्धं विहरस्व यथासुखम् ॥३१॥ [३१

---

१. ल—कृषा ।

२. ल ब म—बद्धुं पाशैर् ।

३. ल ब म भ च—
न शक्यो वायुराकाशे पाशैर्बद्धुं मनोजवं ।

४. ल ब म—दावाग्ने० ।

५. म—शतं ।

६. ल ब म—हृष्टरोमा ।

७. के रा अ—सुकृतं ।

८. ब—दिवि० ।

अमलं पद्मसङ्काशं वदनं चारुदर्शनम् ।
४३] शोकार्तं तव रंभोरु न भ्राजति वरानने ॥३२॥ [३२
अलं श्रमेण ते भीरु धर्मलोपकृतेन[1] वै ।
४६] आर्योऽयं देवि निष्यन्दो[2] यन्मामभिगमिष्यसि ।३३। [३५
एतौ पादौ मया स्निग्धौ शिरोभिः पीडितौ तव ।
४७] प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते ॥३४॥ [३६
नेमाः शून्ये मया वाचः शुष्यमाणेन भाषिताः ।
४८] न चापि रावणः काञ्चिन्मूर्ध्ना स्त्रीं प्रणमेदिह ॥३५॥ [३७
एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ।
४९] कृतान्तवशमापन्नो ममेयमित्यमन्यत[3] ॥३६॥ [३८
N] सान्त्वयिष्यंश्च तां सीतां रावणो विरराम ह ॥३७॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे सीताऽनुनयो नाम

एकषष्टितमः सर्गः ॥६१॥

---

१. भ च—धर्मरूप० ।

२. ब ल म—संसर्गो ।

३. रा अ ल म—०ति मन्यतः ।

४. भ च—नास्ति ।

५. भ च—सीताप्रमाथो ।

६. कै रा ल ब म भ च—नास्ति ।

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता[1] ।
१] तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १ ॥ [१
राजा दशरथो नाम धर्मसेतुरिवापरः[2] ।
२] सत्यसंन्धः[3] परिज्ञातो[4] यस्य पुत्रः स राघवः ॥२॥ [२
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
३] दीर्घबाहुर्विशालाक्षो दैवतं सत्पतिर्मम[5] ॥३॥ [३
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो[6] महाबलः ।
४] लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान् हरिष्यति ॥४॥ [४
५ पू] प्रत्यक्षं यद्यहं[7] तस्य त्वया स्यां[8] धर्षिता बलात् ।
N] शयिष्ठास्त्वं जनस्थाने यथा संख्ये हतः[9] खरः ॥५॥ [५
यानि ते परमास्त्राणि घोररूपाणि सन्ति वै ।
६] राघवे निर्विषाणि स्युः सुपर्णे पन्नगा यथा ॥६॥ [६
तेन प्रतिविमुक्तास्ते शराः काञ्चनभूषणाः ।
७] शरीरं विदलिष्यन्ति गङ्गाकूलमिवोर्मयः ॥७॥ [७

---

१. कै रा ल अ ब म—°कर्षिता ।
२. अ—°तुदयापरः ।
३. रा—सत्यबन्धः । अ म—सत्यबद्धः ।
४. ल ब—प्रतिज्ञातो ।
५. भ च—स पतिर्मम ।
६. अ—°स्कन्दो ।
७. ल ब—यदहं ।
८. कै रा ल अ ब म—वै ।
९. कै—ततः सं० । रा अ—हतः संख्ये यथा ।

८ पू ] असुरैर्वा सुरैर्वा[1] त्वं पन्नगैर्वापि राक्षस । [८ पू
N] गुप्तः संख्ये च दुर्वृत्त सर्वैश्च ज्ञातिभि[2]र्वृतः ॥८॥ [N
८ उ ] अवश्यं समरे पापं[3] न जीवंस्तस्य मोक्ष्यसे[4] । [८ उ
स ते जीवावशेषस्य[5] राघवोऽन्तकरो वली[6] ॥९॥
१० ] पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥१०॥ [९
यदि पश्येत् स रामस्त्वां रोषदीप्तेन चक्षुषा ।
११ ] रक्षस्तदैव निर्दग्धो गच्छेः[7] सद्यः पराभवम् ॥११॥ [१०
यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत[8] वा ।
१२ ] सागरं शोषयेद् वाऽपि सं तं[9] चेत् कोपयेदिह ॥१२॥ [११
N ] गतायुस्त्वं गत[10]श्रीको गतसत्त्वो गतेन्द्रियः ।
१५पू ] लङ्का वैधव्यसंयुक्ता त्वत्कृते च भविष्यति ॥१३॥ [१२
१६उ ] न ते पापमिदं कर्म सुखोदर्कं भविष्यति ।
याऽहं नीता विना भावं पतिपार्श्वाद् वनात्[11] त्वया ।१४। [१३

---

१. रा ल ब—ऽपि ।
२. त ब—भ्रातृभिर्वृतः ।
३. ल ब—तात
४. ल ब—मोक्ष्यसि ।
५. भ च—जीवितशेषस्य ।
६. ल ब—ऽन्तं करोति वै ।
रा अ म—ऽन्तः करो बलिं ।
७. कै रा ल अ ब म—गच्छेत् ।
८. कै रा अ म—पातयेद् भूमौ नभसो नाश० ।
९. कै—स सीतां । अ—स सत्यं ।
म—समतां ।
१०. ल ब—गतशोको ।
११. अ—वने । भ च—विना ।

१७] पतिर्दैवतसंयुक्तो महासत्त्वो महाबलः ।
निर्भयो वीर्यमाश्रित्य वसत्येव[1] स दण्डके । [१४
१८ ] लक्ष्मणेन सह भ्रात्रा स ते प्राणान् हरिष्यति ॥१५॥ [N
१९उ] स ते दर्पं बलं वीर्यमुत्साहं च तथाविधम् ।
अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥१६॥[2] [१५
२०] यदा विनाशो देशानां[3] दृश्यते कालनिर्मितः ।
N] तदानार्याः प्रवर्तन्ते[4] नराः कालवशं गताः ॥१७॥ [१६
स[5] प्रविश्य च ते कालः प्राप्तोऽयं राक्षसाधम ।
N] आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥१८॥ [१७
२३उ] न शक्या यज्ञमध्यस्था वेदी स्रुग्भाण्डमण्डिता ।
२४उ] द्विजातिमन्त्रसंयुक्ता चण्डालेनोपसर्पितुम् ॥१९॥ [१८
इदं शरीरं निःशङ्कं[6] वध वा पाटयस्व वा । [२१पू
२५] वर्तेऽहं विषये तेऽद्य मयि क्रोधो विधीयताम् ॥२०॥ [N

---

१. ल व—वसन्नेव ।

२. भ च—अतः परमधिकः पाठः—

सबलं सपरिवारं दहेयं रोषवह्निना ।
त्वामहं यदि चेद्रामो न स्यादधिपतिर्मम ।
मम शापाग्निना दग्धं कः स्याज्जीवयितुं क्षमः ॥

३. भ च—दैवेन ।

४. भ च—प्रवर्धन्ते ।

५. भ—मां प्रधृष्य वने ।
च—मां प्रधर्ष्य वने ।
अ—स प्रविश्येतपः ।
म—स प्रविश्येतवः ।

६. भ च—निःसंज्ञं ।

नेदं शरीरं रक्ष्यं मे जीवितं वाऽपि रावण। [२१उ
२६] न हि शक्ष्याम्युपक्रोशं पृथिव्यामहमात्मना(नः?)॥२१॥[२२
एवमुक्त्वा तु वैदेही क्रोधात् ततं परुषं वचः।
२७] रावणं राक्षसश्रेष्ठं ततो नोवाच किञ्चन ॥२२॥ [२३
प्रत्युवाच ततः सीतां स भयं दर्शयन् वचः। [२४उ
N] शृणु मैथिलि मद्वाक्यं मासद्वादशकेन वै ॥२३॥ [२५पू
कालेनान्येन नाभ्येपि यदि मां चारुहासिनी।
N] ततस्त्वां सत्वराः सर्वे तदा छेत्स्यन्ति खण्डशः ॥२४॥ [२५उ
N] स राक्षसान् समीपस्थान् क्रूरकर्मा निशाचरः। [N
२८] रावणः परमक्रोधादिदं वचनमब्रवीत् ॥२५॥ [२६उ
शीघ्रमानयत क्रुद्धा राक्षसीर्घोरदर्शनाः।
२९] अस्या दर्पं विनेष्यन्ति मांसशोणितभोजनाः ॥२६॥ [२७
वचनादेव तस्यैत्यं सुघोरो राक्षसीगणः।
३०] अञ्जलिं बन्धयित्वा तु मैथिलीं पर्यवारयत् ॥२७॥ [२८

---

१. कै रा अ म—शक्याम्यहं क्रोशं।
ल ब—°म्यहं क्रोशं।
भ च - रक्ष्याम्युप क्रोशं।
२. कै रा ल अ ब म—°व्यामिह चात्मसमनः।
३. भ च—तं।
४. कै ल ब भ च—कालेनानेन।
५. रा—सर्वेशः।
६. कै अ म—तस्यैष।
रा—तस्यैतत्।
७. कै रा म भ च—प्रांजलिर्।
अ—प्रांजलिं।
८. म—पर्यवारयन्।

३१पू] ताश्चोवाच स दुष्टात्मा राक्षसी राक्षसाधिपः ।
N] संरब्धैश्चरणोत्क्षेपैर्दारयन्निव मेदिनीम् ॥२८॥ [२९
३८पू] अशोकवनिकामेव नयित्वा मैथिलीमिमाम् ।
३३उ] तत्रेयं रक्ष्यतां गुप्ता युष्माभिः परिवारिता ॥२९॥ [३०
३३पू] तर्थां चँ तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् ।
आनयध्वं मम वशे वन्यां गजवधूमिव ॥३०॥ [३१
३४] इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ।
अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य ताम् ॥३१॥ [३२
३५] सर्वकामफलैर्वृक्षैर्नानापुष्पैः समायुताम् । [३३पू
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ॥३२॥
३७] राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा । [३४

---

१. भ च—प्रांजलीश्चर० ।

२. अ—°मारयन्निव ।

३. अ—रक्षिता ।

४. अ—तथैनां ।

५. ल ब—जनकात्मजां ।

६. भ च—समवृतां ।

७. भ च—अतः परमधिकः पाठः—

सर्वकालं मदैश्चैव द्विजैः समुपनादितां ।

८. रा—च ।

न विन्दते तत्र तु शर्म मैथिली
विरूपनेत्राभिरतीव वीक्षिता[1] ।
पतिं स्मरन्ती दयितं च देवरं
३८] विचेतना क्षुद्भयशोकपीडिता ॥३३॥ [३९

इत्यार्षे रामायणे आरण्यकाण्डे[2] सीतातर्जनं नाम
द्विषष्टितमः[3] सर्गः ॥६२॥

---

१. ख म—रूक्षिता ।
भ च—रक्षिता ।
२. भ ख—नास्ति ।
३. कै रा ल ख म भ च—नास्ति ।

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः ।
१] तदा प्रोवाच देवेन्द्रं परितुष्टं शतक्रतुम् ॥१॥ [१
त्रैलोक्यस्य हितार्थायं[1] रक्षसामहिताय च ।
२] लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥२॥ [२
पतिव्रता महाभागा नित्यं चैव सुखैधिता[2] ।
३] अपश्यन्ती च भर्तारं पश्यन्ती राक्षसं जनम्[3] ॥३॥ [३
राक्षसीभिः परिवृता[4] भर्तृदर्शनलालसा[5] ।
४] निविष्टा[6] हि पुरीं लङ्कां तीरे नदनदीपतेः ॥४॥ [४
कथं ज्ञास्यति तां रामस्तत्रस्थां तामनिन्दिताम् ।
५] दुःखं[7] सञ्चिन्तयन्ती सा बहुशः परिदुर्बला[8] ॥५॥ [५
प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्य[9]संशयम् ।
६] स भूयः संशयो जातः सीतायाः प्राणसंक्षये[10] ॥६॥ [६

---

१. ल—हितार्थस्य ।
२. अ भ च—सुखेधिता ।
३. अ—राक्षसीजनं ।
४. ल ब—परिवृतां ।
५. ल ब—○ लालसां ।
६. कै रा ल अ ब म—निविष्टां पुरि लंकायां ।
७. कै रा—दुःखं सा चिन्तयन्ती ।
अ म—तद्दुःखं सा चिन्तयन्ती ।
८. अ—○ दुर्लभा ।
९. ल ब—○ति संकटे ।
१०. कै—○संशयः ।
रा अ ल ब म—○ संशये ।

स त्वं शीघ्रमितो गत्वा सीतां पश्य शुभाननाम् ।
७] प्रविश्य नगरीं लङ्कां[1] प्रयच्छ हविरुत्तमम् ॥७॥ [७
एवमुक्तोऽथ देवेन्द्रः पुरीं रावणपालिताम् ।
८] आगच्छन्निद्रया सार्धं भगवान् पाकशासनः ॥८॥ [८
निद्रां चोवाच गच्छ त्वं राक्षसान्[2] संप्रमोहय ।
९] सा तथोक्ता मघवता[3] देवी परमहर्षिता ॥९॥ [९पू
देवकार्यार्थसिद्ध्यर्थं प्रामोहयत राक्षसान् । [९उ
१०] एतस्मिन्नन्तरे देवः सहस्राक्षः शचीपतिः ॥१०॥
आससाद वनस्थां तां वचनं चेदमब्रवीत् । [१०
११] देवराजोऽस्मि भद्रं ते इह प्राप्तः शुचिस्मिते ॥११॥ [११पू
राघवस्य सह भ्रात्रा कुशलं जनकात्मजे ।
१२] आगमिष्यति काकुत्स्थो लङ्कां रावणपालिताम् ॥१२॥[4] [N
अहं त्वत्कार्यसिद्ध्यर्थं[5] राघवस्य महात्मनः । [११उ
१३] साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥१३॥[6]
मत्प्रसादात् समुद्रं स तरिष्यति बलैः सह । [१२
१४] मयैवेह[7] च राक्षस्यो मायया[8] मोहिताः शुभे ॥१४॥

१. ल ब म—रम्यां ।
२. भ—राक्षसानां प्रमो० ।
३. अ—भगवता ।
४. कै रा अ म—नास्ति ।
५. भ च—त्वां कार्य० ।
६. कै रा अ म—नास्ति ।
७. म अ—माययैव ।
८. अ म—मयैवेह हताः ।
कै रा ल अ ब म—मायया निहताः ।

तस्मादन्नमिदं सीते हविष्यान्नमहं[1] स्वयम् । [१३
N] यत्नात् संगृह्य वैदेहि आगतः सह निद्रया ॥१५॥ [N
एतदत्स्यसि[2] मद्धस्तान्न त्वां बाधिष्यते शुभे । [१४उ
१९] क्षुधा तृषा[3] च रंभोरु वर्षाणामयुतैरपि ॥१६॥[4] [१५पू
एवं[5] वदन्तं देवेन्द्रमुवाच परिशङ्किता ॥१७॥ [१५उ
२०] कथं जानामि देवेन्द्रं त्वामिहस्थं शचीपतिम् ।
यानि[6] दृष्टानि लिङ्गानि रामलक्ष्मण[7]सन्निधौ ॥१८॥ [१६
२१] तानि दर्शय देवेन्द्र यदि त्वं देवराट् स्वयम् ।
सीताया वचनं श्रुत्वा तथा चक्रे[8] शचीपतिः ॥१९॥ [१७
२२] पृथिवीं नास्पृशत् पद्भ्यामनिमेषेक्षणानि च ।
N] अरजोऽम्बरधारी च ह्यम्लानकुसुमस्तथा ॥२०॥ [१८
२३पू] तं ज्ञात्वा[9] लक्षणैः सीता वासवं[10] परिहर्षिता ।
उवाच वाक्यं रुदती भगवन्[11] राघवः पतिः । [१९

---

१. कै रा ल अ ब म—°न्नमिदं ।
२. अ—°त्स्यति ।
३. ल ब म—तृष्णा
४. कै रा ल अ ब म—अतः परमधिकः पाठः—
न यास्यति चान्नेन हविषा त्वयि मैथिलि ।
५. कै रा—एवमुक्तवन्तं ।
भ च—एवमुक्त्वा तु । अ—एवोक्तवन्तं ।
६. कै रा ल अ ब म—देहि लिंगानि मे यानि ।
७. कै रा—रामो लक्ष्मण० ।
८. अ—शक्रः । म—शक्री ।
९. ल ब—तज्ज्ञात्वा ।
१०. ल ब—रावणो ।
११. अ ल—भगवान् ।

N] सह भ्रात्रा महाबाहुर्दिष्ट्या मे श्रु[1]तिमागतः ॥२१॥

३३उ] यथा मे[2] श्वशुरो राजा यथा मे मिथिलाधिपः । [२०

२४पू] तथा धर्मेण[3] शक्र त्वं[3] सनाथो मे पतिस्त्वया ॥२२॥

तवाज्ञया च देवेन्द्र पयोभूतमिदं हविः ।

२५] अशिष्यामि त्वया दत्तं रघू[4]णां कुलव[5]र्धनम् ॥२३॥ [२१

इन्द्रहस्ताद् गृहीत्वा तत् पायसं सा शुचिस्मिता ।

२६उ] न्यवेदयत भ[6]र्त्रे सा लक्ष्मणाय च मैथिली ॥२४॥ [२२

यदि जीवति मे भर्त्ता सह भ्रात्रा महाबलः ।

२७] इदमस्तु तयोर्भक्त्या[7] तदश्नात् पायसं स्वयम् ॥२५॥ [२३

इत्येवं[8] तत् प्राश्य हविर्वरानना

२८पू] जहौ क्षु[9]धां वर्षसमु[10]द्भवां च तांम् ।

इन्द्राद् विदित्वैव च[11] सा प्रवृत्तिं[12]

२९पू] काकुत्स्थयोः प्रीतमना बभूव[13] ॥२६॥ [२४

---

१. कै रा भ—स्तुतिमा० ।

२. भ च—च ।

३. भ—त्वामद्य पश्यामि ।

४. रा म ल—रघूनां ।

५. ल ब—°वर्धन ।

६. ब—भर्त्रे ? ।

७. कै रा ल अ ब म—तयोरुक्त्वा ।

८. कै रा अ म भ च—इतीव ।

९. कै रा ल अ ब म—क्षुधं ।

१०. ल ब—°द्भवं च तं ।

११. कै रा अ—तु ।

१२. भ च—इन्द्रात्प्रवृत्तिमुपलभ्य जानकी ।

१३. भ च—बभूव सा ।

स चापि शक्रस्त्रिदिवालयं तदा
२९ड] प्रीतो ययौ राघवकार्यसिद्धये ।
आमन्त्र्य सीतां स[1] ततो[2] महात्मा
२८ड] जगाम निद्रासहितः स्वमालयम् ॥२७॥ [२९

इत्यार्षे रामायणे आरण्यकाण्डे हविःप्रदानं नाम
त्रिषष्टितमः[3] सर्गः ॥६३॥

---

१. अ—महतो ।
२. ब म भ च—नास्ति ।
३. कै रा ल ब म भ च—नास्ति ।

राक्षसं मृगरूपेण चरन्तं कामरूपिणम् ।
१] निहत्य रामो मारीचं तूर्णमेव न्यवर्तत ॥१॥ [१
तस्य सन्त्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
२] क्रूरस्वनोऽथ गोमायुर्विननादाशु पृष्ठतः ॥२॥ [२
स तं स्वरं समाज्ञाय दारुणं लोमहर्षणम् ।
३] एकः प्रोवाच गोमायुस्वरेण परिशङ्कितः ॥३॥ [३
अशुभं बत मन्येऽहं गोमायुर्वाशते यथा ।
४] स्वस्ति स्यादपि वैदेह्या रक्षोभ्यो लक्ष्मणं विना ॥४॥ [४
राक्षसेन हि विज्ञाय स्वरमालम्ब्य मामकम् ।
५] विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयादिति ॥५॥ [५
स सौमित्रिः स्वरं श्रुत्वा तत्र हित्वा च मैथिलीम् ।
६] तयाऽप्यवाहितः क्षिप्रं मत्सकाशमिहैष्यति ॥६॥ [६

---

१. ल ब म—मृगरूपिणं ।
२. कै रा ल म—सत्वरमा० ।
३. ल ब म—रोमह० ।
४. अ च—गोमायुः स्वरेण ।
५. भ च—वनघो० ।
६. भ च—°वाश्यते ।
७. भ च—राक्षसै० ।
८. रा—ह
९. भ च—गतरू० ।
१०. ल ब—तया च वाहितः ।
अ—तयावावहितः ।
म—तया वा वाहितः ।
भ च—तया वा प्राहितः ।
११. अ म भ च—°मिहैष्यति ;

राक्षसेन[1] हतो नूनमाख्यातः सीतया तदा ।
N] राक्षसेन मम[2] क्रोधात् स्वरं[3] आवेदितस्तयोः[4]
१.०पू] इत्येवं[4] चिन्तयन् रामः श्रुत्वा गोमायुभाषितम् । [१.०उ
N] आत्मनश्चापनयनं मृगरूपेण रक्षसा ॥८॥ [१.१.पू
१.०उ] निवर्तमानस्त्वरितो जवेनाश्रममात्मनः ।
आजगाम जनस्थानं राक्षसैः परिशङ्कितः ॥९॥ [१.१.
१.१.] रावणस्य[5] मृगो भूत्वा राक्षसो मच्छराहतः[6] ।
१.२.पू] हा लक्ष्मण हतोऽस्मीति यद् वाक्यं चेदमब्रवीत् ॥१०॥[८
एतद् दृष्ट्वा महाघोरं निमित्तं महदद्भुतम् ।
N] सीतामेव जनस्थाने जगाम मनसा प्रियाम् ॥११॥ [N
अपि स्वस्ति भवेत् ताभ्यां रहिताभ्यां वने मया ।
१.३ ] जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥१२॥ [९
इति सीतां वरारोहां लक्ष्मणं च[7] महाबलम् ।
१.४] आजगाम[8] जनस्थानं[9] चिन्तयन्नेव राघवः ॥१३॥ [१.४

---

१. भ च्र—राक्षसैः स ।
२. ल ब—बहुक्रोधात् ।
३. कै रा—°तं तयोः । अ—°तं मया ।
४. कै अ म—इत्येव ।
ल ब म स्वरमावेदितं मम ।
५. भ च—राजतश्च ।
६. कै रा अ—यच्छरा० । म—यश्छ० ।
७. भ च—स ।
८. रा अ ब म—°माश्रमं तत्र ।
रा—°गाम यथादूरं ।
९. भ च—अतः परमधिकः पाठः—
राघवं तु यथान्यायमागत्य मृगपक्षिणः ।
सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः
स्वस्ति स्यादिति सर्वेषामितो गंतुं प्रचक्रमे ॥

१६उ] अथ लक्ष्मणमायान्तं ददर्श विगतप्रभम् । [१५
N] अ[1]विदूरेऽथ रामेण समियाय स लक्ष्मणः ॥१४॥
१७पू] विषण्णः सु[2]विषण्णेन दुःखितो दुःखितेन स[3]ः । [१६
N] विजगर्हेऽथ तं भ्राता ज्येष्ठो लक्ष्मणमागतम् ॥१५॥ [१७पू
गृहीत्वा च करे सव्ये लक्ष्मणं लक्ष्मणाग्रजः ।
N] उवाच रामो वचनमिदं तर्के[4]ण बुद्धिमान् ॥१६॥ [१८
अहो लक्ष्मण पापं त्वं[5] कृतवान् यत्त्वं विहाय ताम् ।
१८] सीतामिहागतः सौम्य अपि स्वस्ति भवेदिति ॥१७॥ [१९
न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा ।
१९] विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः । [२०पू
२०पू] अशुभान्येव पापानि यथा प्रादुर्भवन्ति मे ॥१८॥ [२०उ
इदं हि रक्षो मृगरूपधारि[6] ।
प्रलोभ्य मां घोरमपोह्य रूपम् ॥ [२४पू
बलादिवोत्पत्य विकृष्य दूरं ।
२१] चकार यस्मात् स्वयम्[7]आत्मघातम् ॥१९॥ [N

---

१. भ च—नातिदूरेथ ।

२. भ च—स वि० ।

३. भ च—च ।

४. कै रा—तर्केन ।

५. ल अ ब—तु कृतवान् यत् । अ म—पापं त्वं यस्त्वं ।

भ च—शाक्यं ते कृतं यस्त्वं ।

६. कै रा अ म भ च—०पधारी ।

७. अ—स्वयमेव ।

तथापि जाता विपिने भयार्ता
त्वया मया रहिता राजपुत्री । [N
असंशयं लक्ष्मण नास्ति सीता
N] हृता मृता वाप्यथ भक्षिता वा ॥२०॥ [२९ उ

इत्यार्षे रामायणे आरण्यकाण्डे लक्ष्मणदर्शनं[1] नाम
चतुःषष्टितमः[2] सर्गः ॥६४॥

---

१. भ च—°दर्शनो ।

२. के रा ल ब म भ च—नास्ति ।

## [त्रं-६५]=[ पञ्चषष्टितमः सर्गः]=[दा-५८]

स दृष्ट्वा लक्ष्मणं शून्यं दीनं दशरथात्मजः ।
१] पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥१॥ [१
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ।
२] न सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥२॥ [२
राज्यभ्रष्टस्य दीनस्य दण्डकं परिधावतः ।
३] क्व सा दुःखसहाया मे सीता सुरसुतोपमा ॥३॥ [३
४पू] यां विना नोत्सहे सौम्य मुहूर्तमपि जीवितुम् । [४पू
यक्षत्वममरत्वं वा पृथिवीं वापि लक्ष्मण ॥४॥ [N
५] विना तां नवहेमाभां नेच्छेयं जनकात्मजाम् । [५उ
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ॥५॥
६] कच्चित् प्रव्राजनं सौम्य न मे मिथ्या भविष्यति । [६
कच्चित् सकामा सुखिता कैकेयी न भविष्यति ॥६॥ [७उ
७] सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि । [७पू
तां पुत्रराज्यसिद्धार्थां मृतपुत्रा तपस्विनी ॥७॥
N] उपस्थास्यति कौसल्या कच्चित् सौम्य न कैकयीम् । [८
यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः ॥८॥

---

१. कै रा ल अ ब म—शून्ये ।
२. अ—०कारण्ये ।
३. ल भ्र ब—सा । म—सा ।
४. म भ च—दण्डकान् ।
५. कै रा—परिदेवतः ।
६. रा म—वाप्य । भ—चापि ;
७. ल ब म—प्रवजनं ।
८. रा—कैकयी ।
९. ब भ च—कौशल्या ।

८] सुवृत्तया तया हीनः प्राणांस्त्यक्ष्यामि लक्ष्मण । [९
ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा ॥९॥
१०] त्वयि प्रमत्ते रक्षोभिर्भक्षिता सा तपस्विनी । [११
सुकुमारी च सा बाला नित्यं च सुखभागिनी ॥१०॥
११] मद्वियोगेन वैदेही नित्यं शोचति दुर्मनाः । [१२
सर्वथा रक्षसा तेन जिह्मेनेह दुरात्मना ॥११॥
१२] रुदंता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् । [१३
श्रुत्वा च शङ्के वैदेह्या तं स्वरं सदृशं मम ॥१२॥
१३] त्रस्तया प्रेषितस्त्वं हि द्रष्टुं मां शीघ्रमागतः । [१४
सर्वथा न कृतं युक्तं सीतामुत्सृजता वने ।

---

१. कै रा—प्राणं ।

२. म—नास्ति ।

३. भ च—नास्ति ।
भ—पुस्तके शोधनरूपेण पार्श्वभागे पुनर्लिखितम्

४. म—उपस्थास्यति कौसल्या ।

५. कै रा अ—दुःखभागिनी । भ च—नास्ति ।

६. भ च—नास्ति ।

७. कै रा अ—येन ।

८. अ—जिह्मेनेव ।

९. म—नास्ति ।

१०. अ—रुदिता । भ च—नदता ।

११. ल ब भ च—°ह्यास्तं ।

१२. रा—प्रोषितस् ।

१३. कै रा ल अ ब म—°त्सृज्य तां ।

१.४] प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् । ॥१.३॥ [१.५
निश्चितोः खरघातेन राक्षसाः पिशिताशनोः
१.५] तैः सीता पिशिताहारैर्भक्षितोत्र दुरात्मभिः ॥१.४॥[१.६
अपारेऽस्मिन् भये मग्नः सर्वथा नात्र संशयः
१.६] किं न्विदानीं करिष्यामि ध्रुवं प्राप्तव्यमीदृशम् ॥१.५॥[१.७
इति सीतां वरारोहां चिन्तयन्नेव राघवः
१.७] आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥१.६॥ [१.८
आगच्छन् पथि काकुत्स्थो निमित्तान्युपलक्ष्य वै
N] इन्द्रियैरप्रहृष्टैः स त्रस्तो लक्ष्मणमब्रवीत् । ॥१.७॥ [N
अशोभनान्येव हि लक्षणानि
प्रादुर्भवन्त्यत्र ममाशुभानि ।
आयासमूलानि न दीर्घकाल-
N] मार्तिं प्रदास्यन्ति न संशयो मे ॥१.८॥ [N
विगर्हमाणो ह्यनुजोत्तमं वै
श्रमात् क्रु ? (क्षु)धा चैव पिपासया च ।

---

१. भ च—निश्चितं ।
२. कै रा अ म—०पातेन ।
३. कै रा म—पिशिताशिनः ।
४. भ च—०भक्षिता सा ।
५. कै रा अ म भ च—मग्नाः ।
६. कै रा अ—किं त्विदानीं ।
७. कै—०रैरुपहृष्टैः । अ—नास्ति ।
८. ल अ ब—च ।
९. भ च—स ।
१०. भ च—संशयं ।
११. म—विगर्ह्य० ।
१२. ल ब—वा ।

विनिःश्वसञ् शुष्कमुखो विषण्णः[1]
१८] प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥१९॥ [१९
स्वमाश्रमं च[2] प्रविगाह्य[2] शीघ्रं
विहारदेशांश्च ससार[3] कांश्चित् ।[4]
तांश्चैव सर्वान् विपुलान् विचित्य[5]
१९] प्रहृष्टरोमा व्यथितोऽभवत् सः ॥२०॥ [२०

इत्यार्षे रामायणे आरण्यकाण्डे[6] रामोपवर्तनं[7] नाम
पञ्चषष्टितमः[8] सर्गः ॥६५॥

---

१. भ च—विवर्णः ।
२. भ च—संप्रवि० ।
३. ल अ ब—तथैव ।
४. अ—नास्ति ।
५. कै ल ब म—विचिन्त्य । भ च—विचीय ।
६. भ च—नास्ति ।
७. अ—रामोपावर्तनं ।
८. कै रा ल ब म भ च—नास्ति ।

अथाश्रममुपावृत्तो[1] विमना रघुनन्दनः ।
१] परिपप्रच्छ सौमित्रिं रामो दुःखार्तितः[2] पुनः ॥१॥ [१
३पू] उवाच च किमर्थं त्वं हित्वा यातोऽसि मैथिलीम् । [२पू
४उ] स्फुरते नयनं सव्यं बाहुश्च[3] हृदयं च मे ॥२॥
दृष्ट्वा लक्ष्मण दूरात् त्वां[4] सीताविरहितं पथि । [४
५] एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः[5] ॥३॥
भूयो दुःखसमाविष्टो दुःखितं वाक्यमब्रवीत् । [५
६] न स्वयं कामकारेण सीतां त्यक्त्वाहमागतः ॥४॥ [६पू
७उ] आर्येणैवं[6] परिक्रुष्टं लक्ष्मणेति सुविस्तरम् ।
परित्राहीति[7] यद् वाक्यं मैथिल्यास्तच्छ्रुतिं[8] गतम् ॥५॥ [७
८] सा तमार्तस्वरं श्रुत्वा भर्तृस्नेहेन मैथिली ।
९पू] गच्छ गच्छेति मामाह वैदेही भयविक्लवा ॥६॥ [८

---

१. भ च—°वृत्तस्त्वन्तरा ।
भ—कोषे चास्य पाठस्य स्थाने
'°वृत्तो विमना' इति संशोधनम् ।
२. रा—दुःखांतितः ।
ल ब—दुःखार्दितः ।
३. ल ब—बाहू च
४. अ—त्वं सीताविरहितो ? ।
५. भ च—शुभलक्षणः ।
६. कै रा ल अ ब म—आर्येणैवं ।
७. कै रा अ—परिगृहीति ।
८. अ—°स्तच्छ्रुतं ।

शृण्वन्ती चापि तां वाचं रूक्षभीमस्वरामथ ।
N] विस्वरं प्रतिमुञ्चन्तीं जलार्द्रामिव दुन्दुभिम् ॥७॥ [N
९उ] प्रचोद्यमानेन मया गच्छेति बहुशस्ततः ।
इत्युक्त्वा?(क्ता)मैथिली वाक्यमिदं त्वत्प्रत्ययान्मया ॥८॥[९
१०] न तत् पश्याम्यहं रक्षो यो रामे भयमावहेत् ।
निर्वृता भव नास्त्येतत् केनाप्येवमुदाहृतम् ॥९॥ [१०
११] विगर्हितं च नीचं च कथमार्योऽभिधास्यति ।
१२पू] त्राहीति वचनं सीते यस्त्रायेत् त्रिदशानपि ॥१०॥ [११
N] मा गाः श्रुत्वा च वैक्लव्यं स्वस्था भव निरुत्सुका । [N
१२उ] किञ्चिन्निमित्तं केनापि भ्रातुरालम्ब्य मे स्वरम् ॥११॥
त्रायस्व व्याहृतं वाक्यं लक्ष्मणेति सुदुःखितम् । [१२
N] न भवत्या व्यथा कार्या कुनारीजनसेविता ॥१२॥ [१३उ
न सोऽस्ति त्रिषु लोकेषु पुमान् यो राघवं रणे ।
१४] भूतपूर्वो भविष्यो वा निहन्यादुद्व्यक्तविक्रमम् ॥१३॥[१४

---

१. भ च—नास्ति । भ—कोषे प्रान्तभागे अपरहस्तेन लिखितम् ।

२. भ च—प्रबोध्य० ।

३. च—प्रत्युक्त्वा ।

४. ब—वाक्यमुक्तं ।

५. कै रा—निवृत्ता ।

६. भ च—नास्ति ।

७. अ—स्वनम् ।

८. कै रा—मतिः ।

९. रा—०सेवितं ।

१०. भ च—निहन्याच्छक्रवि० ।

एवमुक्ता तु वैदेही पुनर्मां रक्तलोचना ।
१५] उवाचाश्रूणि मुञ्चन्ती दारुणार्थपदं वचः ॥१४॥ [१६
पापं मयि त्वात्यर्थं पापस्य हृदि वर्तते ।
३६] विनष्टे भ्रातरि ह्यर्थं नवं त्वं संमवाप्स्यसि ॥१५॥ [१७
प्रेषितो भरतेन त्वं रामं समुपगच्छसि ।
१७] विक्रोशन्तं यथा ह्येनं न त्वमभ्यवपद्यसे ॥१६॥ [१८
शत्रुः प्रच्छन्नचारी त्वं मदर्थमुपगच्छसि ।
१९] राघवस्यान्तरं प्रेप्सुस्ततो नाभ्यवपद्यसे ॥१७॥ [१९
एवमुक्तोऽस्मि वैदेह्या संरब्धो रक्तलोचनः ।
२०] आश्रमात् स्फुरिताग्रौष्ठः क्रोधादस्मि विनिर्गतः ॥१८॥[२०
एवं ब्रुवाणं सौमित्रिं रामः सन्तापमोहितः ।
२१] अब्रवीन्न कृतं सौम्य आश्रमात्त्वमिहागतः ॥१९॥ [२१
जानन्नपि समर्थं मां रक्षसां विनिवारणे ।
२२] अनेन क्रोधवाक्येन किमर्थं निःसृतस्ततः ॥२०॥ [२२

१. अ—सुनन्दा ।
२. रा ल अ ब म—°चाश्रूणि मु° ।
भ च—चाश्रविमु° ।
३. ल ब—नैव त्वं समवा° ।
भ च—नच त्वं मामवा° ।
४. ल ब—न राममुप° ।
५. कै रा अ म—नास्ति ।
६. अ भ—° वस्यान्तरे । च—°न्तर° ।
७. भ च—प्रेप्सुर्ह्यतो ।
८. भ च—°ग्रोष्ठः ।
९. अ—°दस्मिन् ।
१०. कै रा ल अ म—य आश्रमात्त्वमागतः ।
ब—आश्रमात्वं यदागतः ।
भ च—°माश्रमा° ।

न तु ते परितुष्यामि त्यक्त्वा[1] यदपि[2] (सि) मैथिलीम्[3] ।
२३] क्रुद्धः परुषितो वाचा मत्समीपमिहागतः ॥२१॥ [२३
सर्वथा त्वपनीतं[4] ते सीताया यत् प्रचोदनात् ।
२४] क्रोधस्य वशमागम्य न कृतं मम शासनम् ॥२२॥ [२४
असौ हि राक्षसः शेते शरेण निहतो[5] मया ।
२५] मृगरूपेण येनाहमाश्रमादपवाहितः ॥२३॥ [२५
विकृष्य[6] चापं प्रणिधाय सायकं
स एष बाणेन हि ताडितो मया ।
मृगत्वमुत्सृज्य च विस्वरस्वरो
N] बभूव केयूरधरो निशाचरः ॥२४॥ [२६
शराहतः स ह्यपितप्तया गिरा
स्वरं समालम्ब्य मदीयमुन्नदन् ।
उदाहरन्मद्वचनं[7] सुदारुणं[8]
२६] त्वमागतो येन विसृज्य मैथिलीम् ॥२५॥ [२७
इत्यार्षे रामायणे आरण्यकाण्डे लक्ष्मणविगर्हणं[9] नाम
षट्षष्टितमः[10] सर्गः ॥६६॥

---

१. भ च—त्यक्ता ।
२. भ च—मैथिली ।
३. कै रा श्र म—नास्ति ।
४. भ च—°नीतेन ।
५. म—हि हतो ।
६. कै रा ल श्र ब म—विसृज्य ।
७. रा ल ब म—उदाहृतं तद्वचनं ।
श्र—उदाहृतं त्वद्वचनं ।
८. भ च—नास्ति ।
९. रा—विगर्हणा । भ च—विगर्हणो ।
१०. कै रा ल ब म भ च—नास्ति ।

व्रजतस्तत्र तस्याथ वामं लोचनमस्फुरत् ।
प्रास्खलच्चासकृद् रामो वेपथुश्चैनमस्पृशत् ॥१॥ [१
उपलभ्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ।
अपि सीताश्रमे सा स्याद् व्याजहार पुनः पुनः॥२॥[२
त्वरमाणो जगामाथ सीतादर्शनलालसः । [३ पू
उद्भ्रमन्निव वेगेन विक्षिप्तो रघुनन्दनः ॥३॥
तत्र तत्र जनस्थानमभिवीक्ष्य समन्ततः । [४
ददर्श पर्णशालां च सीतया रहितां तदा ॥४॥
श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव । [५
रुदन्तमिव वृक्षैश्च म्लानपुष्पफलद्रुमम् ॥५॥
श्रिया विहीनमपि च सन्त्यक्तवनदेवतम् । [६
विप्रकीर्णाकुलजलं विप्रविद्धबृसीघटम् ॥६॥
दृष्ट्वा शून्यं जनस्थानं विललापातिदुःखितः । [७
हृता मृता वा नष्टा वा भक्षिता वा तपस्विनी ॥७॥

१. ल ब म—वामलोचनः ।
२. ब ल—न ।
३. कै रा ल ब म भ च—उद्भ्रमन्निजवेगेन ।
४. भ च—अतः परमधिकः पाठः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नचेतनः ।
५. अ—हेमान्ते ।
६. अ—°वनदेवतां ।
७. ब ल अ—°जलवि० ।
कै रा ल अ ब—°जलविप्रवृद्ध ।
८. कै रा म भ च—विललाप सुदुःखितः ।
९. कै रा अ म—हता ।
१०. भ—च ।

निलीनाप्यथ वा भीरुरथवारण्यं[1]माश्रिता । [८
गता विचेतुं पुष्पाणि फलानीत्यथ वा पुनः ॥८॥
अथवा पद्मिनीं[2] याता जलार्थं वा नदीं गता । [९
यत्ता[3]न्मृगयमाणोऽपि नाससाद वने प्रियाम् ॥९॥ [१०पू
जनकस्य सुतां[4] भीरुमथ पप्रच्छ राघवः । [N
कदम्ब ननु[5] जानीषे मम[6] सीतां शुभाननाम् ॥१०॥[१२उ
स्निग्धपल्लवसंच्छन्नपीतकौशेयवासिनीम् ।
शंस त्वं यदि वा दृष्टा बिल्व बिल्वोपमस्तनी ॥११॥[१३
अथवार्जुन शंस त्वं प्रियां[6] तामार्जवप्रियाम्[7] ।
जनकस्य सुता भीरुर्यदि जीवति वा नवा ॥१२[8]॥[१४
ककुभः करभोरुं तां व्यक्तं जानाति मे[9]त्प्रियाम् ।
लतापल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥१३॥ [१५
भ्रमरैरुपगीतश्च[10] सर्ववल्लीविभूषितः[11] ।
एष व्यक्तं विजानीते तिलकस्तिलकोपमाम् ॥१४॥[१६

---

१. भ च—°थवा वनमाश्रिता ।
२. अ—पद्मिनी जाता जला° ।
भ च—पद्मिनीखण्डे याता वन० ।
३. भ—यत्तां मृ० ।
४. रा—स्वभां ।
५. कै रा अ—मम । भ च —यदि ।
६. भ च—शंस ।
७. भ च—यदि जानासि वा नवा ।
८. भ च—नास्ति ।
९. ल ब—जानीते ।
१०. रा—°रुपगीतैश्च ।
११. भ च—वल्लीवधूप्रियः ।

अशोक शोकापनुद शोकोपहतचेतसम् ।
विशोकं कुरु शीघ्रं त्वं प्रियासन्दर्शनाद्धि माम्॥१५॥[१७
यदि त्वया[1] ताल[2] दृष्टा पक्कतालनिभस्तनी ।
कथयस्व वरारोहां करुणा यदि ते मयि ॥१६॥ [१८
जम्बु जम्बूफलापूर्णे[3] सा दृष्टा च त्वया यदि[4] ।
प्रियां तां चारुसर्वाङ्गीं निःशङ्कं[5] कथयस्व मे ॥१७॥ [१९
अथ त्वं मृगशावाक्षीं मृग जानासि जानकीम् ।
मृगविप्रेक्षिणीं[6] कान्त्या मृगीभिः सहितां वने ॥१८॥[२३
गजयूथप वामोरूर्यदि[7] दृष्टा गज त्वया ।
न ह्यस्त्यविदितं[8] तुभ्यमाख्याहि वरवारण[9]॥१९॥ [२४
शार्दूल यदि[10] दृष्टा सा प्रिया चन्द्रनिभानना ।
शार्दूलभयवित्रस्ता कथयस्वाशु ते[11] शुभम् ॥२०॥ [२५

---

१. कै रा अ म—त्वया दाव । ल ब—त्वयाथवा । च—ताल त्वया ।
२. कै रा ल अ ब म—तालपक्क० । च—लतापक्क० ।
३. भ च—जम्बुफलोष्ठी च ।
४. भ च भवेत् ।
५. भ च—निश्शंकः ।
६. कै र अ म भ च—०मृगविप्रक्षिर्णी कांतां ।
रा अ—०विप्रीक्षणीं कान्तां ।
७. रा—वासोर्यं ।
८. रा भ—ह्यस्ति वि० ।
अ—ह्यविदित्तं किं ।
९. म—वनवारण ।
१०. रा—नास्ति ।
११. अ भ—मे ।
म च—०भे ।

किं धावसि प्रिये दूरं[1] दृष्टा[2]ऽसि कमलेक्षणे ।
वृक्षेणावृत्य चात्मानं कस्मान्न प्रतिभाषसे ॥२१॥[3] [२६
संतिष्ठ[4] त्वं वरारोहे न तेऽस्ति करुणा मयि ।
नात्यर्थं[5] हास्यशीलासि[6] किं मामार्तमुपेक्षसे[7] ॥२२॥ [२७
पीतकौशेयकेनापि[8] संवृता[9] वरवर्णिनी ।
धावंत्यसि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ।२३। [२८
नैषा सा नूनमथवा न हि सा चारुहासिनी ।
कृच्छ्रं प्राप्तं हि मामेवं न संप्रेक्षितुमिच्छति ॥२४॥ [२९
व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः ।
विशन्त्यङ्गानि[10] सर्वाणि मया विरहिता प्रिया[11]॥२५॥[३०
नूनं तच्छुभदन्तौष्ठं[12] सुनसं शुभलक्षणम् ।
पूर्णचन्द्रनिभं वक्त्रं सद्यो निष्प्रभतां गतम् ॥२६॥ [३१

---

१. भ च—दूरे ।
२. च—तिष्ठ यद्यस्ति सौहृदं ।
३. च - नास्ति ।
४. कै रा अ म—संतिष्ठंति ।
कै—पुस्तके 'तिष्ठ तिष्ठ' इत्यपरस्तेन ।
५. ल ब—नात्यन्तं ।
६. कै रा म—हास० । ल—हास्यशाला० ।
७. ल ब—किमार्तं समु० । अ—किं मामन्त० ।
८. कै रा अ ब भ च—केनासि ।
९. कै अ म—सुवृत्ता रा—सुवृता ।
भ—सूचिता ।
१०. भ—विभज्यांगानि ।
११. च ब—नास्ति ।
१२. भ—°दन्तोष्ठं ।

भक्षितं भयदीनाक्षं राक्षसैः पिशितांशनैः । [N
सा च चंपकहेमाभा ग्रीवा ग्रैवेयभूषिता ॥२७॥
कोमला विमला क्षामा कांताया भक्षिता मम । [३२
नूनं विलपमानाया नवपल्लवकोमलौ ॥२८॥
भक्षितौ वेपमानायाः सहस्ताभरणौ भुजौ । [३३
राक्षसानां तु घोराणां मध्ये सा शुभलक्षणा ॥२९॥[N
व्याघ्रमध्यगतेवासीद्धरिणी त्रस्तलोचना । [N
मया बाला च रहिता रक्षसां वशमागता ॥३०॥
सार्थेनेव परित्यक्ता भक्षिता हतबान्धवा । [३४
हा मया सा परित्यक्ता हा सीतेति पुनः पुनः॥३१॥[३५उ
इत्येवं विलपन् रामः पर्यधावद् वनाद् वनम् ।
क्वचिद्‌द्राव सावेगः क्वचिच्च भ्राम्यते बलात् ॥३२॥[३६पू
क्वचित् त्रस्त इवाभाति कांतान्वेषणलालसः । [३६उ
क्वचित्स्खलन् क्वचिद् वीक्षन् क्वचिद्धावन् क्वचित्पतन् ॥३३॥[N

---

१. अ—पिशिताशिनैः ।
२. रा—चार्यांक० । अ ब—चण्पक० ।
३. भ च—च ।
४. भ च—कमलेक्षणा ।
५. अ—मयावला ।
६. कै रा ल अ ब म—सार्थेन वै ।
७. भ च—वेगाच्च ।
८. भ—क्वचिद्वै ।
९. कै रा ल अ ब म—वनात् ।
१०. भ च—क्वचिन्मत्त ।
११. रा ल अ ब—क्वचिच्चलन्

उच्चैर्नीचैश्च विक्रोशन्[1] सीते सीते[2] च जानकि । [N
स वनानि नदीशैलान् पश्यन्[3] प्रस्रवणानि[3] च ॥३४॥
काननानि स वेगेन भ्रमत्यपरिनिष्ठितम्[4] । [३७
हा लक्ष्मण महाबाहो पश्यसि त्वं प्रियां क्वचित् ।
शीघ्रमाख्याहि शोकार्तं[5] कस्मात् त्वं नाभिभाषसे ॥३५॥[N
तथा तु गत्वा विलपन्[6] महद् वनं
विचिन्त्य[7] सर्वं[9] त्वथ मैथिलीं प्रति
अनिश्चितत्वात् स चकार मार्गणे[8]
पुनः प्रियायाः परमं परिश्रमम् ॥३६॥ [३८

इत्यार्षे रामायणे आरण्यकाण्डे सीताप्रमाथे रामविलापो नाम

[ सप्तषष्टितमः ] सर्गः[10,11] ॥६७॥

---

१. भ च—चुक्रोश ।
२. कै रा ल अ ब—सीतेति ।
३. कै रा ल ब म—प्रपश्यन् स्रवणानि ।
४. अ—°परिनिष्ठितः ।
म—भ्रमति परि° ।
५. अ—शोकान्तं ।
६. भ—व्यलपन् ।
७. अ भ च—विचिन्त्य ।
८. अ—मार्गणं ।
९. भ च—नास्ति ।
१०. ल ब—नास्ति ।
११. ल—नास्ति ।

स तु दृष्ट्वा जनस्थानं शून्यं दशरथात्मजः ।
१] रहितां पर्णशालां च सीतया परिमण्डिताम् ॥१॥ [१
अदृष्ट्वा तत्र वैदेहीं स निरीक्ष्य च सर्वशः । [२ पू.
२] अब्रवील्लक्ष्मणं दीनं मुखेन परिशुष्यता ॥२॥ [N
क्व नु लक्ष्मण वैदेही कां दिशं चापवाहिता ।
३] हृता वा केन सौमित्रे भक्षिता वा तपस्विनी ॥३॥ [३
तथा दृष्ट्वा जनस्थानं शून्यं दशरथात्मजः । [N
४] उवाच रामो विक्रम्य प्रगृह्य विपुलौ भुजौ [२ उ
N] एतयोरेव सामर्थ्यमस्मिन्नेव न मे भवेत् । ॥४॥ [N
वृक्षेणावार्य चात्मानं सीते हसितुमिच्छसि ।
५] अलं ते हसितेनार्ये मामिहायाहि दुःखितम् ॥५॥ [४
यैः सह क्रीडिता सीता विश्वस्तैर्मृगपोतकैः ।

१. ल ख--च ।
२. अ—सीतायाः ।
३. रा—निरीक्ष्यश्च ।
४. अ—०लक्ष्मणेदानीं ।
५. अ—च ।
६. अ—शून्ये ।
७. भ च—रुचिरौ ।
८. ल अ म—०मस्मिन् किं न वने ।
ख—०स्मिन्नेव हि मे ।
९. च—नास्ति ।
१०. च—वृक्षेणापर्य० ।
११. भ च—नास्ति

एते हि तां विना सौम्य सर्वे ध्यायन्ति लक्ष्मण ॥६॥ [९

इमे लक्ष्मण वैदेह्यास्तपनीयविभूषणाः[1] । [४०पू

७] अरण्ये सह माल्येन शीर्णाः कनकबिन्दवः ॥७॥ [४०पू

जपापुष्पनिकाशैश्च चित्रं[3] क्षतजबिन्दुभिः

८] आततं पश्य सौमित्रे सर्वतो धरणीतलम् ॥८॥ [४१

मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः[4] । [N

९] नीत्वा[5] छित्त्वा विभक्ता वा भक्षिता वा तपस्विनी ॥९॥[४२

तस्या[6] निमित्तं वैदेह्या द्वयोर्विवदमानयोः

१०] बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥१०॥ [४३

३१पू] भ्रमन्तं चन्द्रसङ्काशं सीताया विमलं मुखम्[7] । [N

भक्षितं भयदीनाक्षं राक्षसैः पिशिताशिभिः ॥११॥

वैरं सीताविनाशाद्धि प्रसक्तं राक्षसैः सह [N

१२] जनस्थाने महच्चेदं कृतमात्मवधाय वै । ॥१२॥

N] एवं विलपमानस्तु रामो मत्त इव स्खलन्[8] । [N

अथाश्रमात् क्रोशमात्रे ददर्श महदद्भुतम्[10] ॥१३॥

N] रणोपकरणं सर्वं विध्वस्तं[9] धरणीतले । [N

---

१. रा ल ब—विभूषिताः ।

२. अत आरभ्य १९तमश्लोकान्तः पाठोः दक्षिणपाठस्य ६४तमे सर्गे द्रष्टव्यः ।

३. कै रा ल अ ब म—चित्रक्षतज० ।

४. च—नास्ति ।

५. ल अ ब भ च—नीता ।

६. भ—तस्मान्निमित्तं । कै रा ल अ ब म—तया नि० ।

७. भ च—नास्ति ।

८. रा—इवास्खलन् ।

९. अ—विश्रस्तं ।

१०. च—नास्ति ।

N] तं दृष्ट्वा दर्शयामास शोकोपहतचेतनः । ॥१४॥
मुक्तामणिनिभं दिव्यं तपनीयविभूषितम् ।
१३] धरण्यां पतितं भग्नं पश्य सौम्य महद्धनुः । १५॥[४४
तरुणादित्यसङ्काशं वैडूर्यमणिवेष्टितम् ।
१४] विशीर्णं पतितं भूमौ कवचं पश्य काञ्चनम् ॥१६॥ [४५
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम्
१५] भग्नदण्डमिदं भूमौ कस्य सौम्य निपातितम् ॥१७॥ [४६
१६पू] काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः [४७पू
ते चाक्षमात्रा विविधास्तपनीयविभूषिताः । [N
१८] कस्येमे पतिता बाणा विकीर्णा घोरदर्शनाः॥१८॥ [४२
सुघोरं प्रहितं पश्य ममेदं जीवितान्तकम् ।
१९] वैरासक्तमनोभिर्वै रक्षोभिः कामरूपिभिः ॥१९॥ [N
अद्य शोकेन महता मृतं सीताविनाकृतम् ।
२०] परलोके महाराजो नूनं प्रक्ष्यंति मे पिता ॥२०॥ [७

१. कै रा ल अ ब म—वैडूर्यगुणवे० ।
२. भ च—विशालं ।
३. भ च - दिव्यमाल्यो० ।
४. च—नास्ति ।
५. कै ल अ—तथाक्ष० ।
६. अ म—°यविभूषणाः ।
७. रा ल अ ब च—पतितं ।
८. भ—कामभूषितैः ।
९. कै रा अ भ—द्रक्ष्यति ।
१०. च—नास्ति ।
११. आसप्तमं दशमान्ताः श्लोका दक्षिणपाठस्य ६१तमे सर्गे द्रष्टव्याः ।

कथं प्रतिज्ञां संश्रुत्य तथा[1] मत्सन्निधौ तदा ।
२१] अपारयित्वा[2]न्तकाले मत्सकाशमिहागतः[3] ॥२१॥ [८
कामवृत्तमनार्यं वा[4] मृषावादिनमेव वा ।
२२] धिक् त्वामिति परे लोके नूनं वक्ष्यति मे पिता ।२२।[९
विवशं शोकसन्तप्तं दीनं भग्नमनोरथम् ।
२३] मामिहोत्सृज्य[5] करुणं क[6] यातासि मम प्रिये ॥२३॥
क सा वरोरू रुदती मृगेक्षणा
ममेश्वरी लक्ष्मण युक्तभाषिणी ।
विहाय मां कामबलाभिमर्दितं[7]
२४] प्रभा यथा सूर्यमिवास्तपर्वते[8] ॥२४॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे रामविलापो
नामाष्टषष्टितमः सर्गः ॥६८॥

---

१. कै रा—त्वया । भ—तया ।
२. ल ब—अपातयित्वा० ।
३. भ—०शमुपागतः ।
४. भ—मां ।
५. ल ब—मामितो० ।
६. कै रा ब भ च—कीर्तिर्नरमिवानृतम् ।
७. ल—०लातिमंर्दितां ।
ब म—०लाभिसंर्दितं ।
८. भ च—०मिवास्तपर्वतम् ।
९. कै रा ल ब म भ च—नास्ति ।

N] ततो दुःखी मुहुःखार्तो?(र्तं) राघवो?(वं) जनकात्मजाम् [१.२उ
अनासादयमानं तु सीतां दशरथात्मजः ॥ १ ॥ [१.३उ
२] पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् ।
लक्ष्मणो वाक्यमन्वर्थमुवाच हितकाम्यया ॥२॥ [१.३उ
५] मा विषादं कुरु विभो कुरु यत्नं मया सह ।
विचेतुं हि वनं घोरं बहुकाननसेवितम् ॥३॥ [१.४
६] प्रियकाननसंचारा पुष्पाणि प्रविचिन्वती ।
काननं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् ॥४॥ [१.५
७] सरितं वानुसंप्राप्ता नीलवञ्जुलसेविताम् । [१.६पू
वित्रासयितुकामा वा लीना स्याद् गहने क्वचित् [१.७
८] जिज्ञासमाना वैदेही त्वां च मां च नरर्षभ ॥५॥
तस्यां अन्वेषणे राम क्षिप्रमेव यतावहे । [१.८
९] मन्यसे यदि काकुत्स्थ मा च शोके मनः कृथाः॥६॥ [१.९उ
एवमुक्तः स हृष्टस्तु लक्ष्मणेन समाहितः ।

---

१. अ—स दुःखार्तो ।
२. कै रा ल अ ब म—°यमानस्तु ।
३. भ त्र—वाचम° ।
ल ब म—वाक्यमव्यक्त° ।
४. कै—प्रियकांचन° ।
५. कै—सा नलि° । इत्यपरहस्तेन ।
६. रा ल अ ब म भ त्र—तस्यामन्वे°
७. अ—यमामहे ? ।
८. भ च—स हृयं तु । त्र—सुहृयं तु ।
९. कै रा अ—समाहृतः ।

१.१०] सह सौमित्रिणा रामो विनेतुमुपचक्रमे[2] ॥ ७ ॥ [२०
तौ वनानि गिरींश्चैव सरितश्च सरांसि च ।
१.११] निखिलेन विचिन्वाते[1] सीतां दशरथात्मजौ ॥८॥ [२१
१.१२पू] तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ।
N] गहनानि च वृक्षाणां ..................।[3] [२२पू
१.१३उ] प्रयत्नेन विचिन्वानौ[4] नैव तामधिजग्मतुः ॥९॥ [२२उ
विचित्य[5] सर्वतः शैलं रामो लक्ष्मणमब्रवीत् । [२३पू
१.१४] न तां पश्यामि सौमित्रे वैदेहीं पर्वते शुभे ॥१०॥[6]
स तथोक्तोपि सन्तप्तं[7] लक्ष्मणो[8] वाक्यमब्रवीत् ।
१.१५] विचरन् दण्डकारण्ये भ्रातरं दीनचेतसम् ॥११॥ [२४उ
प्राप्स्यसे त्वं महाप्राज्ञ मैथिलीं जनकात्मजाम् ।
१.१६] यथा विष्णुर्महाबाहो बलिं बद्ध्वा[9] महीमिमाम् ॥१२॥ [२५
एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
१.१७] उवाच दीनया वाचा दुःखाभिहतचेतनः ॥१३॥ [२६
वनं सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः ।
१.१८] गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः ॥१४॥ [२७

---

१. कै—विचिन्वानौ ।
२. कै रा ल अ ब म—विचेतुमुपचक्रमे । भ च—नास्ति ।
३. कै रा ल अ ब म—अत्र पाठस्त्रुटितोऽवभाति, स च नवैर्लेखकैः 'विचेतुमुपचक्रमे' इति पाठेन पूरितः ।
४. भ च—विचिन्वन्तौ ।
५. भ च—विचिंत्य ।
६. ब—नास्ति ।
७. ल ब म—°क्तोप्यसन्तप्तं ।
८. भ—लक्ष्मणं ।
९. कै रा—बलिबद्ध्वा ।

नेहं पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् । [२८
१९] पर्वता विचिता वापि काननानि वनानि च ॥१९॥[N
एवं स विलपन् दीनः सीताहरणकर्षितः ।
२०] रामः शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥१६॥ [२९
स विह्वलितसर्वाङ्गो गतबुद्धिर्विचेतनः ।
२१] विषसादातुरो दीनो निःश्वस्याशीतमारुतम् ॥१७॥ [३०
बहुशः स तु निःश्वस्य रामो राजीवलोचनः ।
२२] हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥१८॥ [३१
तं रामं सान्त्वयामास लक्ष्मणः प्रियदर्शनः ।
२३] बहुप्रकारं धर्मज्ञः प्रश्रितः प्रयताञ्जलिः ॥१९॥ [३२
२४पू] अनादृत्य तु तद् वाक्यं लक्ष्मणोष्ठपुटच्युतम् ।
N] कार्पण्यशोकोपहत ऊर्ध्वबाहुः सुविह्वलः । [३३
२४] अपश्यंस्तां प्रियां पत्नीं विलपन्निदमब्रवीत् । ॥२०॥
त्रैलोक्याधिपते शक्र विक्रन्दामि शचीपते । [N
२५] विहारकाले दयिता प्रिया भार्या जहाति माम् । ॥२१॥
गतसूर्यमिवाकाशं पुरं दृत्तोत्सवं यथा । [N

१. कै—नहि ।
२. भ च—विचिताश्चापि ।
३. रा—भवेत्
४. कै रा—गतबुद्धिवि० ।
५. कै रा ल अ ब म—निश्वस्य सीतया कृते ।
६. भ च—तं सान्त्वयामास तदा ।
७. भ—प्रसृतः । च—प्रवृतः ।
८. अ—०ण्यशोकापहत ।
९. भ च—अपश्यन् तां । रा—अप्रशस्तां ।
१०. ल ब म—कोषेषु त्रयोविंशस्य श्लोकस्य चतुर्विंशश्लोकेन व्यत्ययः कृतः।

N] प्रतिभात्ययमावासो[1] हतवीर इवाहवः[2] ॥ २२ ॥
N] यस्मिन् काले भृशं कामी लब्ध्वा भूयोऽभिनन्दति [N
२६] तस्मिन् सुखोदये काले प्रिया भार्या जहाति माम्[3] ॥२३॥
परित्यज्य यथा स्वर्गमभिजाने यथामृतम्[4] । [N
२८] नाशयित्वेव सर्वस्वमभिशोचामि भामिनीम् ॥२४॥
शीघ्रं लक्ष्मण जानीहि गत्वा मन्दाकिनीं नदीम् । [N
२९] अपि मन्दाकिनीं सीता पद्मान्युद्धर्तुमागता ॥२५॥ [N
एवमुक्तस्तु रामेण लक्ष्मणस्त्वरयान्वितः ।
३०] नदीं मन्दाकिनीं रम्यां जगामाँलघुविक्रमः[5] ॥२६॥ [[6]
स लक्ष्मणस्तीर्थवतीं विदित्वा[7] राममब्रवीत् । [४
३१] न तां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ॥२७॥
क्वं नु[8] सा देशमापन्ना वैदेही क्लेशभागिनी । [५पू
३२] न हि तं वेदये राम यत्र सा तनुमध्यमा ॥२८॥ [५उ
N] रावणस्य तु भूतानि वधायाहूय[9] पद्मिनीम् ।
सीतां रामाय शंसेति तदोचुस्तां च पद्मिनीम्[10] ॥२९॥[N
N ततः प्रचोदिता भूतैः शंसास्मै त्वं प्रियामिति । [९पू

---

१. रा—°त्ययमाकाशो ।
२. अ—इवाहवे ।
३. भ—अपरहस्तेन । च—नास्ति ।
४. रा ल अ ब म—यथामृते ।
५. अ भ च—°गाम लघु° ।
६. अत आरभ्य दक्षिणपाठस्य ६४तमः सर्गो द्रष्टव्यः ।
७. ल ब म भ च—विचित्त्वा ।
८. अ च—किं तु ।
९. कै रा अ—वधायाह्वाय ।
१०. कै रा अ भ च—तदा मन्दाकिनीं ब्रुवन् ।

रामं समभिचक्राम स्वयं मन्दाकिनी नदी ॥३०॥ [६उ
N] स तामुपस्थितां रामः क्व सीतेत्येवमब्रवीत् । [७
न तामभ्यवदत् सीतां पृष्टा रामेण शोभना ॥३१॥[९उ
N] रावणस्य तु तद् रूपं कर्माणि च दुरात्मनः ।
N] भयात्संस्मृत्य वैदेहीं सा नदी न शशंस ह ॥३२॥[१०
निराशस्तु तया नद्या सीताया दर्शने कृतः ।
३३] उवाच रामः सौमित्रिं दुःखितो दुःखितं वचः ॥३३॥[११
किं नु लक्ष्मण वक्ष्यामि समेत्य स्वजनं वचः ।
३४] मातरं चैव वैदेह्या विना तां महिषीं प्रियाम् ॥३४॥[१२उ
या मे राज्याद्विहीनस्य वने वन्येन जीवतः ।
३५] सर्वं व्यपनयेच्छोकं वैदेही क्व नु सा गता ॥३५॥ [१३
राज्ञो राज्यविहीनस्य राजपुत्रीमपश्यतः ।

---

१. के रा अ ब म—रामः ।
२. के रा ल अ ब म—नदीं ।
३. के रा ल अ ब म—स तामुपस्थितो ।
रा—सभामु० ।
४. अ—स्वाम० ।
५. अ—शोभिता ।
६. अ—वैदेही सा नदीं ।
७. भ च—तु ।
८. रा—वन्ये
९. के रा ल अ ब म—व्यपनयच्छो० ।
१०. भ—राज्ञो राज० ।
च—राजराज्य० ।

३६] मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥३६॥[१४
मन्दाकिनीं जनस्थानमिदं प्रस्रवणं गिरिम् ।
३७] सर्वानेव गमिष्यामि यदि सीता न दृश्यते ॥३७॥ [१५
तथा विलपमानं तं रामं शोकपरायणम् । [N
३८] प्रत्युवाच महाप्राज्ञो लक्ष्मणः परवीरहा ॥३८॥
N] नेह सीता जनस्थाने नापि मन्दाकिनीं गता । [N
अलं मा कुरु सन्तापं क्रियतां धैर्यमात्मनः ॥३९॥
३९] त्वमेव तां महाप्राज्ञ नष्टामधिगमिष्यसि । [N
N] मया सह महाबाहो मा च शोके मनः कृथाः ॥४०॥[N
एवं संभाषमाणौ तावन्योऽन्यं भ्रातरावुभौ ।
४०] वसुन्धरायां पतितं पुष्पमार्गमपश्यताम् ॥४१॥ [२५
तां पुष्पवीथीं वैदेह्या दृष्ट्वा रामो महीतले ।
४१] उवाच लक्ष्मणं दीनो दुःखितो दुःखितं वचः ॥४२॥ [२६
अभिजानामि पुष्पाणि तान्येवैतानि लक्ष्मण । [२७पू
N] अपि नामेह वैदेही भवेत् पर्वतमूर्धनि ॥४३॥
एवं विलप्य बहुशो रामो दुःखसमन्वितः । [N
४३] क्रुद्धोऽब्रवीद् गिरिं तं तु सिंहः क्षुद्रमृगं यथा ॥४४॥[३१
तां दृष्ट्वा हेमगर्भाभां यदि नाख्यासि पर्वत ।

१. कै ल अ भ च—सर्वाननुग० ।
रा—°वाननुगमिष्यन्ति ।
२. ल ब म भ च—तु ।
३. ल ब म—त्वमेवं ।
४. अ—पतितां पुष्पमालाम० ।
५. ल ब म—°जानासि ।
६. कै रा ल ब म—°ब्रवीद्गिरं ।
७. ल—तां ।

४४] पुरी सानूनि सर्वाणि तव विध्वंसयाम्यहम् ॥४५॥[३२
N] मम बाणांशुनिर्दग्धो भस्मीभूतो भविष्यसि ।
असेव्यः सततं चैव निर्द्रुमतृणपल्लवः ॥४६॥ [३५
N] इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण ।
यदि नाख्याति मे सीतामद्य चन्द्रनिभाननाम् ॥४७॥[३६
N] एवं स रुषितो रामो दिधक्षुरिव पावकः ।
४५उ] ददर्श भूमौ संक्रान्तं राक्षसस्य महत् पदम् ॥४८॥[३७
स समीक्ष्य पदं क्रान्तं सीताया राक्षसस्य च । [N
४६] सम्भ्रान्तहृदयो राम उवाच भ्रातरं प्रियम् ॥४९॥
एहि लक्ष्मण पश्यस्व राक्षसस्य महत्पदम् । [N
४७] मिथ्या सन्तर्जितः शैलो न सीता गिरिगह्वरे ॥५०॥[N
तं दृष्ट्वा लक्ष्मणो भीतः पदं विकृतमद्भुतम् ।
४८] तमुवाच ततो रामश्चित्रं विस्फार्य कार्मुकम् ॥५१॥ [N
यमः सपरिवारो वा कालो वा दुरतिक्रमः ।
४९] न तां धर्षयितुं शक्तः पार्श्वतो मम तिष्ठतः ॥५२॥ N

१. ल ब म—पुरः ।
२. भ च—बाणास्त्र ।
३. कै रा अ म—च ।
४. अ ल ब म—मां ।
५. रा अ—सीता मध्यचन्द्र० ? ।
६. भ—पदक्रांतं ।
७. रा ल—नास्ति ।
८. अ—एवं ।
९. च—अतः परमधिकः पाठः—
नाहत्वा सर्वभूतानि निवर्तयति लक्ष्मण ।
१०. भ—न त्वां । च—नैव त्वां ।

अन्तरिक्षं गतो[1] मन्ये सीतामादाय राक्षसः[2] । [N

५०] न ह्यस्यागमनं सौम्य गगने[3] चापि लक्ष्यते ॥५३॥

कं तु खल्विह पृच्छेयं कां दिशं यामि लक्ष्मण । [N

५१] तां दिशं नाधिगच्छामि यत्र सीता हृता भवेत् ॥५४॥

एवमुक्तस्तु रामेण लक्ष्मणः सत्यविक्रमः । [N

५२] रामं शोकाभिसन्तप्त[4]मिदं वचनमब्रवीत् ॥५५॥

संप्राप्य पण्डितः कृच्छ्रं[5] नैवं[6] शोके निमज्जति[7] । [N

५३] मूर्खस्तु कृच्छ्रमासाद्य शिलेवाम्भसि मज्जति ॥५६॥

तं शोकमोहाभिहतं व्याधिः स्पृशति दारुणः । [N

५४] तस्यार्थाः संप्रणश्यन्ति न च शोकात् प्रमुच्यते ॥५७॥

स पण्डितो नरः[8] प्राज्ञः प्रज्ञाकर्मविशारदः । [N

---

१. ग्र—°क्षगतो ।

२. भ—कोषे अत आरभ्य आसर्गसमाप्तिं,सप्ततितमस्य सर्गस्य २६तम-श्लोकोत्तरार्द्धतः सर्गसमाप्तिपर्यन्ताः श्लोका दृश्यन्ते ।

३. च—गमनं ।

४. च—°भिसंतप्तो इदं ?

५. ल ब म—क्लेशं ।

६. रा—नैव शोकात्प्रमुच्यते ?

च—प्रज्ञया ह्यवगाहते ।

७. म—केषे अत परमेकसप्ततितमस्य सर्गस्याष्टमश्लोकाद्वितीय-पादात्सर्गसमाप्तिपर्यन्तः पाठ उद्धृतः ।

८. ख—पंडिततरः ।

५९] अप्राज्ञ इव किं प्राज्ञ[1] भार्याहेतोर्विमुह्यसि ॥२८॥
N] आपत्काले विमूढो हि हेतुना[2]ल्पेन नश्यति ॥२९॥ [N
तं रामः प्रत्युवाचेदं शोकसंमूढचेतनः ।
६०] यथा ब्रवीषि[3] सौमित्रे तत् सर्वं प्रयतावहे ॥३०॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे[4] रामविलापो नाम
एकोनसप्ततितमः सर्गः ॥६९॥

---

१. के रा ल अ ब म भ—प्राज्ञो ।
२. च—हेतुना सह ।
३. के रा ल अ ब म—ब्रवीहि ।
४. अ—लक्ष्मणरामवि० ।

ततः सौम्योऽपि सन् रामः कुपितः[1] समभाषत ।
१] संहृत्येव शशिज्योत्स्नां[2] ज्वलन् सूर्य इवोदितः[3] ॥१॥ [N
असौ लक्ष्मण भूतात्मा नूनं मामवमन्यते[4] ।
२] अनुक्रोशान्मृदुत्वाच्च सदा धर्मानुवर्तिनम्[5] ॥२॥ [N
योऽहं राज्यं परित्यज्य त्यक्त्वा दीनां च मातरम् ।
३] भार्यामेवाग्रतः कृत्वा प्रविष्टो दण्डकं वनम्[6] ॥३॥ [N
तस्य मे धर्मकामस्य स्थितस्य वचने पितुः । [N
४] न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥४॥ [५४
यदा धर्मप्रधानस्य[7] धर्मसेतुर्विपद्यते ।
५] तदा[8] दीनस्य सौमित्रे नास्तिक्यमुपजायते ॥५॥ [N

---

१. कै अ—°तोनुजमब्रवीत् ।
रा—°तो राममब्रवीत् ।
च—°तो भ्रातरं ब्रवीत् ।
भ—'°तरमब्रवी' दित्यपरहस्तेन ।
२. कै रा अ भ—तमीज्योत्स्नां ।
ल ब—तमीं ज्योत्स्नां ।
३. ल ब भ च—इवोदये ।
४. कै रा अ भ—अहो लक्ष्मण धर्मात्मा नूनं मामवमन्यसे ।
ल ब—अहं० ।
५. भ च—°नुवर्तनात् ।
६. अ—वने ।
७. अ—°प्रदानस्य ।
८. भ च—तदामीं तस्य ।

भक्षितायां तु वैदेह्यां हृतायां वापि लक्ष्मण ।
६] केनान्येन[2] प्रियं कर्तुं मम शक्ता[3] महेश्वराः ॥६॥ [५५
भर्तारमपि[4] लोकानां शूरं करुणवेदिनम् ।
७] अज्ञानादवमन्यन्ते[5] सर्वभूतानि लक्ष्मण ॥७॥ [N
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ।
८] निर्वीर्यमिति[6] मन्यन्ते नूनं मां त्रिदशेश्वराः ॥८॥ [५७
मां प्राप्य हि गुणैर्दोषैः[7] संवृत्तं पश्य लक्ष्मण ।
९] अज्ञानात सर्वभूतानां लोकानामभवाय[8] च ॥९॥ [५८
येन सौम्य हृता सीता भक्षिता वा तपस्विनी ।
१०] दृष्टे[9] तस्मिन् भवेत स्वस्ति लोकानां पार्थिवात्मज ॥१०॥ [N
नैव देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
११] किन्नरा वा नरा वापि सुखं[10] प्राप्स्यन्ति लक्ष्मण ॥११॥ [N

---

१. कै—च ।
२. कै रा ल अ ब म—के वान्ये च ।
३. भ च—शक्यं महेश्वरैः ।
४. भ च—कर्तारमपि ।
५. भ च—अज्ञानान्मन्यतेऽशक्तं ।
ल ब—नास्ति ।
६. अ—निर्वीर्यमति० ।
भ—न वीरमिति ।
च—न धीरमिति ।
७. कै रा ल अ ब म—दोषः संवृत्तः ।
८. अ म—०नामभयाय ।
९. अ म—नास्ति ।
१०. रा—दुःखं ।

यदि जीवति वैदेही लोकानां स्वस्ति लक्ष्मण ।
१२] अथ नष्टं जगत् सर्वं विनष्टायां च लक्षय ।
सीतां विना नं जीवामि मुहूर्तमपि लक्ष्मण ॥१२॥ [N
N] मृते मयि मृतं मन्ये त्रैलोक्यं सचराचरम् । [N
ममास्त्रबलसंयुक्तमाकाशं पश्य लक्ष्मण ॥१३॥
N] निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणम् । [६१
सन्निरुद्धग्रहं चापि निवारितदिवाकरम् ॥१४॥
N] विप्रनष्टानिलं (?)नलं शीतांशुद्युतिवर्जितम् । [६२
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ॥१५॥
N] द्रुमवल्लीलतागुल्मविप्रणाशितपादपम् । [६३
अमानुषाणां सौमित्रे शरैरग्निशिखोपमैः ॥१६॥

---

१. कै रा ल अ ब म—नास्ति ।

२. भ च—°मुपलक्षय ।
म—विनष्टमपलक्षयं ।

३. म—च ।

४. कै रा ल अ ब म—संशयानाः ।

५. कै रा अ म—करिष्यन्ति ।
ल ब—चरिष्यन्ति ।

६. कै रा अ म—ह्यत्र ।

७. कै रा ल अ ब म—°क्यचारिणः ।

८. भ च—संनिरुद्धग्रहगणमाच्छादितदिवाकरं ।

९. कै रा ल अ ब म—विप्रनष्टां हि सजलं ।
ल ब—विप्रनष्टं हि सजलं ।
भ—विप्रनष्टानिलं ।

१०. ल ब म—अमानुषं हि ।

N] संभ्रमं जनयिष्यामि सीताधर्षणकोपितः । [N
न चेत् कुशलिनीं तां तु प्रदास्यन्ति महेश्वराः ।
१४] अस्मिन् मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम्॥१७॥ [६४
नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ।
१५] मम चापमुखान्मुक्तै र्बाणैः सर्वं निरन्तरम् ॥१८॥ [६५
अर्दितं घोरनाराचैर्भ्रष्टभ्रान्तमृगद्विजम् ।
N] समाकुलममर्यादं जगत् पश्याद्य लक्ष्मण ॥१९॥ [६६
आकर्णमुक्तैरिपुभिर्जीवल्लोकं दुरासदैः ।
१६] करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ॥२०॥ [६७
मम रोषप्रमुक्तानां सायकानां बलं सुराः ।

---

१. ल ब म—दर्शयिष्यामि ।
अ— दर्शयिष्यन्ति ।

२. रा अ ब—सीतादर्शनको० ।
भ च— सीतापनयने कृते ।

३. रा—नास्ति ।

४. अ— चापमुखान्मुक्तं ।

५. कै—०र्बाणजालैर्नि० । अ—बाणजालनि० ।

६. कै अ भ च—मम० ।

७. भ—०शांतमृ० ।

८. कै रा ०र्जीवलोकदु० ।
भ च—०र्जीवलोकमवारणैः ।

९. ल ब – ०प्रसक्तानां ।
रा कै अ म—०प्रसक्तानां ।

१७] द्रक्ष्यन्त्यद्य विमुक्तानामत्यन्तं दूरगामिनाम॥२१॥ [६८
नैव देवा न गन्धर्वा न दैतेया न राक्षसाः ।
१८] भविष्यन्ति मम क्रोधादद्य लक्ष्मण पश्य माम् ॥२२॥[६९
N याद्दशोऽयं मम क्रोधो वीर्यं चैवं समागतम् ॥२३॥ [N
निरन्तरमिवाकाशं करिष्याम्यद्य सायकैः ।
१९] कालक्षयात्खरस्पर्शैरभिक्रुद्ध इवान्तकः ॥२४॥ [N
२०पू] यथा राजा यथा मृत्युर्यथा कालो यथा विधिः ।
N] मिथ्या नेह प्रवर्तन्ते सर्वभूतेषु लक्ष्मण ॥२५॥ [N
तथा विमुक्ता क्रुद्धेन मया बाणाः समन्ततः ।
N] नाहत्वा सर्वभूतानि वर्तयिष्यन्ति लक्ष्मण ॥२६॥ [N

---

१. कै रा अ म—विमुक्तानां समर्था ।
भ च—विमुक्तानाममर्षाद् ।
२. अ म—दूरचारिणां ।
३. अ—दैत्येया ।
४. कै रा अ म—नार्यं । ल ब—नार्यां ।
५. कै रा अ म—श्रमागतम् ।
६. कै रा ल अ ब म—°च्छर° ।
७. भ च – °मिवान्तकम् ।
८. भ च—यमः ।
९. कै रा ल ब म—सद्यो नेह प्रवर्तेत ।
अ—सद्यो नातिप्रवर्तन्ते ।
१०. ल ब म—रोषेण ।
११. भ च कोषयोः अतः परं—
अजंतमिव चात्यर्थं कूटे मृगमिवार्पितं । इत्यधिकः पाठः ।
अथ च—आसर्गसमाप्तिं द्विसप्ततितमस्य सर्गस्य 'सीताहरणे'त्यादि चतुर्थश्लोकोत्तरार्धतो 'वाक्यमुवाच राम' इत्यन्तः सर्गावसितिं यावत् पाठो दृश्यते । तत्पाठभेदाश्च तत्रैव सर्गे द्रष्टव्याः ।
१२. रा अ—न हत्वा ।

N] नैवेयं धर्षणा शक्या साम्ना हर्तुं शमेन वा ।
२३उ] अद्य पश्यन्तु मे लोकास्त्वयो विक्रममाहवे ।।२७।। [N
आहता मे महाघोरैर्दीप्तैर्बाणैः समन्ततः ।
२४] विबुधा निष्पतिष्यन्ति विशिखैः शकलीकृताः ।।२८।।[N
मया रोषपरीतेन यथेदं पीडितं धनुः ।
२५] अराक्षसमिदं सर्वं जगत पश्याद्य लक्ष्मण ।।२९।। [N
N] तथारूपां च वैदेहीं नादास्यन्ति महेश्वराः ।
२०उ] राक्षसांश्च वधिष्यामि येन सृष्टाश्च राक्षसाः ।।३०।।[७२
अद्य मां विपुलः शोकः प्रदीपयति लक्ष्मण ।
२१] सीताहरणतीव्रोऽसौ दावाग्निरिव पर्वतम ।।३१।। [N
शुभाननाङ्गी गृहधर्मचारिणी
मर्माद्य भार्या यदि दृश्यते न सा ।
२७] सयक्षगन्धर्वपिशाचराक्षसं
जगत सशैलं परिवर्तयाम्यहम ।।३२।। [७३

इत्यार्षे रामायणे आरण्यकाण्डे रामक्रोधो नाम
सप्ततितमः सर्गः ।।७०।।

१. कै रा अ द—कर्तुं ।
२. भ—कोपे अत आरभ्यैतत्सर्गसमाप्तिपर्यन्ताः श्लोका ६९तमे सर्गे द्रष्टव्याः ।
३. म—°परीतेन ।
४. ल ब—चेद् दास्यन्ति ।
५. ल ब—दृष्टाश्च ।
६. रा मा ।
७. अ—पर्वते ।
८. रा अ म—मयाद्य ।
९. अ—रक्षसां ।
१०. कै रा ल ब म भ च—नास्ति ।

तप्यमानं तथा रामं सीताहरणकर्षितम् ।
१] लोकानां शङ्कया[1] युक्तं संवर्तकमिवानलम्[2] ॥१॥ [१
वीक्ष्यमाणं[3] धनुः सज्जं[4] निःश्वसन्तं मुहुर्मुहुः ।
२] हन्तुकामं पशुपतिं क्रुद्धं दक्षक्रतुं यथा ॥२॥ [२
अदृष्टपूर्वं तं क्रोधं दृष्ट्वा तस्य स लक्ष्मणः ।
३] अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥३॥ [३
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
४] न क्रोधवशमापन्नां[5] प्रवृत्तिं कर्तुमर्हसि ॥४॥ [४
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ[6] भुवि क्षमा ।
५] एतच्च[7] नियतं सर्वं त्वयि चानुत्तमं यशः ॥५॥ [५
उच्यमानं मया वाक्यं सत्यं शशिनिभानना ।
६] हितं[8] न प्रतिजग्राह वैदेही जनकात्मजा ॥६॥ [N
अयुक्तं क्रुद्धया वाक्यमुक्तोऽहं परुषं तया ।
७] उत्तरं तस्य वाक्यस्य न वक्तुम[9]हमुत्सहे ॥७॥ [N

---

१. भ च—संशये युक्तं ।
२. ब ल—संवर्तक इवानलम् ।
३. अ—°मानं । च—°माणो ।
४. ल ब म—सज्यं ।
५. अ म—°मापन्नं ।
६. अ—°वायोर्भुवि ।
७. अ—एवं च ।
८. भ च—हन्त ।
९. भ च—गन्तुम° ।

सीतया चोद्यमानस्त्वं गच्छ गच्छेति राघव ।
८] अवेक्षमाणो वैदेहीं त्वत्सकाशमहं गतः ॥८॥ [N
न हि पश्यामि कस्यायं भग्नः सांग्रामिको रथः ।
९] केन वा कस्य वा हेतोः सायुधः सपरिच्छदः॥९॥ [६
खुरनेमिहतश्चायं सिक्तो रुधिरबिन्दुभिः ।
१०] देशो निवृत्तसंग्रामः सुघोरः पार्थिवात्मज ॥१०॥ [८
११उ] एकस्य च विमर्दोऽयं न द्वयोर्वदतांवर ।
११पू] न निवृत्तं हि पश्यामि बलस्य महतः पदम् ॥११॥[८
न चैकस्य कृते लोकानुत्सादयितुमर्हसि ।
१२] युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥१२॥[९
यदा त्वं सर्वभूतानां शरण्यः शरणार्थिनाम् ।
१४] को नु दारप्रणाशं ते साधु मन्येत राघव ॥१३॥ [१०
सरितः सागराः शैला देवगन्धर्वदानवाः ।
१५] नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥१४॥ [११
येन राजन् हृता सीता तमन्वेषितुमर्हसि ।
१६] मद्द्वितीयो धनुष्पाणि र्यत्नमायसहायवान्॥१५॥ [१२

१. ल—चोश्यमा० ? । न्न—चोच्यमान० ।
२. कै रा—अवेक्ष्यमाणा ।
ल व—अनवेक्ष्य तु ।
अ म—अवीक्ष्यमाणो ।
३. कै रा अ भ न्न—°शमिहागतः ।
४. कै अ म—संग्रामिको ।
५. भ न्न—सरस्य ।
६. रा—नमैकस्य ? । अ म—नैव कस्य ।
ल ब—न वैकस्यम् ।
७. ल—°तस्यैव ।
८. भ च—राम ।

समुद्रांश्च विचेष्यावः[1] पर्वतांश्च वनानि च ।
१७] गुहाश्च विविधाकारा नलिनीश्च वनानि च ॥१६॥ [१३
देवगन्धर्वलोकांश्च विचे[2]ष्यावो दिशो दश[3] ।
१८] यावन् नाधिगमिष्यावस्तव भार्यापहारिणम्[3] ॥१७॥ [१४
न चेत् साम्ना प्रदास्यन्ति तां पापास्त्रिदशेश्वराः ।
१९] कोसलेन्द्र ततः पश्चात् प्राप्तकालं करिष्यसि ॥१८॥ [१५
आनु[4]पूर्व्येण धर्मं[5] त्वं[5] कृत्वा लोकाय राघव ।
२०] ततश्छेत्स्यसि[6] नाराचैर्जगत् सर्वं सराक्षसम् ॥१९॥
शिवेन सीतां विनयेन राघव
त्वमत्र न प्राप्स्यसि चेन्नरेन्द्र ।
ततः समुत्सादयितासि[7] लोकान्
२१] महेन्द्रमुख्या[8]न्नितरां शरौघैः ॥२०॥ [१६

इत्यार्षे रामायणे आरण्यकाण्डे लक्ष्मणवाक्यं नाम
एकसप्ततितमः सर्गः ॥७१॥

---

१. ल—विचेष्यामः ।
२. कै रा—विवीक्ष्यावो ।
अ म—निरीक्ष्यावो ।
भ च—नास्ति ।
३. च—नास्ति ।
४. अ—आनुपूर्वेण ।
५. अ—राम त्वं । म—राम त्वां ।
६. ल ब म—°श्छेत्स्यामि ।
७. ल ब म—समुत्पादयितासि ।
च—समुत्सादयिता च ।
८. रा ल म—°मुख्यानितरां ।
भ च—महेन्द्रवज्रप्रतिमैः ।
९. भ च—नास्ति ।
१०. कै रा ल ब भ च—नास्ति ।

एवमुक्तस्तु धर्मात्मा लक्ष्मणेन स राघवः ।
१] प्रतिगृह्य वचस्तथ्यं तद् वनं विचचार ह ॥१॥ [N
स तु बाणधनुष्पाणिर्बद्धासि[1]र्विततेषुधिः ।
२] लक्ष्मणो राघवं दीनः पृष्ठतोऽनुजगाम ह ॥२॥ [N
मोहेन च विलापेन शोकेन च समाहतम्[2] ।
३] क्षुत्पिपासापरिश्रान्तमाशीविषमिवोद्धतम् ॥३॥ [N
N] वज्राग्निसमवेगेन विद्धं[3] शोकमहेषुणा ।[4]
सीताहरणदुःखार्तं[5] व्यथितात्मानमातुरम् ॥४॥ [N
४] हेतुयुक्तं पुनर्वाक्यं लक्ष्मणश्चेदमब्रवीत् ॥५॥
समाश्वस नरश्रेष्ठ प्राणिनां कां[6] न आपदः । [N
५] स्पृशन्त्यनिलवल्लोके[7] क्षणेन व्यथयन्ति[8] च ॥६॥ [N
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसि ।

---

१. रा ब म च—°बद्धासिवित° ।
२. कै रा ल अ ब म—समाहितं ।
३. ल ब—युक्तं ।
४. म च—अतः परमधिकः पाठः—
 अजन्तामिव चात्यर्थं कूटे मृगमिवार्पितम् ।
 अतः परमेकोनसप्ततितमस्य सर्गस्य ५४ तमश्लोकतत्सर्गसमाप्तिं यावत् श्लोका दृश्यन्ते ।
५. रा—दुःखान्तं ।
६. कै रा ल अ ब म—किं ।
७. कै रा अ म—स्पृशंत्यनक° ।
८. कै रा ल अ ब म—विनयन्ति ।

६] प्राकृतश्चाल्पतेजाश्च इतरः कः सहिष्यति ॥७॥ [५
रुषितोऽपि[1] भवांल्लोकांस्तेजसा सादयिष्यति[2] ।
७] आर्ताः प्रजा नरव्याघ्र क नु यास्यन्ति निर्वृतिम् ॥८॥ [६
नहुषस्यात्मजो राजा ययातिः कर्मभिः शुभैः ।
८] गतः शक्रस्य सालोक्यं[3] पुनर्भयश्चापतत् क्षितौ ॥९॥ [८
महर्षेश्च वसिष्ठस्य सौदासेन[4] पुरोधसः[5] ।
९] प्राप्तं पुत्रशतं राज्ञां[6] तथैव[7] च पुनर्हतम् ॥१०॥ [९
या चेयं जगतो माता सर्वलोकनमस्कृता ।
N] अस्यां विचलनं[8] भूमेर्दृश्यते कालसंक्षयात् ॥११॥ [१०
यौ[9] चेमौ[9] जगतो नेत्रे यत्र सर्वं[10] प्रतिष्ठितम् ।
N] आदित्यचन्द्रौ ग्रहणमुपेतौ[11] सुमहाबलौ[12] ॥१२॥ [११

---

१. कै—रुषितो किं ।
भ—रुषितो ह । च—रुषितो हि ।
२. ल ब—सादयिष्यसि । म—साधयिष्यति ।
३. कै रा ल ब म भ च—°क्यमनयाच्चा° ।
४. रा—सौधामेन । ल—सौदामेन ।
५. ल अ ब—पुरोधसा ।
६. रा ल ब—राज्ञस्त° ।
७. ल ब—तस्या ।
८. कै रा अ म—विलोचनं ।
भ च—°पि चलनं ।
९. कै रा ल अ ब म—ये चेमे ।
१०. भ च—धर्मं ।
११. भ च—ग्रहणमभ्युपेतौ ।
१२. कै रा—तौ महाबलौ ।
अ म—यौ महाबलौ ।

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ।
N] न दैवस्य प्रमुञ्चन्ते सर्वभूतातिपातिनः ॥१३॥ [१२
शक्रादिष्वपि लोकेषु वर्तमानौ नयानयौ ।
१०] श्रूयेते[3] नरशार्दूल न त्वं व्यथितुमर्हसि ॥१४॥ [१३
नष्टायामपि वैदेह्यां हृतायामपि वा पुनः ।
११] शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा ॥१५॥ [१४
त्वद्विधा हि न शोचन्ति सततं तत्त्वदर्शिनः ।
१२] तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुगुज्य च ॥१६॥ [१५
न बुद्ध्या निहतः प्राज्ञो विविनक्ति शुभाशुभे । [१६उ
N] न शोचन्ति न हृष्यन्ति तत्त्वेन प्राप्य शुभाशुभम् ॥१७॥ [N
अदृष्टगुणदोषाणामाहितानां च कर्मणाम् ।
१३] अन्तरेण क्रिया येषां फलकाले प्रवर्तते ॥१८॥ [१७
N] ममैवं[11] हि पुरा वीर त्वमेवं[12] बहुशोऽवदः ।
तदिदं स्मारयामि त्वां नोपदेशं करोमि ते ॥१९॥ [N

---

१. ल ब म—देवस्य ।
२. कै ल रा ब म—सर्वभूतानिपातिताः ।
च—सर्वभूतानिपातिनः ।
३. ल ब म—श्रूयते ।
४. कै रा ल अ ब म—हतायामपि ।
५. कै—नु ।
६. कै—स्व० ।
७. कै—विहतः ।
८. कै रा ल अ ब म—स्वेतत्प्राप्य ।
९. कै ल ब—शुभाशुभे ।
१०. रा—०दोषां तामाहितानां ।
भ च—०दोषाणामहितानां ।
११. कै म—मामेव ।   भ च—मां चैवं ।
१२. कै रा म—०मेवं बहुशोवशः ।   अ—०वचः ।
भ च—बहुशोन्वशाः ।

१.४] अनुशिष्याद्धि को[1] हि त्वामपि साक्षाद् बृहस्पतिः। [१८उ
बुद्धिश्च ते महाराज[2] सर्वलोकदुरत्यया[3] ॥२०॥
१.५] शोकेन हि प्रलुप्तं[4] ते ज्ञानं तत् स्मारयाम्यहम् ॥२१॥[१९
दिव्यं तन्मानुषं चास्त्रमात्मनश्च[5] पराक्रमम्[6] ।
१.६] इक्ष्वाकुवृषभावेक्ष्य[7] प्रयतस्व[8] रिपोर्वधे ॥२२॥ [२०
किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ।
१.७] तमेव तु रिपुं पापं विज्ञायोद्धर्तुमर्हसि[9] ॥२३॥ [२१
इत्येवमुक्तः स तु[10][11] लक्ष्मणेन
निवर्त्य बुद्धिं जगतो विनाशात् ।
हा जानकीत्येवमभिप्रतप्तो
N] विनिःश्वसन् वाक्यमुवाच रामः ॥२४॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे रामाश्वासनं नाम
द्विसप्ततितमः[12] सर्गः ॥७२॥

---

१. कै रा ल अ ब म—कोपि ।
२. भ च—महाप्राज्ञ ।
३. ल अ ब म भ च—°के दुरत्यया ।
४. ल ब—विलुप्तं ।
५. भ च—चास्त्रं मानुषस्य ।
६. कै रा ल अ ब म—यथाक्रमं ।
७. कै—°वृषभावीक्ष्य ।
८. ब—प्रयतश्च ।
९. रा ल म—°योद्धन्तुम° ।
१०. ल अ ब—च ।
११. ल ब म भ च—नास्ति ।
१२. कै रा ल ब म भ च—नास्ति ।

उक्तमेवं[1] तु तद्वाक्यं लक्ष्मणेन सुभाषितम् ।
१] सारग्राही महासारं प्रतिजग्राह राघवः ॥१॥ [१
स निगृह्य महाबाहुः प्रवृद्धं[2] कोपमात्मनः ।
२] अवष्टभ्य[3] धनुश्चित्रं दीनो[4] लक्ष्मणमब्रवीत् ॥२॥ [२
किं करोमि नरव्याघ्र क्व[5] गच्छामि च लक्ष्मण ।
३] केनोपायेन पश्येयं सीतामिति विचिन्तय ॥३॥ [३
तं तथा परिजल्पन्तं दुःखितं दुःखचारिणम् ।
४] राममायतरक्ताक्षं पुनः सौमित्रिरब्रवीत ॥४॥ [४
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ।
५] राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम्[6] ॥५॥ [५
सन्तीह गिरिदुर्गाणि निर्झराः कन्दरास्तथा ।
६] गुहाश्च[7] विविधाकारा नानाद्रुमलतावृताः[8] ॥६॥ [६
आवासाः[9] किन्नराणां च गन्धर्वभवनानि च ।
७] तेषु युक्तो मया सार्धं तामन्वेषितुमर्हसि ॥७॥ [७

---

१. कै रा ल अ त्र म—उक्तमेव ।
२. रा—प्रवृद्धो
३. अ – अववद्ध० ।
४. रा—धीरो ।
५. भ च—क वा गच्छामि ।
६. भ च—०लताकुलम् ।
७. रा—महाश्च ? ।
८. भ च—नानावृक्षलता० ।
९. रा—आवासं ।

त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभाः ।
८] आपत्स्वपि न कम्पन्ते[1] वायुवेगैरिवाचलाः ।।८।। [८
९पू] इत्युक्तस्तद्वनं[2] सर्वं चचार सहलक्ष्मणः ।
N] क्रुद्धो रामः स धर्मात्मा सन्धाय धनुषि क्षुरम् ।।९।। [९
अथ पर्वतसङ्काशं छिन्नपक्षं[3] द्विजोत्तमम् ।
१०] ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ।।१०।। [१०पू
तं दृष्ट्वा गिरिसङ्काशं रामो लक्ष्मणमब्रवीत् । [१०उ
११] अनेन सीता[4] वैदेही भक्षिता नात्र संशयः ।।११।।
गृध्ररूपमिदं रक्षो व्यक्तं भ्रमति कानने । [११
१२] भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ।।१२।।
एवं (नं?) वधिष्ये दीप्ताग्रै[5] गृध्रं बाणैरजिह्मगैः । [१२
१३] जातक्रोधः सहस्राक्षो वज्रेणेव विरोचनम् ।।१३।। [N
इत्युक्त्वाभ्यपतद्[6] गृध्रं संधाय धनुषि क्षुरम् ।
१४] क्रुद्धो रामः समुद्रान्तां[7] चालयन्निव[8] मेदिनीम् ।।१४।। [१३
तं दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
१५] अभ्यभाषत[9] पक्षी स[10] राम रामेति राघवम् ।।१५।। [१४

---

१. कै रा अ भ च—आपत्सु न प्रकंपंते ।
२. कै अ—इत्युक्त्वा तद्वनं ।
३. भ च—लूनपक्षं ।
४. कै—भक्षिता सीता वैदेही ।
५. भ च—दीप्ताग्रैः शीघ्रं ।
६. ल ब—°भ्युततद् ।
अ—°ह्मपतत् ।
७. कै ल ब म—समुत्क्रांतां ।
८. कै—°यन्नेव ।
९. अ—अभ्यधावत ।
१०. कै रा ल अ व म—चासकौ ।

यामोपधिमिवापुष्पाम[1]न्वेषसि महावने ।
१६] सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥१६॥[१५
त्वया विहीना वैदेही[2] लक्ष्मणेन च राघव ।
१७] ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥१७॥ [१६
सीतामभ्यवपन्नोऽहं[3] रावणश्च मया रणे ।
१८] विह्वलो विरथश्छत्रः पीडितो[4] धरणीतले ॥१८॥ [१७
एतत् तस्य ध्वजं भग्नमेतत् तस्य शरासनम् ।
१९] एषं[5] तस्य रथो राम[6] भग्नः सांग्रामिको मया ॥१९॥[१८
अत्र युद्धं मया दत्तं रावणस्य पुनः पुनः ।
२०] पक्षपातं नखैः[7] घोरैर्गात्राण्यारुज्य[8] वैरिणः ॥२०॥ [N
परिश्रान्तस्य मे पक्षौ छित्त्वा वृद्धस्य रावणः ।
२१] सीतामादाय वैदेहीमपयातो महाबलः ॥२१॥ [२०
सीतामभ्युपपन्नोऽहं[9] रावणेन हतो रणे । [N
२२] राक्षसेन हतं राम[10] न मां[11] त्वं हन्तुमर्हसि[12] ॥२२॥ [२१

---

१. अ भ—°मिवायुष्याम० ।
 च—°मिवायुष्मन्नन्वे० ।
२. भ च—हीना च वैदेही ।
३. कै रा ल अ ब म—°वपन्नोयं ।
४. कै—पतितो । अ म—पातितो ।
५. भ च—अयं ।
६. अ—वचो नाम ? । च—मग्नो राम ।
७. कै रा म भ च—°र्वैणै०।
८. कै रा ल अ ब म—°पयारुक्ष ।
९. ल अ ब भ च—°मभ्यवपन्नो । म—°मस्यवपन्नो ।
१०. ल ब—पूर्वं ।
११. अ—त्वं मां कर्तुमिच्छसि ।
 ल—मां त्वं त्वक्तुमिच्छसि ।

रामस्तस्यं[1] तु विज्ञाय सीतायाः संश्रितां कथाम् । [२२
२३] गृध्रराजं परिष्वज्य रुरोद सहलक्ष्मणः ॥ २३ ॥ [२३
हतमेवं विमर्देन[2] निःश्वसन्तं पुनः पुनः ।
२४] समीक्ष्य दुःखितो रामः सौमित्रिमिदमब्रवीत्॥२४॥ [२४
राज्यभ्रंशो वने वासो हृता[3] सीता[3] पिता मृतः ।
२५] एकमेकमिदं दुःखं समुद्रमपि शोषयेत् ॥२५॥ [२५
तं[4] पूर्णमपि[4] गच्छेयं पौर्णमास्यां[5] महोदधिम् ।
२६] सोऽपि शुष्येन्[6] नदीभर्ता[6] मम भाग्यपरिक्षयात्[7]॥२६॥[२६
नास्त्यभाग्यतरो[8] लोके मत्तोऽस्मिन्[9] सचराचरे ।
२७] येनेयं महती प्राप्ता घोरा व्यसनवागुरा ॥२७॥ [२७
अयं पितुर्वयस्यो मे गृध्रराजो जरान्वितः ।
२८] शेते विनिहतो भूमौ मम भाग्यपरिक्षयात् ॥२८॥ [२८
इत्येवमुक्त्वा तु वचो[11] राघवः सहलक्ष्मणः ।
२९] जटायुषं[10] स्पृशन् स्निग्धं पितुः स्नेहं[12] प्रदर्शयन् ॥२९॥ [२९

---

१. रा अ—रामस्तत्र ।
२. भ च—विमर्दे तं ।
३. भ च—सीता नष्टा ।
४. भ च—संपूर्णं यदि ।
५. ल ब—पूर्णिमायां ।
६. भ च—शुष्यति सौमित्रे ।
७. ल ब—°विपर्ययात् ।
८. ब—°भ्यतरं ।
९. रा—सत्तास्मि° ।
१०. भ च—जटायुषः ।
११. ल ब—वचनं ।
१२. अ—प्रीतिं ।

निकृत्तपक्षं रुधिरावसिक्तं
तं गृध्रराजं परिरभ्य रामः ।
क्व मैथिली प्राणसमा ममेति
N] विमुच्य चापं निपपात भूमौ ॥ ३० ॥ [३०

इत्यार्षे रामायणे आरण्यकाण्डे जटायुर्दर्शनं नाम
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

१. भ च--वाचं ।

२. भ च--नास्ति ।

३. कै रा ल ब म भ च--नास्ति ।

तौ[1] तस्यापरिपूर्णार्थां श्रुत्वा प्रव्यथितां[2] गिरम्[3] ।
विनेदतुर्भृशं नादं धरण्यां च निपेततुः[4] ॥१॥
मुहूर्तं वीतसंज्ञौ तौ शयानौ निष्पक्रमौ ।
तमसीव[5] च वर्तेते बुबुधाते न किञ्चन ॥२॥
ततः सौमित्रिराश्वस्य[6] मुहूर्तादिव लक्ष्मणः ।
रामं संबोधयामास चरणावभिपीडयन् ॥३॥
महता तपसा[7] वीर महता योगकर्मणा ।
राज्ञा दशरथेनासि[8] लब्धोऽमृतमिवामरैः ॥४॥
स विनेता[9] गुणै विद्धस्त्वद्वियोगेन[10] भूमिपः ।
राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ५ ॥
सुकृताः खलु ते धन्याः पुण्यात्मानश्च ते नराः ।
ये निवृत्तं वनाद् रामं द्रक्ष्यन्ति पुनरागतम्[11] ॥६॥

---

१. म—ततो तस्य परि० । कै रा ल ब म—°पूर्णार्थं ।
अ—तौ तस्य परि० ।

२. कै रा ल अ ब म—प्रव्यथितौ ।

३. कै रा ल ब—गिरा । म—शिरा । ब—गिरौ ।

४. भ च—विनिपेततुः ।

५. कै रा ल अ ब म—तमसा वर्तमानेन ।

६. कै रा ल अ ब म—°त्रिराश्वास्य ।

७. अ—तमसा ।

८. रा म भ च—°थेनापि ।

९. भ च—विचेता ।

१०. भ च—भवद्वृद्धस्त्व० ।

११. भ च—अतः परमधिकः पाठः—
सुखिता तव कौसल्या यो वनाद्राममागतम् ।

आचक्षाणः[1] स्वकं नाम वेपमानोऽपयास्यति[2] ।
यदि मां संस्पृशेदङ्गैर्विषहेत[3] न चान्तकः ॥ ७ ॥
इत्युक्त्वा[4] स किलोच्चक्रासी स्वर्जगाम नगाधिपः ॥८॥
तस्य देवर्षिकल्पस्य त्वमेव सततं प्रियः[5] ।
महायज्ञैश्च कामैश्च लोकेषु विजितात्मनः[6] ॥ ९ ॥
या च त्वां सुषुवे देवी वज्रायुधमिवादितिः ।
धर्मपत्नी नरेन्द्रस्य कौसल्या[7] कुलनन्दिनी[8] ॥१०॥
अरुन्धतीव[9] पुण्याख्या चन्द्रज्योत्स्नेव निर्मला[10] ।
तवाशीर्मङ्गलपरा[11] तप्यते[12] परमं तपः ॥ ११ ॥
वनवासनिवृत्तस्य[13] पितुः कृतवतो वचः ।
आशास्ते दर्शनं वीर[14] सा पुनस्तव संप्रति ॥१२॥

---

१. भ च—आचक्षाणा ।
२. अ—म्रियमानोप० ।
 रा वेपमाणा० ।
३. ल ब—०शेदङ्ग वि० ।
४. अ—इत्युक्तः ।
५. भ च—सुतः ।
६. ल ब—भावितात्मनः ।
७. अ भ च—कौशल्या ।
८. अ—कुलनादिनी ।
९. अ—विरुचंतीव । म—वरुदंतीव ? ।
१०. ब ल—चन्द्रज्योत्स्नाविनिर्मला ।
११. कै रा ल अ ब म—तवास्ति ।
१२. ब ल—तप्यतः ।
 भ च—तथा ते ।
१३. कै रा ल अ ब म—वनवासनिमित्तस्य ।
१४. ल ब—देवी ।

त्वन्निमित्तोपपन्ना या त्वदधीनमुखोदया ।
मा तस्यां मन्दभाग्याया मोघामाशां करिष्यमि ॥१३॥
यस्य शैलवती रम्या सागरान्ता न रोचते ।
त्वन्निदेशादृ योऽनुशास्ति वसुधां भरतः प्रभुः॥१४॥
त्वत्कृतं (? ते) चायतं कालं फलमूलेन वर्तयन् ।
तवैव पादुके वीर पूजनार्हे समाश्रितः ॥ १५ ॥
दिलीपरघुसेक्ष्वाकुव्यूढां वहति यो धुरम् ।
स त्यक्त्वा सर्वकामार्थास्त्वत्कृते मुक्तां वर ॥१६॥
तस्य कर्मफलं कृत्स्नं त्वदधीनं नराधिप ।
तद् यदा निष्फलं न स्यात् तथा यतितुमर्हसि ॥१७॥
न चावसीदनं साधो त्वद्विधस्य महात्मनः ।
अत्यन्तासदृशं कर्म प्राकृतस्येव विद्यते ॥१८॥

---

१. कै रा ल अ ब म—कोसल्यामन्द० ।

२. रा—यत्र ।

३. भ च—त्वान्निर्देशात्पुनः शास्ति ।

४. भ च—त्वत्कृते च वनात् ।

५. कै रा अ म भ च—सर्वं ।

६. ल ब—तथैव ।

७. ल ब—दिलीपपरमेक्ष्वाकु० ।
अ—दिलीपरघुमिक्ष्वाकु० ।

८. भ च—संत्यक्त० ।

९. कै रा भ च—सुखकामार्थां० ।

१०. भ च—अतः परमधिकः पाठः—
मामवेक्ष्य महाप्राज्ञ सर्वथैव यथास्मि ते ।
तं मामेवंविधं भक्तं न विहातुं त्वमर्हसि ॥

११. कै रा म भ च—अकृत्वा स० ।

संविधत्स्वं[1] तथा[2] वीर यथाऽहं भरतस्तथा ।
सीता चार्या च कौसल्या[3] जीविष्यन्ति स्थिते त्वयि ॥१९॥
कृत्स्नस्यापि हि[4] लोकस्य त्वदधीने सुखायुषी[5] ।
किं पुनर्वसुधापाल येषां नस्त्वयि जीवितम् ॥२०॥
एवं संपश्यतः सर्वं जायते करुणा न ते ।
अस्मासु च नरश्रेष्ठ विधत्स्व यदनन्तरम् ॥२१॥
यमाचष्ट[6] जटायुर्वै रावणं नाम राक्षसम् ।
हर्तारमाशु[7] वैदेह्यास्तमेव मृगयावहे ॥२२॥
अथवादिश मामेव यावदेव कृतागसम् ।
अधिगच्छामि[8] तद्रक्षो[9] ह्यपि[10] गर्भगतो[10] यदि ॥२३॥
अथैनमिन्द्राशनितुल्यतेजसा[11]
शरेण रौद्रं[12] त्वमितो वधिष्यसि ।

---

१. ल अ ब—संधत्स्व च ।
२. अ—यथा ।
३. अ भ च—कौशल्या ।
४. भ च—च ।
५. कै अ म—धनायुषे । रा—धनायुधे ।
भ च—सुखासुखे ।
६. भ च—यदाचष्ट ।
७. कै ल ब म—हन्तारमाशु ।
८. ल ब—अहं गच्छामि । अ म—अभि० ।
भ च अभिहन्मि ।
९. भ च—त्वरद्रक्षो ।
१०. अ—ह्यथ गर्भ० ।
भ च—ह्यपि गर्भगतं ।
११. कै रा ल अ ब म—०तुल्यतेजाः ।
१२. ल—बोद्धं । ब—बौद्धं ।

वशी जनस्थानमुपेत्य राक्षसम्
यथावधी[1] राघव संयुगे खरम्[2] ॥२४॥
परेण वेगेन हते[3] तु रावणे
प्रवृद्धरोषस्य[4] धनुर्विकर्षतः ।
कृताप्रियः प्राणभृदद्य कश्चन[5]
न जातु जीवेदिति मे वचः शृणु ॥२५॥
स सत्वरस्य[6] त्वगतस्य[6] दर्शनं
यथाशु[7] विद्येत[7] तथा विधत्स्व च ।
अथास्य निर्मथ्य कृतागसः शिरो
भजस्व सीतां मुदितः प्रमोदयन्[8] ॥२६॥

इत्यार्षे रामायणे आरण्यकाण्डे लक्ष्मणविलापो[9] नाम
चतुःसप्ततितमः[10] सर्गः ॥ ७४ ॥

---

१. भ च—यथावधीत् ।
२. अ—सुखम् ।
३. भ च—हतेन रावणं ।
४. कै रा ल अ ब म—प्रवृद्धवेगस्य ।
५. कै रा ल अ ब म—कश्च ते ।
६. भ च—संतरस्वास्य गतस्य दर्शने ।
च—संतरस्वाद् गतस्य दर्शने ।
७. कै रा अ म—यथा सुविद्येत ।
ल ब—यथायनं विद्म ।
८. ल ब—प्रचोदयन् ।
९. भ च—लक्ष्मणवाक्यं ।
१०. कै रा ल ब म भ च—नास्ति ।

[वं–७३] = [ पञ्चसप्ततितमः सर्गः ] = [ दा–६८ ]

N] लक्ष्मणस्य च वाक्येन चोदितो रघुनन्दनः । [N
रामः प्रेक्ष्य तु तं गृद्ध्रं भुवि रौद्रेण पातितम् ।
१] सौमित्रिं मित्रसम्पन्नमिदं वचनमब्रवीत् ॥१॥ [१
ममायं नूनमर्थेषु वर्तमानो विहङ्गमः ।
२] राक्षसेन हतः संख्ये प्राणांस्त्यक्ष्यति दुस्त्यजान् ॥२॥ [२
N] इदमस्य शरीरं वै गतप्राणं प्रदृश्यते ॥३॥ [३पू
यावदेवं सुसंज्ञोऽयं यावच्छक्नोति भाषितुम् ।
४] तावत् पृच्छाम्यहं सीतां तं चापि पिशिताशनम् ॥४॥ [N
जटायुर्यदि शक्नोपि वाचो मां भाषितुं पुनः ।
५] सीतामाख्याहि भद्रं ते कं च देशं हृतेति सा ॥५॥ [४

१. अ—तु ।
२. भ च—नास्ति ।
३. भ च—राक्षसेन्द्रेण ।
४. रा—मित्रसंस्पर्श० ।
५. भ च—पुरा देहं ।
६. भ च—यावदेष ससंज्ञोयं ।
७. कै रा ल ब—यावत् ।
८. भ च—प्रक्ष्याम्यहं ।
९. अ म—पिशिताशिनम् ।
१०. कै रा ल अ ब भ च—जटायो ।
११. भ च—वाचमाभाष्यतां ।
१२. ल ब म—गतेति ।

त्वामनामयमव्यग्रं संरूढव्रणमुत्सहे ।
६] कर्तुं वर्षसहस्राणि जीवन् वै विचरिष्यसि ॥६॥ [N
किं निमित्तं हरेत् सीतां रावणस्य च किं मया ।
७] अपराधं? (द्धं) कं वा दृष्टा रावणेन मम प्रिया ॥७॥ [५
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् ।
८] सीतया कानि चोक्तानि तस्मिन् काले द्विजोत्तम ॥८॥ [६
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः ।
९] क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥९॥ [७
११पू] तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ।
वाचावसन्नया रामं जटायुरिदमब्रवीत् ॥१०॥ [८
१२] सा हृता राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय विषमां वातदुर्दिनसंकुलाम् ॥११॥ [९
१३] परिश्रान्तस्य मे तात पक्षौ च्छित्त्वा निशाचरः ।
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ॥१२॥ [१०
१४] उपरुध्यन्ति मे प्राणा दृष्टि भ्रमति राघव ।
पश्यामि वृक्षान् सौवर्णान् शिरसो धूतमूर्धजान् ॥१३॥ [११

---

१. के रा ल अ ब म—संरूढप्राण० ।
२. कै—कथं ।
३. ल ब—हरत् । अ म—हृता ।
४. अ म—सीता ।
५. कै रा ल अ ब म—कृतं दृष्ट्वा ।
६. अ—किं कर्म । म—किं कर्मः ।
७. म—०न्तमनातुरम् ।
८. रा—प्रयाणो ।
९. म—०भ्रंसति ? ।
१०. भ च—शिरसा वृत० ।

१.५] येन राम मुहूर्तेन सीतामादाय रावणः ।
१.६पू.] तस्मिन् नष्टं धनं स्वामी क्षिप्रं संप्रतिपद्यते ॥१.४॥ [१.२
न हि व्यथा त्वया कार्या जनकस्यात्मजां प्रति ।
१.७] वैदेहीं रंस्यसे पत्नीं हत्वा तं राक्षसं रणे ॥१.५॥ [N
१.८उ] असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ।
आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषम् ।१.६। [१.५
१.९] इदं चोवाच वचनं म्रियमाणो विहङ्गमः ।
२०पू.] सर्वतश्चारयन् दृष्टिं रामं तत्राश्रुविक्लवम् ॥१.७॥ [N
पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च ।
२१.] इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः ॥१.८॥ (१.६
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।
२२] त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसा ॥१.९॥ [१.७

---

१. ल ब—दृष्टं ।
२. कै रा ल अ ब म—धनं स्वामी ।
३. ब ल—तत्प्रतिपद्यते ।
रा अ—स प्रतिपद्यते ।
४. भ च—अतः परमधिकः पाठः—
वृन्दो (विन्दो ?) नाम मुहूर्तोऽसौ तं च नाबुद्ध राक्षसः ।
झषो लोहामिषं प्राश्य क्षिप्रं स विनशिष्यति ॥
५. ब भ च—त्वया व्यथा ।
६. ल ब भ च—वैदेह्या ।
७. ल ब भ च—पत्न्या ।
८. अ असंपूर्णस्य ।
९. भ च—दृष्टिमास्थिराम० ।
कै रा अ ल ब—°तत्रास्तु० ।
१०. अ—दुर्मुचान् ।
११. अ—कृताञ्जलिं । म—कृतांजलिः ।

सन्निपत्य शिरो भूमौ प्रसार्य[1] चरणौ तथा ।
२३] विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥२०॥ [१८
व्यापन्नं प्रेक्ष्य तं गृध्रं गतासुमचलोपमम् ।
२४] रामः सुबहुभिर्दुःखैर्दीनं लक्ष्मणमब्रवीत् ॥२१॥ [१९
बहूनि रक्षसां वासे वर्षाणां[2] वसता[3] सुखम् ।
२५] अनेकानि सहस्राणि वाहितानीह[4] पक्षिणां[5] ॥२२॥ [२०
असौ वै दण्डकारण्ये चिरकालं सुखं स्थितः ।[6]
२६] सोऽयमद्य हतः शेते[7] कालो हि दुरतिक्रमः ॥२३॥ [२१
न मे कार्यमिदं युक्तं मृतं त्यक्त्वा जटायुषम् ।
व्रजाम्यसंस्कृतं[8] त्वेनं गृध्रराजं पितुः समम् ॥[9]२४॥ [N
२७उ] इत्याह लक्ष्मणं रामो मुखेन परिशुष्यता ॥२५॥ [N
गृध्रो[10] राज्यं परित्यज्य[11] पितृपैतामहं महत् ।
२९] मम हेतोरयं[12] प्राणान् मुक्तवान् पतगेश्वरः ॥२६॥ [२३
सर्वत्र खलु[13] दृश्यन्ते साधवो धर्मचारिणः ।

---

१. रा ल अ म—प्रसज्य ।
२. भ च—वर्षाणि ।
३. ल अ ब म—वसतः ।
४. भ च—विहृतानीह ।
५. अ—पक्षिणः ।
६. भ च—अनेन दण्डकारण्ये चिरकालमुपोषितं ।
७. अ—शेषे ।
८. कै ल भ—व्रजामि संस्कृतं ।
९. भ—अपरहस्तेन प्रान्तभागे लिखितम् ।
च—नास्ति ।
१०. ल ब म भ च—गृध्रराजं ।
११. भ च—परिष्वज्य ।
१२. भ च—हेतोः प्रियान् ।
१३. रा—खल्वदृश्यंते ।

३०] शूराः शरण्याः सौमित्रे तिर्यग्योनिगता[1] अपि॥२७॥[२४
[2]अयं पतगराजो हि[2] सानुक्रोशः[3] सुहृत्प्रियः ।
३१] मम हेतोः पराक्रान्तो गतः स्वर्गं न संशयः॥२८॥ [N
पुत्रैरपत्यैर्दारैश्च परिक्षीणो[4] महाबलः ।
३२] अनाथ इव धर्मात्मा गतो वैवस्वतक्षयम् ॥२९॥ [N
सीताहरणजं दुःखं न मे वीर तथा भवेत् ।
३३] यथा विनाशो गृध्रस्य मत्कृते च परन्तप॥[6]३०॥ [२५
राजा दशरथः श्रीमान् यथा मम महायशाः[5]।
३४] पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥[6]३१॥ [२६
लक्ष्मणाहर काष्ठानि निर्मथिष्यामि पावकम् ।
३५] गृध्रराजं दहिष्यामि मत्कृते निधनं गतम् ॥३२॥ [२७
देहं पतगराजस्य[7] चितामारोप्य लक्ष्मण ।
३६] [8]अहं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥३३॥ [२८
या गतिर्धर्मशीलानामाहिताग्नेश्च या गतिः ।

---

१. भ च—°निगतेष्वपि ।
२. अ—अपेतं नागराजोसौ ।
कै रा ल—°पतगराजोसौ ।
भ च—°राजो वै ।
३. ल ब—सारक्रोशः ।
४. कै रा अ—परिहीनो ।
५. ल ब—महायशः ?
६. भ—अपरहस्तेन प्रान्तभागे लिखितम् ।
७. कै रा अ म—पतगनाथस्य ।
८. भ च—इमं ।

N] अपरावर्तिनां या च या च भूमिप्रदायिनाम् ।[2] [२९
शरणागतिनां[1] या च गोहिरण्यप्रदायिनाम् ॥३४॥ [N
N] मया त्वं[3] समनुज्ञातो गच्छ[5] लोकाननुत्तमान् ।
N] गृध्रराज महासत्त्व संस्कृतस्त्वं मया गतः[4] ॥३५॥ [३०
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
३७] ददाह रामो धर्मात्मा स्वबन्धुमिव[6] दुःखितः ॥३६॥ [३१
दग्ध्वा च सहसौमित्रिर्वनं गत्वा च वीर्यवान् ।
N] स्थूलान्[7] हत्वा महारोहीं?(ही)ननुस्मरति[8] तं द्विजम्[9] ॥३७॥ [३२
रोहिमांसानि[10] चोद्धृत्य पिण्डीकृत्वा महायशाः ।
३९] कुशानादाय रामः स वने[11] हरित[12]शाद्वले ॥३८[13]॥ [३३
यत्प्रेतकर्म[14]कार्यं[14] च[14] कथयन्ति[15] द्विजातयः ।

---

१. ल ब—शरणागतानां ।
२. रा—नास्ति ।
३. भ च—तां ।
४. भ च—गतिं ।
५. भ च—व्रज ।
६. कै ल ब म—सुबन्धु० ।
७. भ—स्थूलां । च—स्थूलं ।
८. भ च—वरारोहीमनुस्मरत ।
९. च—द्विजातयः इति ३९तमश्लोकस्य द्वितीयपादेन सम्बन्धः ।
१०. कै रा ब म भ च—रोहीमां० । अ—रोहमां० ।
११. भ—रम्ये ।
१२. रा ल ब—हरित० ।
१३. च—नास्ति ।
१४. कै रा ल—यत्प्रेतस्य धर्मकर्मत्वं ।
अ म—यत्प्रेतधर्मकर्मत्वं ।
भ—यत्तत्प्रेतस्य धर्मस्य ।
च—नास्ति ।
१५. च—नास्ति ।

४०] तत् प्रेतगमनं तस्य क्षिप्रं रामश्चकार ह ॥३९॥ [३४
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
४१] उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥४०॥ [३६
स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षितुल्येन च तेन संस्कृतो[1]
४२] जगाम पुण्यां गतिमात्मनः शुभाम् ॥४१॥ [३७

इत्यार्षे रामायणे आरण्यकाण्डे जटायुः संस्कारो नाम[2][3]
पञ्चसप्ततितमः सर्गः ॥७५॥

---

१. भ—महर्षिकल्पेन च संस्कृतस्तथा ।
च—महर्षिकल्पेन च सस्कृतस्तथा ।
२. ब—नास्ति ।
३. ब—जटायुषः संस्कारः ।
ल—जटायुः संस्कारः ।
४. कै रा ल ब म भ च—नास्ति ।
५. ल ब—नास्ति ।

कृत्वैवमुदकं तस्मै तावुभौ रामलक्ष्मणौ । [१पू
१] भ्रातरौ मेघसंकाशौ शोकव्याकुलचेतनौ ॥१॥ [N
ततस्त्वस्तं गते सूर्ये संस्थितौ तौ निजाश्रमे ।
२] नयतुस्तां निशां तत्र दुःखितौ रामलक्ष्मणौ ॥२॥ [N
ततः शून्यं निवासं तं परित्यज्य तु राघवौ । [N
३] अन्वेषन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥३॥ [१उ
तौ दिशं पश्चिमां गत्वा शरचापासिधारिणौ ।
४] अविप्रहतमिक्ष्वाकू पन्थानं प्रतिपेदतुः ॥४॥ [२
फलैः पुष्पैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ।
५] आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥५॥ [३
व्यतिक्रम्य तु वेगेन व्याघ्रसिंहनिषेवितम् ।
६] सुभीमं तं महारण्यं व्यतियातौ महाबलौ ॥६॥ [४

---

१. ल ब म—सुस्थितौ ।

२. भ च—वास आश्रमे ।

३. भ च—न शिष्याते ।

४. अ—तत् ।

५. अ—°हितमिक्ष्वाकुपं° ।

ल—अवग्रहतामिक्ष्वाकुपं° ।

म—अविप्रहितमिक्ष्वांत° ।

६. भ च—फुल्लैश्च वृक्षैर् ।

७. म—°र्गताभिश्च ।

८. ब ल—°वेशेन ।

ततः परं जनस्थानात् त्रिक्रोशं चापि राघवौ ।
७] क्रौञ्चाटवीं विविशतुर्गहनं वनमोजसा ॥७॥ [१८
नानामेघचयप्रख्यं प्रहृष्टमिव पर्वतम् ।
८] नानावर्णैः शुभैः पुष्पैर्मृगपक्षिगणायुतम् ॥८॥ [१६
दिदृक्षमाणौ वैदेहीं तद्वनं तौ निरीक्षतुः ।
९] तत्र तत्र विचेष्टन्तौ सीताहरणकर्षितौ ॥ ९ ॥ [१७
लक्ष्मणस्तु महातेजाः सत्यवान् शीलवान् शुचिः ।
१०] अब्रवीत् प्राञ्जलिर्वाक्यं भ्रातरं दीनचेतसम् ॥१०॥ [२०
स्पन्दते च दृढं बाहुरुद्विग्नमिव मे मनः ।
११] प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥११॥ [२१
तस्मात् सज्जीभवत्वार्यः कुरुष्व गमने मतिम् ।
१२] इमानि ह्यनिमित्तानि सद्यः शंसन्ति मे भयम् ॥१२॥[२२
एष वञ्जुलको नाम पक्षी परमदारुणः ।
१३] आवयोर्विजयं युद्धे शंसन्नेव विनन्दते ॥१३॥ [२३
तयोरन्वेषतोरेवं सर्वं तद् वनमोजसा ।
१४] संजज्ञे विपुलः शब्दो भञ्जन्निव महद्वनम् ॥१४॥ [२४

---

१. रा म—चाप्य । भ च—प्राप्य ।
२. कै रा अ—क्रौञ्चावटीं ।
३. भ—वानावर्ण ।
४. कै—तद्वने ।
५. अ—विचेष्टन्तौ ।
६. कै रा अ म भ च—मे ।
७. ल व—कुरुष्वागमने ।
८. भ च—वंजुडको ।
९. अ ब—विनिंदते । भ च—विनर्दते ।

संवेष्ट्[1]यत इवात्यर्थं गहनं मातरिश्[2]वना ।
N] वनस्य तस्य शब्दोऽभूद् दिवमापूरयन्निव ॥१५॥ [२५
तं शब्दं वीक्षमाणै[3]स्तु रामः सौमित्रिणा सह ।
N] ददर्श सुमहाका[4]यं राक्षसं घोरदर्शनम् ॥१६॥ [२६
N] आसेदतुस्ततस्तस्य तावुभौ प्रमुखे स्थितौ ।
१४उ] विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ १७ ॥ [२७
लोमभि र्निचितं तीक्ष्णै[5]र्महागिरिमिवोच्छ्रितम् ।
१५] नीलमेघनिभं रौद्रं मेघदु[6]न्दुभिनिःस्वनम् ॥१८॥ [२८
महाव[7]र्ष्मेण नीलेन विपुले[8]नायतेन च । [२९पू
१६] एकेनो[9]रसि रौद्रेण नयनेन विवर्तिना ॥१९॥
महादं[10]ष्ट्रं महानादं[11] लेलिहानमिवान्तकम् । [३०
१७] भक्षयन्तं महारौद्रं घोरानृक्ष[12]मृगद्विपान् ॥२०॥

---

१. अ—संवेष्टत ।
२. अ मातरिष्वनौ ।
३. रा अ—वीक्ष्यमाणौ ।
भ च—कांक्षमाणौ ।
४. अ म—सुमहावीर्यं ।
५. ल ब—°र्निशितं ।
६. भ च—मेघस्तनितनि० ।
७. कै रा अ म—महावर्षेण । कै—कोषे तु 'महावर्षेण' इत्यस्य स्थाने 'महावक्त्रेण' इति संशोध्य कृतम् ।
८. अ—विपुलेन यतेन ।
९. कै रा ल अ ब म—एकैकेनाति० ।
१०. कै रा अ भ च—महानादं महादंष्ट्रं ।
११. ल ब भ च—महावक्त्रं ।
१२. कै रा ल ब—घोरान्वृक्ष० ।
अ—घोरानृक्षमृगद्विजान् ।

दीर्घौ भुजौ विकुर्वाणो तावुभौ योजनायतौ । [३१

१८] कराभ्यां विविधान् गृह्णन् विचित्रान् मृगपक्षिणः॥२१॥[३२पू

आकर्षन्तं विकर्षन्तमनेकान् मृगयूथपान् ।

१९] स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ॥२२॥ [३२उ

अथ तौ समतिक्रम्य क्रोशमात्रं त्वपश्यताम् ।

२०] महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ॥२३॥ [३३

स घोररूपोऽधमात्मा क्षुधार्तो जगृहेऽथ तौ । [३४

N] खड्गिनौ दृढधन्वानौ तिग्मबाणधनुर्धरौ ॥२४॥ [३५पू

कबन्धेनातिकायेन संमूढौ दीर्घबाहुना । [N

२१] भ्रातरौ वैरिणा प्राप्य कृष्यमाणौ महाबलौ॥२५॥ [३५उ

२२पू] दीर्घौ ददृशतु घोरौ बाहू परिघसन्निभौ ।

महाजगरसंकाशौ खरैर्लोमभिराचितौ ॥२६॥ [N

१. कै रा अ व विकुर्वाणौ ।
२. भ—योजनायतं ।
३. भ च—गृह्य ।
४. कै रा ल व—विविधान् । भ च—निगृह्णान् ।
५. भ च—विकृण्वन्त० ।
६. म—प्रसन्नयोः । भ च—प्रमत्तयोः ।
७. ल व—च पश्यतां । अ म—तु पश्यतां ।
८. भ च—दुष्टात्मा ।
९. रा—खड्गिधन्वौ ।
१०. व ल—तथा बाण० ।
११. भ च—संगूढौ ।
१२. भ च—वैरिणं ।
१३. भ च—०वीरौ ।
१४. अ—परमस० ।

२२] तीक्ष्णरोमनखौ[1] बाहू पञ्चास्याविव पन्नगौ ॥२६॥
ताभ्यां तु कृष्यमाणौ तौ बाणपातादुपागतौ[2] । [N
२३] कृच्छ्रेण तदुरस्यास्यं तस्य दृष्ट्वा व्यवस्थितौ ॥२७॥
न शशाक स तौ वीरौ भ्रातरौ रामलक्ष्मणौ । [N
२४] प्रक्षेप्तुमास्ये बाहुभ्यामवष्टभ्य स्वतेजसा ॥[3]२८॥
तावुवाच महाबाहुः कबन्धो दानवोत्तमः ।[3] [N
२५] शरचापधरौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥२९॥ [N
कौ युवां[4] वृषभस्कन्धौ[4] खड्गबाण[5]धनुर्धरौ ।
२६] घोरं वनमिदं प्राप्तौ मम भक्ष्य[6]मुपस्थितौ ॥३०॥ [४२
तच्च[10] ब्रूतां[8] यथातत्त्वं[7] किमर्थमिह[9] चागतौ[9] ।
२७] इमं[11] देशमनुप्राप्तौ क्षुधार्तस्येह[12] तिष्ठतः ॥३१॥ [४३
N] सबाणायुधखड्गौ तु[13] तीक्ष्णशृङ्गाविवर्षभौ ।

---

१. भ च—°रोमसुखौ ।
२. भ—°तमुपागतौ ।
३. रा—नास्ति ।
४. भ च—युवामृषभ° ।
५. भ च—खड्गचाप° ।
६. भ च—भक्ष्यावु° ।
७. भ च—°तत्त्वं ।
८. भ—ब्रूत ।
९. भ च—यथातथ्यं ।
कै रा अ म—किंमर्थं वामिहागतौ ।
१०. ल ब—युवां कौ ताविहागतौ ।
११. रा अ भ च—इदं ।
१२. कै रा अ म—क्षुधार्तस्येव ।
१३. कै रा अ म भ च—च ।

N] विनदन्तावुभावास्यमुग्रमेवं नयाम्यहम् ॥३२॥ [४४
२८पू] तस्य तद्वचनं श्रुत्वा कबन्धस्य रघूत्तमः । [४५पू
आत्मानमाचचक्षेऽथ सीताहरणमेव च ॥३३॥
N] राज्ञो दशरथस्याहं पुत्रो राम इति श्रुतः । [N
पित्रा नियुक्तो वृद्धेन प्रियावचनकारिणा ॥३४॥
N] लक्ष्मणेन सह भ्रात्रा भार्यामादाय निर्गतः । [N
सा च मे रक्षसा भार्या हृता कमललोचना ॥३५॥
N] तामन्विष्यन् सह भ्रात्रा वने पुरुषवर्जिते । [N
शोकदुःखसमाक्रान्तो बाहुमध्यं तवागतः ॥३६॥
N] राघवेणैवमुक्तस्तु कबन्धो दानवोत्तमः । [N
क्रोधमाहारयत् तीव्रं वचनं चेदमब्रवीत् ॥३७॥
N] सभार्यस्य वने वासः सर्वथा धर्मदूषणः । [N
आयुधेन च किं कार्यं यतिनो वनवासिनः॥३८॥
N] तच्छ्रुत्वा घोरसंकाशं कबन्धोक्तं सुदारुणम् । [N
२८उ] उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥३९॥ [४५उ
कृच्छ्रात् कृच्छ्रतरं पश्य दारुणं सत्यविक्रम ।

---

१. भ च—°वास्यमात्मनो वै ।
२. अ—°चचक्षे च ।
३. ब म—वियुक्तो ।
४. भ च—च ।
५. कै रा—°मन्वेषन् । अ भ च—°मन्वेष्यन् ।
६. कै रा ल अ ब म—°माक्रान्तौ बाहुमध्यं तवागतौ ।
७. ल ब म भ च—यतिनोर्वनवासिनोः ।
८. भ च—वचनं घोरं ।

२९] व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम्॥४०॥[४६
कालस्य[1] सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ।
३०] आत्मानं मां च काकुत्स्थ व्यसने[2] पश्य मोहितौ॥४१॥[४७
शूराश्च बलवन्तश्च कृतास्त्राश्च नरा रणे ।
३१] कालाभिपन्नाः सीदन्ति बालुकासेतवो[3] यथा॥४२॥ [४८
इति ब्रुवाणं दृढसत्यविक्रमं
महारथो दाशरथिः प्रतापवान् ।
अवेक्ष्य[4] सौमित्रिरुदार[5]विक्रमः
३२] स्थिरां मतिं स्वां मतिमांस्तदाकरोत् ॥४३॥ [४९

इत्यार्षे रामायणे आरण्यकाण्डे कबन्धदर्शनं नाम
षट्सप्ततितमः सर्गः ॥७६॥

---

१. ल ब—कालगेषु० ।
२. कै रा अ म—व्यलनं ।
३. भ च—यथा बालुकसेतवः ।
४. अ ब म—अवीक्ष्य ।
५. ल ब—सौमित्रिसुदा० ।
६. भ च—नास्ति ।
७. कै रा ल ब म भ च—नास्ति ।

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
१] बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥१॥ [१
तिष्ठतः ? (थः) किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
२] आहारार्थं तु संसृष्टौ मम न प्रतिजल्पथः ॥२॥ [२
तच्छ्रुत्वा लक्ष्मणं रामः प्राप्तकालं हितं वचः ।
३] उवाचार्थं समापन्नो विक्रमे धृतनिश्चयः ॥३॥ [३
त्वां च मां च पुरा नूनमत्त्ययं राक्षसाधमः ।
४] तस्मादसिभ्यामस्याशु बाहू च्छिन्द्वावै लक्ष्मण ॥४॥ [४
ततस्तु देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
५] बाहू तस्यांशदेशाभ्यामुभावेव न्यकृन्तताम् ॥५॥ [५

१. भ च—तिष्ठध्वं ।
२. ल ब—किमु ।
अ म—क नु । भ च—किञ्च ।
३. भ च—आहारार्थौ ।
४. अ—प्राप्तकाले हितं ।
ल ब—प्राप्तकालमिदं । भ च—प्राप्तकालहितं ।
५. अ—°चार्थसमापन्नो ।
६. रा—धृतनि० ।
७. म—नूनं मत्र्यंत्रं ।
८. ब—राक्षसाधिपः ।
९. कै रा ल ब—बाहुं ।
१० कै म भ च—छिंदाव ।
११. कै रा ल अ ब म—बाहू तस्य प्रदेशाग्रात् वीरौ तौ ।
१२. कै रा अ म—सन्न्यकृन्ततां । ल ब—सन्न्यवर्तता ।

दक्षिणो दक्षिणं बाहुं[1] सुसक्तमसिना ततः[2] ।
६] रामश्चिच्छेद खड्गेन सव्यं वीरश्च लक्ष्मणः ॥६॥ [९
स पपात महाकायश्छिन्नबाहुर्[3] महास्वनः ।
७] स्वर्गं[4] गां च दिशश्चैव नादयन् जलदो यथा ॥७॥ [१०
सन्निकृत्तौ[5] भुजौ[6] दृष्ट्वा शोणितौघपरिप्लुतौ ।
८] पुनः पप्रच्छ[7] तौ वीरौ कौ युवामिति[8] भणयताम् ॥८॥ [११
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः[9] ।
९] शशंस सर्वं काकुत्स्थः कबन्धस्य महाबलः ॥९॥ [१२
अयमिक्ष्वाकुदायादो रामो नाम नरर्षभः[10] ।
१०] अस्यैवावरजं[11] विद्धि भ्रातरं मां[12] च लक्ष्मणम् ॥१०॥ [१३
अस्य त्वेवंप्रभावस्य वसतो विजने वने ।
११] रक्षसापहृता भार्या यामन्वेष्टुमिहागतः ॥११॥ [१४

---

१. ब—बाहुं सुमुक्त० । भ च—बाहुमासक्त० ।
२. ल ब म—सह ।
३. कै रा ल ब म—छिन्नकायो ।
४. भ च—खं च ।
५. कै रा ल अ ब म—सन्निवृत्तौ ।
६. कै रा म—तु तौ ।
७. ल ब म—पप्रच्छतुर्वीरौ ।
८. भ—०मित्यजल्पतां ।
च—०मिति जल्पतां ।
९. ल अ ब म—साधुलक्षणः
१०. भ च—महायशाः ।
११. अ—०वावरणं ? ।
१२—अ—रामलक्ष्मणं ? ।

त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ।
१२] आस्येनोरसि दीप्तेन[1] भग्नजंघः[2] प्रवर्तसे ॥१२॥ [१६
एवमुक्तः कबन्धस्तु लक्ष्मणेन महात्मना ।
१३] उवाच परमप्रीतस्तदिन्द्रस्य वचः स्मरन् ॥१३॥ [१७
स्वागतं वां नरश्रेष्ठौ[3] दिष्ट्या पश्यामि चाप्यहम् ।
१४] दिष्ट्या[4] चेमौ निकृत्तौ[5] मे युवाभ्यामायतौ भुजौ॥१४॥[१८
ममाप्यनेन[6] रूपेण निर्वेदः सुमहानभूत् ।
१५] मृत्पिण्डभूत[7] एकस्थो जीवलोकविगर्हितः ॥१५ [N
विकृतः पिशिताहारः सर्वसत्त्वभयावहः ।
१६] न किंचिद् वर्नजं सत्त्वं बाहुमध्यमुपागतम् ॥१६॥ [N
मृगं[9] वा महिषं वापि शार्दूलमथ[10] मानुषम्[11] ।
१७] न वर्जयाम्युपगतं[8][12] क्षीणपुण्यः क्षुधान्वितः ॥१७॥ [N
व्यसने मज्जता घोरे शोके महति तिष्ठता ।

१. ल ब—क्षिप्तेन ।
२. भ च—भग्नजंघोपवर्तसे ।
३. भ च—नरव्याघ्रौ ।
४. अ—दृष्ट्वा ।
५. कै ल भ ब म—निवृत्तौ ।
६. ल ब म भ—ममाथ तेन ।
७. ल ब—°पिण्ड एव ।
८. भ च—वर्जयन् ।
९. अ—मृतं ।
१०. अ - °लमिव ।
११. कै—नास्ति । पश्चात्प्रान्तभागे लिखितम् ।
१२. भ च—°याम्युपायान्तं ।

१८] राघवौ यन्मया दृष्टौ[1] नास्ति पुण्यतरो[2] मया[3]॥१८॥ [N
सत्यसन्धौ तथा वीरौ धार्मिकौ सत्यविक्रमौ ।
१९] संहितौ[3] भ्रातरौ दृष्ट्वा[3] मुक्तोऽहं पापजीविताद् ॥१९॥ [N
रूपवानहं[4]मप्यासं कन्दर्पसदृशो[5] युवा ।
२०] सोऽहमात्मापचारेण प्राप्तो रूपविपर्ययम् ॥२०॥ [N
विरूपं यच्च मे रूपं चेदं लोकभयावहम्[6] ।
२१] शापदोषादिदं प्राप्तं विकृतं घोरदर्शनम् ॥२१॥ [१९
जानतापि मया वीरौ भ्रातरौ रामलक्ष्मणौ ।
२२] गृहीतौ शापमोक्षार्थं तच्च मे क्षन्तुमर्हथः ॥२२॥ [N
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयान्मया ।
N] शृणुतां[7]?(तं) तन्नरव्याघ्रौ तत्त्वतः शंसतो मम ॥२३॥ [१९पू
N] यथा मम पुरावृत्तं रूपस्य[8] च विपर्ययम्?(यः) ॥२४॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे कबन्धबाहुच्छेदनं नाम
सप्तसप्ततितमः सर्गः ॥ ७७[10] ॥

१. कै रा—जन्मिकौ दृष्ट्वा । ल अ ब म—जन्मतो दृष्ट्वा ।
२. कै रा—धन्यतरो । म—नास्ति ।
३. म—नास्ति ।
४. के रा अ म—रूपवान्सहितो० ।
५. कै रा अ म—कन्दर्पसहितो ।
६. अ—लोके भया० ।
७. ब अ ल—शृण्वतां ।भ च—शृणुध्वं ।
८. कै रा ल अ ब म— रूपस्यास्य ।
९. कै रा ल ब म भ च—नास्ति ।
१०. भ च—कोषयोः सर्गसमाप्तिर्न दृश्यते । भ—कोषस्य च प्रान्तभागे अपहस्तेन सर्गसमाप्तिरपि दर्शिता ।

रूपमासीन्ममाचित्रं त्रिषु लोकेषु विश्रुतम् ।
२३] यथा सोमस्य शक्रस्य सूर्यस्य च यथा पुनः ॥१॥ [१
सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ।
N] ऋषीन् वनगतान् वीरो त्रासयामि यतस्ततः ॥२॥ [२
ततः स्थूलशिरा नाम महर्षिः कोपितो मया ।
N] संचिन्वन् विविधान् वन्यान् रूपेणानेन धर्षितः ॥३॥ [३
तेनाहमुक्तो रोषेण घोरशापाभिशापिना ।
N] एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ॥ ४ ॥ [४
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ।
N] अभिशापकृतस्येति तेनेदं भाषितं वचः ॥ ५ ॥ [५
यदा छित्त्वा भुजौ रामो निर्दहेन्निर्जने वने ।
N] तदा त्वं प्राप्स्यसे रूपं तदेव रुचिरं शुभम् ॥६॥ [६
२४उ] इन्द्रकोपादिदं प्राप्तं रूपमेवं रणाजिरे ॥ ७ ॥ [७उ

१. अ—तथा ।
२. भ च—ततस्ततः ।
३. भ च—कुपितो ।
४. कै अ म—°मुक्त ईशेन ।
भ च—°मुक्तः प्रेक्ष्यैव ।
५. च भ—°शापितः ।
६. ब ल—क्रुद्धाः ।
७. अ—शापस्यान्तं ।
८. भ च—भविष्यति ।
९. भ च—अतिशा० ।
१०. भ च—यदासिना ।
११. ल ब—चाप्स्यसे ।
१२. कै रा ल अ ब म—नास्ति ।

अहं प्राक् तपसोग्रेण पितामहमतोषयम् ।
२५] दीर्घमायुः स मे प्रादात् ततो मां विभ्रमोऽस्पृशत् ॥७॥ [८
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ।
२६] इत्येतां बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥८॥ [९
तस्य बाहुप्रसंक्तेन वज्रेण शतपर्वणा ।
२७] अस्थीनि मे शिरश्चैव शरीरे संप्रवेशितम् ॥९॥ [१०
स मया याच्यमानोऽपि नानयद् यमसादनम् ।
२८] पितामहवचः सत्यं भवत्विति च सोऽब्रवीत् ॥१०॥ [११
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ।
३०] वज्रेणाभिहतः कालं सुदीर्घमुपजीवितुम् ॥११॥ [१२
एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ ।
३१] प्रादाद् वक्षसि चास्यं वै तीक्ष्णदंष्ट्रं भयावहम् ॥१२॥ [१३
सोऽहं भुजाभ्यां दीर्घाभ्यां संसृष्टोऽस्मिन्महावने ।
३२] सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः ॥१३॥ [१४
हन्त वामपि साचिव्यं करिष्यामि नरर्षभौ ।

---

१. कै रा भ च—हि ।
अ—च ।
२. भ च—प्रमुक्तेन ।
३. ल ब—संनिवे ।
४. रा ल ब म—शक्ति० ।
५. ल ब—सुदीर्घमपि ।
म—°मुपजीवितं । भ च—°र्घमिह० ।
६. कै रा ल अ ब म—च ।
७. ल ब भ च—संसृष्टोस्मि ।
८. भ च—सिंहद्वीपिमृगव्यालान् ।
९. भ च—वामति० ।

अदग्धस्य तु विज्ञातुं[1] शक्तिरस्ति न मे विभो ।
४३] राक्षसं तं महावीर्यं येन सीता हृता तव[2] ॥२३॥ [२८
विज्ञानं मे परिभ्रष्टं शापदोषेण[3] राघव[3] ।
४४] स्वकृतेन[4] मया[4] प्राप्तं[5] रूपं लोकविगर्हितम् ॥२४॥ [२९
किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
४५] तावन्मामवटे[6] कृत्वा दह राम यथाविधि ॥२५॥ [३०
दग्धस्त्वयाहमवटे राघव प्रियकाम्यया ।
४६] वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति[7] राक्षसम् ॥२६॥ [३१
येन[8] सख्यं च कर्तव्यं न्यायवृत्तेन राघव ।
४७] कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ॥२७॥ [३२
न हि तस्यास्त्यविदितं त्रिषु लोकेषु राघव ।[9]
४८] सर्वान् परिसृतो[10] देशान् स बली कारणान्तरे[11] ॥२८॥ [३३
N] तमग्निसाक्षिकं मित्रं[12] कृत्वा सीतामवाप्स्यथः[13] । [N

---

१. कै रा ल ब म—विज्ञाने० ।
२. भ च—तथा ।
३. अ म—नास्ति ।
४. ल ब—सुकृतेन । अ म—नास्ति ।
५. अ म—नास्ति ।
६. ल ब—तावन्ममवटे । भ च—°मवटां ।
७. ल ब म—ज्ञास्यसि ।
८. अ—°तेन ।
९. भ—अपरहस्तेन प्रान्तभागे लिखितम् ।
१०. ब—परिवृतो ।
११. कै रा ल अ ब म—काननान्तरे ।
१२. कै रा ल अ ब म—सख्यं ।
१३. ल ब—°मवाप्स्यसि ।

एवमुक्तौ तु तौ वीरौ कबन्धेन नरोत्तमौ ।
४९) गिरिप्रतिममादीप्य पावकं विससर्जतुः ॥२९॥ [१
काष्ठसञ्जननादग्निं जनयित्वा महाबलौ ।
५०] कबन्धमवटे कृत्वा काष्ठैश्चक्रुश्चितां ततः ॥३०॥ [N
लक्ष्मणस्तु महोल्काभि र्ज्वलिताभिः समन्ततः ।
५१] चितां प्रदीपयामास सा प्रजज्वाल सर्वतः ॥३१॥ [२
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
५२] मेदसा सिच्यमानस्तु मन्दं दहति पावकः ॥३२॥ [३
स विधूय चितामाशु विधूमे ऽनिमिषेक्षणः ।
५३] वस्त्रे विरजसी बिभ्रन्मालां सान्तानिकीमपि ॥३३॥ [४
५४उ] उत्पपातैव संहृष्टः सांगप्रत्यङ्गभूषितः । [५ उ
विमाने भास्वरे तिष्ठन् हंसयुक्ते मनोरमे ॥३४॥
५५] प्रभया च महातेजा दिशो दश विराजयन् । [६
सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् ॥३५॥
५६] शृणु राघव तत्त्वेन सीतां योऽधिगमिष्यति । [७

---

१. भ—'मादाय ।
२. वस्तुतस्तु 'चक्रतुस्तौ चितां' मिति वङ्गसम्मतो युज्यते पाठः ।
३. भ च—दह्यमानो ।
४. ल ब—'र्ज्वलिताग्निः ।
५. भ च—चितामादीप० ।
६. भ च—सन्ततः ।
७. ब भ च—विधूमो ।
८. ल ब—उत्पपातेव ।
९. कै रा अ म—संस्पृष्टौ ।
ल ब—संस्पृष्टः ।
१०. अ म—यांगप्र० ।
११. कै रा अ म—सु० ।

तेन मैत्री त्वया कार्या स सुहृत् सुहृदां वरः ॥३६॥
६१] अकृत्वा न हि ते सिद्धिमहं पश्यामि चिन्तयन् ॥३७॥ [N
श्रूयतां राम धर्मज्ञः[1] सुग्रीवो नाम वानरः ।
६२] भ्राता निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥३८॥ [११
५८३] सोऽभिगम्यश्च पूज्यश्च कार्यं ते स[2] करिष्यति । [N
ऋष्यमूके[3] गिरिवरे पम्पापर्यन्तशोभिते[4] ॥३९॥
६३] स[5] वसत्यात्मवान् शूरश्चतुर्भि र्वानरैः[6] सह । [१२
वयस्यं कुरु तं क्षिप्रमिति कृत्वाद्य राघव ॥४०॥
६५] अद्रोहाय समागम्य दीप्यमाने विभावसौ । [१७
न च ते सोऽवमन्तव्यः[7] सुग्रीवो वानरोत्तमः[8] ॥४१॥
६६] कृतज्ञः कामरूपी च सहायार्थी[9] च वीर्यवान् । [१८
देशकालौ सहायांश्च स्वशक्तेश्च[10] बलाबले ॥४२॥
N] नित्यं सञ्चिन्तयानस्तु[11] नानर्थानुपपद्यते[12] । [N

---

१. कै रा अ म—धर्मात्मा ।
भ च—धर्मात्मन् ।
२. भ च—स कार्यं ते ।
३. रा म—ऋषिमूके ।
४. ल ब—°न्तसेविते ।
५. रा अ म—सर्वसत्वात्म° ।
६. भ च—°सचिवैः ।
७. ल ब—ते च° । भ च—चेतसाव° ।
८. भ च—वानरोपि सन् ।
९. भ च—सहायार्थे ।
१०. भ च—सशक्तोश्च ।
११. अ—संचिनुयानस्तु । भ च—संचिंतयन्नर्थी ।
१२. कै रा—नानार्था° ।

इदं त्ववश्यं कर्तव्यं युवाभ्यां पुरुषर्षभौ ॥४३॥
N] वानरेन्द्रो नरेन्द्राभ्यां स कार्यः सचिवः सखा । [N
स हि शक्तो वने कर्तुं कार्यार्थं हरिपुङ्गवः ॥४४॥
६७] अकृतार्थः कृतार्थो वा कार्यं ते स करिष्यति । [१९
वानरांश्च महाकायान् प्रेषयिष्यति राघव ॥४५॥ [N
N] दिशो विचेतुं तां सीतां यद्वियोगेन श्वावसि । [N
स वानरवरः पम्पामभ्येति हि विशङ्कितः ॥४६॥
N] भास्करस्यात्मजः शूरो वालिना कृतकिल्बिषः [२०
सन्निधायायुधं क्षिप्रमृष्यमूकाय संप्रति ॥४७॥
६९] कुरु राघव सत्येन वयस्यं वनचारिणम् । [२१
स हि स्थानानि दिव्यानि कात्स्न्येन हरिपुङ्गवः ॥४८॥
७०] नरमांसाशिनां लोके निपुणं त्विह वेत्स्यति । [२२
७१.पू.] न तस्याविदितं लोके किञ्चिदस्तीति मे मतिः॥४९॥[२३ पू.

१. कै रा अ म—पुरुषोत्तमौ ।
२. च भ—सत्कार्यश्च ।
३. भ च—वली ।
४. अ—कार्यार्थी । भ च—कार्यं ते ।
५. भ—वा सं० । च—वा स ।
६. अ—वानरांस्ते ।
७. कै रा अ म—वानरो वानरैः ।
८. भ च—पम्पामटत्यति० ।
९. अ—हृतकि० ।
१०. अ—मृक्षमू० ।
११. कै रा अ म—कृत्स्नानि ।
१२. भ च—लोके ।
१३. भ च—त्वेह । रा म—ते ह ।
१४. ल ब—किंचिल्लोकेऽस्तीति ।

स मेरुशृङ्गाग्रगतामनिन्दितां
७४पू ] प्रमथ्य पातालतलेऽपि [1]वाश्रिताम् । [२२पू
[2]आनेष्यते नात्र विचारकारणं
N] महाबलो वानरपुङ्गवो हि सः ॥८०॥[3] [N
७१उ] यावत् सूर्यः प्रतपति सहस्रांशुररिन्दम । [२३उ
७२उ] स नदीर्विविधान् शैलान् वनदुर्गाणि कन्दरान् ।
७३पू ] [4]अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ॥८१॥[२४
मही विजानाति हरिप्रवीरः
स्थानानि सर्वाणि च राक्षसानाम् ।
भ्रात्रा निरस्तः पृथिवीं विचिन्वन्
N] निःसंशयं ज्ञास्यति यत्र सीता ॥८२॥[5] [N
वनानि [6]सर्वाणि [7]नदीश्च सर्वा
बिलानि राजन् गिरि[8]कन्दराश्च ।
अयं विचिन्वन् प्लवगैः समेतो
N] विचिन्वतां सोऽप्यधिगन्तुमीशः ॥८३॥ [N

---

१. भ च—चाश्रितां ।
२. कै रा अ म—आनिष्यते ।
३. भ च—नास्ति ।
४. कै रा अ म—अन्विष्यन् ।
५. भ च—नास्ति ।
६. अ—सर्वां ।
७. कै रा अ म—सरितश्च ।
८. ल ब—गिरिकिन्दरांश्च ।
म—कंधराश्च ।

प्लवङ्गमानां प्रवरस्तव प्रियां ।
७४ उ] निरस्य रक्षांसि पुनः प्रदास्यति ॥५४॥ [२६उ

इत्यार्षे रामायणे आरण्यकाण्डे सीतालाभोपायोपदेशो नाम
अष्टसप्ततितमः सर्गः ॥७८॥

१. भ च—नास्ति।
२. भ च—°प्रलाभोपायवर्णनं।
३. कै रा ल ब म भ च—नास्ति।
श—अष्टसप्ततितमः।

निदर्शयित्वा[1] रामस्य[2] सीतायाः प्रतिपादनम्[3] ।
१] वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥१॥ [१
एष राम शिवः पन्था ये त्विमे[4] पुष्पिता द्रुमाः ।
२] प्रतीचीं दिशमास्थाय प्रकाशन्ते मनोरमाः ॥२॥ [२
बिल्वाः पियालाः पनसाः प्लक्षन्यग्रोधकिंशुकाः ।
३] अश्वत्थाः कर्णिकाराश्च मधूकाश्[5]चूतचन्दनाः ॥३॥ [३
तानारुह्याथ वा भूमौ पातयित्वा यथासुखम् ।
४] फलान्यमृतकल्पानि भक्षयन्तौ गमिष्[6]यथः ॥४॥ [९
संक्रामन्तौ वनोद्देशान्[7] शैलाच्छैलं वनाद् वनम् ।
५] ततः पुष्करिणीं रम्यां पम्पां नाम गमिष्यथः[8] ॥५॥ [१०
अशर्करामविभ्रंश्यां समतीरामशैवलाम्[9] ।
६] राम सञ्जातशालूकां कमलोत्पलशोभिताम् ॥६॥ [११
७पू] तत्र हंसान् प्लवान् क्रौञ्चान् सारसांश्चैव राघव ।[10] [१२ पू

---

१. भ च—विदर्शयित्वा ।
२. कै रा ल श्र ब म—रामं तु ।
३. कै रा ल ब म भ च—प्रतिपादने ।
४. भ च—नेमे ।
५. रा—मधूकः श्वेतच० । ल ब—°काश्च चूत० ।
६. रा अ ब म—गमिष्यतः ।
७. कै रा ल श्र ब म—वनोद्देशाच्छैलाच्छैलाद् ।
भ च—वरान् देशान् शै० ।
८. श्र—गमिष्यतः ।
९. भ च—शैवलां ।
१०. भ च—तत्र हंसा प्लवाः क्रौञ्चा सारसाश्चैव राघव ।

रोहितान् शकुनांश्चैव पाठीनांश्चैव राघव ॥७॥
९] पम्पाजलचरान् हत्वा तत्र तत्र वरान् वरान् । [१४
विस्तीर्णपक्षान् निष्प्रानकृशानेककण्टकान् ॥८॥
१०] निकृत्य बाणैश्छित्त्वा च लक्ष्मणस्ते प्रदास्यति । [१५
भृशं ते खादतो मांसं पम्पायाः पर्णसञ्चये ॥९॥
११] पुष्पगन्धं सुखं वारि सुखं शीतामलं लघु । [१६
उद्धृत्य सततात्क्लिष्टं रूप्यवैडूर्यसन्निभम् ॥१०॥
N] गृहीत्वा पद्मपत्रेण पाययिष्यति लक्ष्मणः । [१७
स्थूलान् गिरिगुहाशय्यान् वराहान् वनचारिणः ॥११॥[१८ पू
N] वृषभस्कन्धवक्षस्कान् पम्पायां जलचारिणः । [N
N] सायाह्ने निःसृतान् राम दर्शयिष्यति लक्ष्मणः ॥१२॥
ततः क्रमेण पम्पां च दृष्ट्वा शोकं विहास्यसि । [१९
१३] सुमनो विविधांस्तत्र तिलकान् रक्तमालकान् ॥१३॥

---

१. कै रा अ—शकुनांश्चापि ।
२. भ च—नास्ति ।
३. अ—निक्षिप्तानकृशाने० ।
ब ल—निक्षिप्तानकर्षनेकक० ।
म—°कण्ठकान् ।
४. भ च—पंपायां ।
५. अ म—यथा सीतामलं ।
ब ल—यथा सीतासुखं ।
भ च—सुखसीतामलं ।
६. ल ब—सततोत्क्लिष्टं । भ च—सं तथाक्षिप्तं ।
७. कै रा—रूपवैडूर्य० । अ—रूपं वै० । म—रूप्यं वै० ।
भ च—तस्या वैडूर्य० ।
८. भ च—गृह्य पुष्करपर्णेन ।
९. ब—पाचयिष्यति ।
१०. रा ल ब म—°न्धवृक्षस्कान् ।

१.४पू] उत्पलानि च फुल्लानि नलिनानि च राघव । [२०
१.६उ] न तेषां तत्र माल्यानां कश्चित् प्रार्पयिता[1] नरः ॥१.४॥ [२१पू
मतङ्गशिष्यास्तत्रासन् मुनयः शंसित[2]व्रताः ।
१.७] तेषामवृष्ट्यां[3] घोरायां वन्यमा[4]हरतां गुरौ ॥१.५॥ [२२
ये प्रपेतु[5] महीं तूर्णं शरीरात् स्वेदबिन्दवः ।
१.८] तानि सर्वाणि माल्यानि मुनीनां भावितात्मनाम् ॥१.६॥ [२३पू
स्वेदबिन्दुविकीर्णानि स्वेदयन्ति सरश्च तत् । [२३उ
१.९] तेषामद्यापि तत्रैव[6] दृश्यते परिचारिणी ॥१.७॥
तापसी शबरी नाम काकुत्स्थ चिरजीविनी । [२४
२०] त्वां तु धर्मपरां[7] नित्यं सर्वभूतहिते रतम्[8] ॥१.८॥ [२५पू
दृष्ट्वा देवोपमं राममभ्यर्च्य नरपुङ्गवम् ।
२१पू] क्षिप्रमेव महाभागा देवलोकं गमिष्यति ॥१.९॥ [२५उ
२१.उ] गच्छ पम्पामितो राम भ्रात्रानेन[9] सह द्रुतम् ।
बहुपुष्पान् वनोद्देशान् पश्यन् सुरभिगन्धिनः ॥२०॥ [N
२२] तत्र त्वं राम पम्पायां तीरमासाद्य[10] पश्चिमम् ।
आश्रमस्थानमतुलं रम्यं काकुत्स्थ द्रक्ष्यसि ॥२१॥ [२६

१. भ च—रोपयिता ।
२. ल ब—संशित० ।
३. कै—०मवृष्टौ । भ च—तेषामटव्यां ।
४. ल ब—वनमा० ।
५. अ—प्रपेदु० ।
६. ल ब—तत्रापि ।
७. भ च—धर्मपरं ।
८. अ—रत ।
९. ल ब—तत्रानेन ।
भ च—भ्राता तेन ।
१०. कै रा अ म भ च—तीरमाश्रित्य ।

२३] तत्र न्यस्तानि पात्राणि प्रविभक्तानि राघव ।
स्थालीषु पचथस्तत्र दृष्ट्वा नीवारतण्डुलान् ॥२२॥ [N
२४] पिप्पलीमरिचाभ्यां च वनं सम्प्रापयिष्यतः?(थः) ।
प्रभूतं तण्डुलीयं च पिप्पलीप्रभवं वनम् ॥२३॥ [N
२५] न तदाक्रमितुं नागाः शक्नुवन्ति वनाश्रमम् । [२७पू
ऋषेस्तस्य मतङ्गस्य विधानात्तच्च तादृशम् ॥२४॥ [२८पू
२६] तस्मिन् मुनिनिवासे तु देवारण्यसमे वने ।
नानाविहगसंघुष्टे नष्टशोको भविष्यथः ॥२५॥ [२९
२७] ऋष्यमूकं तु पम्पायां पर्वतं पुष्पितद्रुमम् ।
२८पू] सुदुर्गारोहणं नाम शिशुमारोऽभिरक्षति ॥२६॥ [३०

१. कै रा ल अ म भ च—पत्राणि ।
२. कै अ भ च—पचतस्तत्र ।
३. कै रा ल अ ब म—°लीलवणाभ्यां ।
४. भ—तंदुलीयं ।
५. भ—°प्रसृतं ।
६. कै रा—क्रामितुं ।
७. कै—राम ।
८. ल ब—तदाश्रमं । भ च—वराश्रमं ।
९. भ च—विधानं ।
१०. अ—°को भविष्यतः । भ च—°को भविष्यसि ।
११. कै रा अ म—सुदुर्गाहरणं ।
ल ब—स्वदु० ।
भ—सुदुर्गा० ।
१२. कै रा—राम ।
१३. ल ब—°रक्ष्यति ।
च—शिशुना चाभिरक्षितं ।
भ—शिशुमाराभिरक्षितं ।

बदरान् भक्षयन् दैत्यैः पूर्वकालेविनिर्मितः । [३१उ
N] न च तं विषमाचारः पापकर्माधिरोहति ॥२७॥ [३३
२८ उ] यस्तु तं विषमाचारः पापकर्माधिरोहति ।
तत्रैवाशुं हरन्त्येनं सुप्तमादाय राक्षसाः ॥२८॥ [३४
२९] शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ।
३०पू] यत् स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति॥२९॥[३२
N] एष धर्मपरैः सद्भिस्तपस्विभिरलङ्कृतः ।
महात्मभिर्महाप्राज्ञैर्द्विजातिभिरलङ्कृतः ॥३०॥ [N
३१] ततो हि शिशुनागानां निर्ह्रादः श्रूयते महान् ।
क्रीडतां राम पम्पायां मतङ्गारण्यवासिनाम् ॥३१॥[३५
३२] सिक्ताः परमधाराभिः संहत्य परमद्विपाः ।

---

१. रा—दैत्यान् ।
२. ब—पूर्वकालं । भ च—पूर्वकाले० ।
३. अ म—तत्र वैनं हरंत्याशु ।
भ—०शु हरंत्येनं ।
४. भ—राक्षसः ।
५. कै रा ल—लंबते ।
६. ल ब म च—चित्तं ।
कै रा—चित्ते ।
७. भ च—०ज्ञैः कृतयज्ञैर्द्विजातिभिः ।
८. च—ततोधि ।
९. कै रा ल अ ब म भ—शिशुमाराणां ।
१०. म च—निःक्रन्दः ।
भ—'निह्लाद' इत्यपरहस्तेन प्रान्तभागे ।
११. रा—मातंगारण्य० ।
१२. रा ल अ ब म—संहृत्य ।
कै—कोषे 'संहत्ये' त्यपरहस्तेन ।

प्रसरन्ति पृथक् तीर्थे मेघवर्णास्तरस्विनः ॥३२॥ [३६
३३] ते तत्र पीत्वा पानीयं रजः प्रक्षाल्य चाङ्गजम् ।
निर्वृत्ताः प्रविगाहन्ते वनानि वनगोचराः ॥३३॥ [३७
३४] राम तस्यैव शैलस्य महती शोभना गुहा ।
शिलापिधाना विस्तीर्णा दुर्गं चास्याः प्रवेशनम् ॥३४॥[३९
३५] तस्या गुहायाः प्राग्द्वारे महान् शीतोदको ह्रदः ।
बहुमूलफलः काम्यो नानानगसमन्वितः ॥३५॥ [४०
३६] तस्मिंश्चरति सुग्रीवश्चतुर्भिः सचिवैः सह ।
कदाचिच्छिखरे रम्ये पर्वतस्यावतिष्ठते ॥३६॥ [४१
भ्रात्रा निरस्तः क्रुद्धेन तेन सख्यं विधीयताम् । [N
३७] कबन्धस्त्वनुशिष्यैवमुभौ तौ रामलक्ष्मणौ ॥३७॥
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् । [४२
३८] तं वियत्स्थं महाभागं कबन्धं रामलक्ष्मणौ ॥३८॥
प्रस्थितौ तौ महाभागौ वाक्यमूचतुरन्तिकात् । [४३
३९] गम्यतां कार्यसिद्ध्यर्थमिति तौ सत्यसङ्करौ ॥३९॥

---

१. ल ब—°र्णास्तपस्विनः ।
२. कै रा म भ च—निवृत्ताः ।
३. ल ब म—दुस्तीर्णा ।
४. ल ब ल म—तस्याः ।
५. अ म—महाशीतो० ।
६. भ च—°वृतः ।
७. भ च—तस्य ।
८. अ म भ च—°स्यावतिष्ठति ।
९. भ च—°नुशिक्ष्यैव० ।
१०. ल ब—प्रस्थितं तं महाभागं ।

३९७] अनुज्ञाप्य कबन्धं तु तं प्रीतौ प्रस्थितौ तदा । [४४
ततः कबन्धः प्रतिपद्य रूपं
श्रियान्वितो भास्करसम्मितौजसा ।
तदात्मरूपं समवेक्ष्य रामं
N] सख्यं कुरुष्वेति ततोऽभ्युवाच ॥४०॥ [४५

इत्यार्षे रामायणे आरण्यकाण्डे कबन्धस्वर्गारोहणं नाम
एकोनाशीतितमः सर्गः ॥७९॥

---

१. कै रा अ म - प्रस्थितं ।
२. कै रा अ म—समवीक्ष्य ।
३. अ—रूपं ।
४. अ—सतो० ।
भ च—तदा० ।
५. भ च—नास्ति ।
६. कै रा ल ब म भ च—नास्ति ।

ततः कबन्ध खगमः स्रग्वी भास्करसन्निभः ।
१] जगामामन्त्र्य काकुत्स्थौ शुभं भवनमात्मनः ॥१॥ [N
ततः कबन्धे काकुत्स्थौ प्रयाते स्वभ्यलङ्कृते ।
N] विमानस्थे दिवं तस्मिन विस्मयं परमं गतौ ॥२॥ [N
तं कबन्धोदितं मार्गं पम्पायां वीक्ष्य तौ वने ।
२] अगच्छतां दिशं प्राचीं पद्भ्यां दशरथात्मजौ ॥३॥[१
तौ शैलेष्वाचितान वृक्षान क्षौद्रकल्पफलान बहून ।
३] वीक्षमाणौ गतौ द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥४॥ [२
कृत्वा च शैलपृष्ठे तौ वासमेकां निशां ततः । [३ पू
४] प्रभातायां ततस्तौ तु निशायां प्रथमेऽहनि ॥५॥ [N
कृत्वा सुदूरमध्वानं विचित्रवनभूषणम् । [N
५] पम्पायाः पश्चिमे तीरे ह्युपविष्टौ च राघवौ ॥६॥ [३ उ

१. ब—कबंधं ।
२. ल ब—सुष्ठुलंकृते ।
३. अ—ते ।
४. कबन्धस्तु पम्पां यातुं प्रतीचीं दिशमादिशदिह तु प्राचीमिति चिन्त्यम् ।
५. ल ब—कांक्षमाणौ ।
६. ल ब—तु तं ।
७. भ च—वासमेकं ।
८. भ च—°भूषितं ।
९. भ च—उपविष्टौ ।
१०. अ—नास्ति ।

तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम्[1] ।
६] ददृशतुस्ततस्तत्र[2] शबर्या रम्यमाश्रमम् ॥७॥ [४
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् ।
७] वीक्षमाणौ[3] भृशं रम्यं शबरीमभिपेततुः ॥८॥ [५
तौ तु[4] दृष्ट्वा तदा[5] सिद्धा ह्यभ्युत्थाय कृताञ्जलिः[6] ।
८] पादौ रामस्य[7] जग्राह लक्ष्मणस्य च धीमतः[8] ॥९॥ [६
तामुवाच ततो रामः शबरीं संशितव्रताम्[9] । [७
९] कच्चित् ते विजिता[10] विघ्ना[11] कच्चित् ते वर्धते तपः ॥१०॥
कच्चित् ते निर्जितः कोपो[12] मोहश्च वरवर्णिनि । [८
N] कच्चित्[13] ते विगतं श्रमं[13] कच्चित् ते मनसः सुखम् ॥११॥
कच्चित् ते गुरुशुश्रूषा सफला चारुहासिनि । [९
१०] कच्चित् ते विनयः प्राप्तः कच्चिदिन्द्रिय[14]संयमः ॥१२॥ [N

---

१. अ—पाश्चिमां ।
२. कै रा ल ब म भ च—°स्तत्रस्तत्र ।
३. कै रा ल अ म भ—वीक्ष्यमाणौ ।
४. भ—च । अपरहस्तेन प्रान्तभागे ।
५. ल ब—ततः ।
६. कै रा अ म भ—°त्थानकृतांजलिः ।
७. अ—जग्राह रामस्य ।
८. भ च—धर्मतः ।
९. भ च—°तव्रतः ।
१०. ल ब—विदिता ।
११. कै रा अ म भ—विद्याः ।
१२. रा—क्रोधो ।
१३. कै रा—तेधिगतं प्राप्तं ।
भ च—तेधिगमः प्राप्तः ।
अ—°प्राणं ।
१४. कै रा अ म—कच्चित्तेन्द्रियसंयमः ।
भ च—कच्चिच्चेन्द्रिय° ।

११पू] कच्चित्ते संयतात्मानस्तथा सिद्धा महर्षयः । [N
रामेण तु तदा पृष्टा सा देवी सिद्धसम्मता ॥१३॥
१२] शवर्यशंसद्रामाय पश्यन्ती पर्युपस्थिता । [१०
N] अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया ॥१४॥ [११पू
चित्रकूटं त्वयि प्राप्ते विमानैरतुल्यप्रभैः ।
१३] मुनयो दिवमारूढाः ये मयाभ्यर्चिताः पुरा ॥१५॥ [१४
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महात्मभिः ।
१४] आगमिष्यति काकुत्स्थः सुपुण्यमिममाश्रमम् ॥१६॥[१५
स ते प्रतिगृहीतव्यो रामः सौमित्रिणा सह ।
१५] तमर्चित्वा ध्रुवः स्वर्गो भविष्यति तवाक्षयः ॥१७॥[१६
मया च विविधं वन्यं सञ्चितं रघुनन्दन ।
१६] त्वदर्थं पुरुषव्याघ्र पम्पायामिह रुच्यताम् ॥१८॥ [१७
स एवमुक्तो धर्मात्मा शबर्या शबरीं ततः ।

१. भ च—°नस्तपः° ।
२. कै रा ल अ ब म—च ।
३. भ च—सिद्धा ।
४. अ—पश्यती । भ च—प्रयाता ।
५. भ च—आर्ये ।
६. कै रा अ—चित्रकूटे ।
७. कै रा ल अ ब म—°स्ते ।
८. भ च—°ण्यमिदमा° ।
९. भ च—परिगृ° ।
१०. ल अ ब म—तमर्चयित्वा ।
११. भ च—तु ।
१२. ल ब—दृश्यतां ।
भ च—तूष्यतां ।
१३. अ म—नास्ति ।

१७] रामः प्रोवाच विज्ञाने तां नित्यमबहिष्कृताम्[1] ॥१९॥ [१८
दनोः प्रभावात् तत्त्वेन प्रभावस्ते महान् मया[2] ।
१८] श्रुतः[3] प्रत्यक्षमिच्छामि तमद्येह निरीक्षितुम् ॥२०॥ [१९
१९पू] एवं तु वचनं श्रुत्वा रामवक्त्राद् विनिर्गतम्[4] ।
२०पू] उवाच शबरी हृष्टा तावुभौ रामलक्ष्मणौ ॥२१॥ [२०
पश्य मेघघनप्रख्यं[5] मृगपक्षिगणायुतम् ।
२१] मतङ्गवनमित्येवं[6] विख्यातं भुवि राघव ॥२२॥ [२१
इह ते[7] भावितात्मानो गुरवो हि[8] महाद्युते ।
२२] जुहवांचक्रुरनलं[9] मन्त्रवन्मन्त्रकोविदाः[10] ॥२३॥ [२२
इयं प्रत्यक्स्थली[11] वेदी[12] यत्र ते देवसत्कृताः ।
२३] पुष्पोपहरणं[13] चक्रुः श्रीमद्भिर्दीपितैः[14] करैः ॥२४॥ [२३

---

१. अ—°बहिष्कृतः ।
२. कै रा अ म—मम ।
३. अ म—श्रुत्वा ।
४. भ च—विनिःसृतम् ।
५. कै रा अ म—मेघगणप्र० ।
भ—मेघ ? (घ) वनप्र० ।
६. कै रा अ म—°व विश्रुतं ।
भ च—°तद् विश्रुतं ।
७. भ च—मे ।
८. कै रा—नास्ति । म—ह्य । भ च—मे ।
९. कै—जुहूयां० । रा अ म भ च—जुहुयां० ।
१०. कै—कोविदः ।
११. रा अ भ च—°क्स्थला ।
१२. कै रा ल अ ब म—देवी ।
१३. कै रा—°पहारणं ।
१४. कै रा अ म—°र्द्वीपिभिः ।

येषां तपःप्रभावेन पश्याद्यापि रघुप्रिय ।
२४] न म्लायन्तीह पुष्पाणि न शुष्यन्ति कुशास्तराः ॥२५॥[२४
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ।
२५] चिन्तितेनागतान् पश्य समन्तात्सप्तसागरान् ॥२६॥[२५
कृताभिषेकैर्न्यस्तानि वल्कलानीह पादपैः ।
२६] वह्नयः समाश्च गच्छन्ति न चाद्यापि निरम्बुकाः ॥२७॥[२६
एतांश्चान्यांश्च सा ताभ्यां प्रकारांस्तपसो बलात् ।
२७] तेषां मुनीनामाचख्यौ रामलक्ष्मणयोस्तदा ॥२८॥ [N
आश्चर्यभूतं रामश्च प्रतिजग्राह तद्वचः ।
२८] वचनान्ते च सा रामं शबरी वाक्यमब्रवीत् ॥२९॥ [N
कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ।
२९] यदीच्छस्यभ्यनुज्ञातुं त्यक्ष्यामीदं कलेवरम् ॥३०॥ [२८
येषामिच्छाम्यहं गन्तुं मुनीनां भावितात्मनाम् ।
३०] समीपमाश्रमं तेषामहं हि परिचारिणी ॥३१॥ [२९

---

१. अ व—तेषां ।
२. ल ब—°प्रभावेण ।
३. ल अ म—शुष्काः कुशसंस्तराः ।
४. कै रा ल अ—°ससमालसैः ।
५. अ—°सारसान् ।
६. ल अ ब म—पादपैः ।
७. ल ब—धार्याः । अ—सन्ध्यः ।
८. कै रा ल ब—चास्यापि निरर्थकाः ।
अ म—चार्थानि निर० ।
९. रा—°स्तथा ।
१०. कै रा—°स्याभ्यनु० ।
११. अ—°माश्रमे ।

धर्मिष्ठं तु वचः श्रुत्वा रामस्तस्याः सलक्ष्मणः । [३० पू
३१] अनुजानामि गच्छेति प्रहृष्ट[1]वदनोऽब्रवीत् ॥३२॥ [N
अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने ।
३२] ज्वलन्ती स्वेन वपुषा स्वर्गमाशु जगाम सा[2] ॥३३॥ [३३
यत्र ते सुकृतात्मा[3]नो निवसन्ति महर्षयः ।
३३] तत् पूज्यं शबरी स्थानं जगामार्थ[4] समाधिना ॥३४॥ [३५
शबरीमभ्यनुज्ञाय रामोऽपि वदतां वरः ।
N] पम्पामभिमुखो वीरो जगामाद्भुतदर्शनाम्[5] ॥३५॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे शबरीस्वर्गारोहणं नाम
अशीतितमः सर्गः ॥८०॥

---

१. अ—प्रसन्नव० ।
२. ल अ ब—ह ।
३. ल ब —स्वीकृता० ।
४. च—जगामाशु ।
५. कै रा ल अ ब म च—°दर्शनः ।
६. भ च—नास्ति ।
७. कै रा ल ब म भ च—नास्ति ।

दिवं तु तस्यां यातायां शबर्यां स्वेन कर्मणा ।
१] लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥१॥ [१
चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनाम् ।
२] इदं भ्रातरमेकाग्रो लक्ष्मणं वाक्यमब्रवीत् ॥२॥ [२
दृष्टो मयाश्रमः पुण्यो बह्वाश्चर्यो महात्मनाम् ।
३] विश्वस्तमृगशार्दूलो नानापतगसेवितः ॥३॥ [३
सप्तानां तु समुद्राणाममृतं शुचि लक्ष्मण ।
४] उपस्पृष्टं च विधिवत् पितरश्चैव तर्पिताः ॥४॥ [४
प्रनष्टमशुभं सर्वं कल्याणं समुपस्थितम् ।
५] तथा हि सम्प्रहृष्टं मे हृदयं पश्य लक्ष्मण ॥५॥ [५
हृदयं हि नरस्याह शुभं वा यदि वाशुभम् । [६
६] पूर्वं हि मनसा ध्यातं पश्चादेव तदाप्यते ॥६॥ [N

---

१. अ—दिव्यं ।
२. भ च—°मेकाग्रं ।
३. भ च—°यमाश्रमः ।
४. भ च—वनवर्यो ।
५. कै रा—सुप्तानां ।
६. कै रा अ म भ च—°द्राणां येषां तीर्थेषु ।
७. भ च—उपसृष्ट ।
८. ल अ ब म भ च—प्रणष्ट० ।
९. ल ब म—नूनं ।
१०. अ—°साख्यातं ।
११. ल ब म भ च—पश्चादेतदवाप्यते ।

१९पू] शक्यं चिरमवस्थातुं पुण्येऽस्मिन् मुनिसंश्रये ।
१६पू] मार्गमाणेन वैदेहीं त्वया सह[1] गुरुप्रिय ॥७॥ [N
१९उ] न च तृप्तिमहं[3] यायामिह वर्षशतैरपि ।
१६उ] न स्यात्कालेन चोद्वेग आसीनानामिहाश्रमे[4] ॥८॥ [N
तदागच्छ गमिष्यावः पम्पां[5] तां शुभदर्शनाम् ।
१७] ऋष्यमूको[6] गिरिर्यस्या नातिदूरे प्रकाशते ॥९॥ [७
यस्मिन् वसति स प्राज्ञः सुग्रीवोंऽशुमतः सुतः ।
१८] नित्यं वालि[7]भयत्रस्तश्चतुर्भिः सचिवैः सह ॥१०॥ [८
२०उ] गच्छावस्त्वरितौ[8] तत्र मम हि त्वरते[9] मनः । [१०उ
आश्रमात् तु ततस्तस्मान्निर्गम्य स विशांपतिः ॥११॥
२१] जगाम मतिमान् पम्पां नानापादपशोभिताम्[10] । [११

---

१. अ म—कथं ।
२. भ च—सार्द्धं ।
३. कै—°प्तिमिह यायामहं ।
रा अ म—°प्तिमहं यायामहं ।
ल ब—°प्तिमहं यायां सत्यं ।
४. कै रा—तस्याकालोत्पत्तिमते आसीनानामिहाश्रमे ।
कै—प्रान्तभागे चेत्थम्—
तस्मात् कालो ह्यतिक्रामेदासी० ।
ल ब—तस्याकालोत्पत्तिमतामासी० ।
अ भ च—तस्मिन्कालेन ह्यतिगते आसी० ।
५. अ—पंपायां ।
६. कै—ऋषिमूको ।
७. कै—नित्यवालि० ।
८. भ च—°स्त्वरया ।
९. भ च—ममाभित्वरते ।
१०. भ च—°पभूषितां ।

२५पृ.] ददर्श च ततो रम्यामुदारजनसेविताम् ॥१२॥
नानातरुलताकीर्णां शीतपानीयवाहिनीम् । [१२
N] पद्मैः सुगन्धिभिस्ताम्रैः श्वेतैः कुवलयैरपि ॥१३॥
चित्रां बहुविधैश्चित्रैर्बहुरूपां मनोरमाम् । [१३
N] पुत्रप्रियैः पूर्णमुखैर्भरद्वाजैः प्रियंवदैः ॥१४॥
एतैश्चान्यैश्च विविधैराचितं तन्महावनम् । [N
N] नैचैवच्छदतिक्रान्तुं राघवः सहलक्ष्मणः ॥१५॥ [N
ददर्श स ततः पम्पां शुभशीतजलाशयाम् ।
N] प्रहृष्टनानाशकुनां बहुपादपसङ्कुलाम् ॥१६॥ [२१

---

१. के रा श्र म—नास्ति ।

२. श्र—°रुतला° ।

३. कै रा श्र म—नास्ति ।

४. कै रा—सौगन्धिभि° ।

श्र—सौवर्णके ।

म भ च—सौगन्धिकैस्ताम्रैः ।

५. भ च—मनोहरां ।

६. भ च—अतः परमधिकः पाठः—

कोयष्टिकैः वंजुलैः (डै) श्च शतपत्रैः (:) किरीटकैः ।

७. श्र—°धैरार्चितं ।

भ च—°धैर्नादितं ।

८. श्र—तन्मनस्विनं ।

९. ल व—तच्च नैच्छ° ।

म—न च वैच्छदतिक्रांत ।

भ च—नचैवेच्छस्यति ।

२६उ] स तां पादपसंच्छन्नां प्राप्य पुष्करमण्डिताम् ।
२७पू] हंसकारण्डवाकीर्णां महर्षिगणसेविताम् ॥१७॥ [N
वीक्ष ?(ज्य) मानस्तदा रामः पम्पाशीतेन वायुना ।
२८] जहौ परिश्रमं श्रान्तः सह सौमित्रिणा ततः ॥१८॥ [N
२९पू] द्रुमान् पुष्पफलोपेतान् परपुष्टनिनादितान् ।
N] पद्मानि च विकीर्णानि वीक्षमाणो महीतले ॥१९॥ [N
N] मत्तहंसरुतोद्गीतां सारसैः संप्रणादिताम् ।
२९उ] मृदुशाद्वलिनीं भूमिं हृष्टतुष्टमृगान्विताम् ॥२०॥ [N
संप्रहृष्टौ ततः पम्पां दृष्ट्वा शकुनिनादिताम् ।
३०] बालार्कसदृशैः पद्मैः प्रदीप्तामिव सर्वतः ॥२१॥ [N
ततो महात्मा ह्यविदूरमन्तरं
क्रमेण गत्वा प्रविलोकयन् वनम् ।
ददर्श पम्पां शुचिशीतलोदका-
N] मनेकनानाविधपक्षिसेविताम् ॥२२॥ [३०

---

१. कै रा अ म भ च—वीक्ष्यमाणा० ।
२. ल अ ब भ च—पंपां शीतेन ।
३. भ च—०त्रिणानघः ।
४. भ च—पक्षिजुष्टान्विना०
५. कै अ—वीक्ष्यमाणो ।
ल ब भ च—प्रेक्ष्यमाणो ।
६. भ च—०तुष्टवदीयतुः ।
७. कै रा ल अ ब म—प्रविचालयन् ।
८. ल ब— वशं ।

महाबलौ तौ तु शिवामकर्दमां
निरीक्ष्य पम्पामभिरामदर्शनाम् ।
ऋषेः सुतां तुष्टुवतुर्महात्मनो
३१] नदीं च मैत्रावरुणेः सरस्वतीम् ॥२३॥ [N

इत्यार्षे रामायणे आरण्यकाण्डे पम्पादर्शनं नाम
एकाशीतितमः सर्गः ॥ ८१ ॥

---

१. भ च—°मभिरूपद° ।

२. भ च—महानदीं ।

३. अ—°हि ।

भ च—यथैव ।

४. भ च—मित्रावरुणौ ।

५. भ च—नास्ति ।

६. कै रा ल ब म भ च—नास्ति ।

स तां पुष्करिणीं रम्यां पद्मोत्पलसमायुताम्[1] ।
N] रामः सौमित्रिणा सार्धं पस्पर्श[2] च ददर्श[2] च ॥१॥ [१
१पू] तां समन्तात् समालोक्य विचित्रां सुमनोहराम् ।
N] सोन्मादो विस्मितः[3] सास्त्रः सौमित्रिमिदमब्रवीत् ॥२॥[२
सौमित्रे पश्य पम्पायाः[4] काननं शुभदर्शनम् ।
२] यत्र राजन्ति शैलाभा द्रुमाः सशिखरा इव ॥३॥ [४
द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवोर्घ्यैतैः[5] ।
N] अधिकं प्रतिभात्येतन्नीलपीतैश्च शाद्वलैः ॥४॥ [N
भरतस्य च दुःखेन वैदेह्या हरणेन च । [५उ
N] हन्त शोकाभितप्तं[6] मां सन्दीपयति[6] दुःखितम् ॥५॥ [५पू
सुखानुलोमः सौमित्रे कालः प्रचुरमन्मथः ।
३] गंधवान्[7] सुरभिर्मासो नानापुष्पफलैर्द्रुमैः[8] ॥६॥ [१०

---

१. ल ब—°समाकुलां ।
भ—°झषायुतां ।
२. कै—प्रान्तभागे । च—'ददर्शोपससर्ज' ।
भ—'ददर्शोपससर्प्य' ।
३. कै रा ल अ ब म—विश्रुतः ।
४. ल ब भ च—पंपायां ।
५. भ—°मैरिवोज्झितैः ।
च—°मैरिवोर्ज्जितैः ।
६. भ च—°भिसंतप्तं मां दीपयति ।
७. रा—गंधवांस्तु° । ल अ ब म (भ—प्रान्तभागे)—'गंधवान्' ।
भ च—गंधश्च ।
८. रा ल ब म—°फलद्रुमैः ।

पश्य रूपाणि रम्याणि वनानां पुष्पशालिनाम् ।
४] सृजन्ति पुष्पवर्षाणि वर्षं तोयमुचो यथा ॥७॥ [११
प्रस्तरेषु च रम्येषु विविधाः कानने द्रुमाः ।
५] वायुवेगप्रचलिताः पुष्पैरवकिरन्ति माम् ॥८॥ [१२
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः । [१७पू
६] षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥९॥ [१८उ
गिरिप्रस्थेषु चित्रेषु पुष्पवद्भिर्मनोहरैः ।
७] संसक्तशिखराः शैला भान्ति चित्रैर्महाद्रुमैः ॥१०॥ [१९
पुष्पिताग्रांश्च पश्येमान् कर्णिकारान् समन्ततः ।
८] हाटकप्रतिसञ्छन्नान् नरान् पीताम्बरानिव ॥११॥ [२१
वसन्तमासः सम्प्राप्तो नानाविहगनादितः ।
९] विशालाक्ष्या विहीनस्य शोकसन्दीपनो महान् ॥१२॥ [२२
सौमित्रे मां सुदुःखार्तं सन्दीपयति मन्मथः ।
१०] भृशं विनदमानश्च कोकिलो मामिवाह्वयन् ॥१३॥ [२३

१. ल ब—रम्याणि रूपाणि ।
२. रा अ म—वर्षंतोयमुचो ।
३. कै रा ल अ ब म—°पुष्पैरिव कि० ।
४. कै रा ल ब म—वनेषु ।
५. कै रा अ म—मनोरमैः ।
६. कै रा ल अ ब म—संरक्त० ।
७. भ च—भक्तिचित्रै० ।
८. कै रा ल ब अ म—नरान् ।
९. रा—पीतहरा० । अ—पीततराणि ।
कै ल ब म—पीततरानिव ।
१०. भ च—वियुक्तस्य ।
११. भ च—°संतापनो ।
१२. अ म—स्पष्टं ।
१३. भ च—विवदमा० ।

१.१.उ] एष दात्यूहको नाम रम्ये काननिर्झरे ।
१.२पू] प्रणदन्मन्मथाविष्टं शोषयिष्यति लक्ष्मण ॥ १४ ॥ [२४
मां दृष्ट्वैव मृगी याति तां मृगो नोपधावति ।
N] वक्ष्यतीव न भीः कार्या हैमैरर्थी मृगैरयम् ॥१५॥ [N
वारणोयं स्वकां भार्यां स्वनुरक्तोऽनुयायिनीम् ।
N] मत्प्रसादमिवाशंकं करेण परिमार्जति ॥१६॥ [N
N] विमिश्रा विहगैः पुंभिरन्यपुष्टैर्विनादिताः ।
भृंगराजाभिनदितास्तरवो मधुरस्वनाः ॥१७॥ [२७
१.३] मां हि सा मृगशावाक्षी चिन्तावाष्पजडीकृतम् ।
सन्तापयति सौमित्रे नवोदित इव ग्रहः ॥१८॥ [३५
१४] शिखिनीभिः परिवृता मयूरा गिरिसानुषु ।
N] प्रनृत्ता मन्मथोन्मत्ता मम मन्मथवर्धनाः ॥१९॥ [३७

---

१. भ च—नित्यं ।
२. भ च—प्रवदन् ।
३. भ च—मृगो ।
४. रा ल—मृगोनुपधा० ।
कै अ म—मृगोप्यनुधा० ।
भ च—मृगी प्रतिधा० ।
५. कै रा ल ब म—कामं......मृगीरयम् ।
अ म—काम......मृगीरथम् ।
६. ल अ ब म—रावणोयं ।
रा—रावणोयं ।
७. अ म—नास्ति ।
८. अ म—स्वंगराजाभिरुदिता० ।
भ च—भृंगराजीभिरुदि० ।
९. कै रा ल अ ब म—°वाष्पाकुलीकृता ।
१०. कै रा ल अ ब म—शिखण्डिभिः ।
११. ल अ म—प्रवृत्ताः ।
१२. ब—नास्ति ।

पश्य लक्ष्मण नृत्यन्तं मयूरमनुनृत्यति ।
१.५] शिखिनी मन्मथेनार्ता भर्तारं गिरि सानुषु । २०॥ [३८
न हि नूनं मयूरस्य रक्षसापहृता प्रिया । [४०उ
१.६] अहं यथा विरहितः पुष्पमासि सुमध्यर्या ॥२१॥ [N
१.८पू] पश्य चारूणि पुष्पाणि निष्फलानि भवन्ति मे ॥२२॥[४४पू
परिचुंबति संश्लिष्य भ्रमरश्चूतमञ्जरीम् । [N
१.७] नवसंगमसंहृष्टः कामी प्रणयिनीमिव ॥२३॥ [N
भ्रमरश्चूतमञ्जर्या चलत्पल्लवपाणिना ।
N] विक्षिप्तः सांप्रतं नार्या सव्यलीक इव प्रियः ॥२४॥ [N
N] पुष्पाकरसमृद्धानां द्रुमाणां शिशिरात्यये । [४४उ
अस्मिन् काले प्रमुदिताः शकुनाः संघशः कलम् ।
२१.] आह्वयन्तीव चान्योन्यं कामोन्मादकरा मम ॥२५॥ [४६
श्यामा पद्मपलाशाक्षी विनाभूता मया प्रिया । [५०पू
२०] दीना परवशं याता सापि शोचत्यहं यथा ॥२६॥ [४७उ
एष पुष्पवहो वायुः सुखस्पर्शः सुखावहः ।
१.९] तां विचिन्तयतः कांतां पावकप्रतिमो मम ॥२७॥ [५३

---

१. कै रा अ—रक्षसोप० । म—रक्षसोपा० ।
२. कै रा ल अ ब म—सुमध्यमे ।
३. कै रा ल अ ब म—फलानि च ।
४. अ—कुलं । ब—कथं ।
५. भ च—पद्मदलाभाक्षी ।
६. अ—मम ।
७. ब—कामं ।
८. कै—पावक प्रतिमो मम ।
अ—पावकः प्रतिमं समा ।
ब—पावकप्रतिमोऽस्ति मे ।

तिमिरांगो विहंगोऽसौ पक्षी प्रमुदितः सदा ।
२२] वायसः शिखरस्यान्ते प्रहृष्टमभिनंदति ॥२८॥ [५५
एष वै तत्र वैदेह्या विहगं ? (:) प्रतिहारकः ।
२३] पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति ॥२९॥ [५६
एषं कूजति चक्राह्वो रमयन् सहचारिणीम् ।
N] न चापि दर्शनादस्या निमेषमपि नेष्यति ॥३०॥ [N
तर्ज्जयन्निव संयाति सिंहोऽयं भार्यया वने ।
N] मां मूढबुद्धिं संप्राज्ञो न विमुक्तः पदात् पदम् ॥३१॥ [N
पश्य लक्ष्मण सन्नादो मम मन्मथवर्धनः ।
२४] पुष्पिताग्रेषु वृक्षेषु द्विजानामभिनंदिनाम् ॥३२॥ [५७
२५पू] सौमित्रे पश्य पम्पायां चित्रासु वनराजिषु । [६१पू
N] नलिन्यः संप्रकाशन्ते जले तरुणसूर्यवत् ॥३३॥ [६२उ
हिममाशंकमानाभिः फुल्लैस्तिलकपादपैः ।
N] भीताभिरिव वल्लीभिः कुट्मलाञ्जलयः कृताः ॥३४॥ [N

---

१. कै ब—विहगप्रतिहारगः ।
रा—विहगप्रतिहारकः ।
ल—विहारप्रतिहारकः ।
२. भ—एवं ।
३. भ—°नात्तस्याः ।
४. अ ब म—संप्राप्ते । ल—संप्रज्ञो ।
५. भ च—वियुक्तः ।
६. ल—°नामनुनादिनाम् ।
७. भ च—वापीभिः ।

एषा प्रसन्नसलिला पद्मिनी चोत्पलायुता ।
२६] हंसकारण्डवाकीर्णा पद्मसौगन्धिकाकुला ॥३५॥ [६३
चक्रवाकयुता नित्यं विचित्रकुसुमावृता ।
२७] मातंगैर्मृगयूथैश्च सेवितेयं जलार्थिभिः ॥३६॥ [६५
पद्मकोशप्रकाशानि दृष्ट्वा दृष्टिर्हि मन्यते ।
२८] सीताया नेत्रकोशाभ्यां सदृशानीव लक्ष्मण ॥३७॥ [७१
पद्मकेसरसंस्पृष्टो वृक्षान्तरविनिःसृतः ।
२९] निःश्वास इव सीताया वाति वायुर्मनोरमः ॥३८॥ [७२
सौमित्रे पश्य पम्पायां दक्षिणे गिरिसानुषु ।
३०] पुष्पिता कर्णिकारस्य यष्टिः परमशोभना ॥३९॥ [७३
अधिकं शैलराजस्य धातुभिः सुविभूषिता ।
३१] पुष्पाणां सृजते वर्षं वायुवेगविघट्टिता ॥४०॥ [७४
गिरिप्रस्थश्च सौमित्रे सर्वतः संप्रपूरितः ।
३२] निष्पत्रैर्दूरतो रम्यैः प्रदीप्तैरिव किंशुकैः ॥४१॥ [७५
N] पम्पातीररुहाश्चैव कोविदाराश्च पुष्पिताः । [७६पू
३५ उ] मुचुकुंदार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ॥४२॥ [८१पू

१. अ—०शप्रकाशानि ।
२. ल—पद्मकोशरसस्पृष्टो । भ च—पद्मकेसरसंसृष्टो ।
३. कै—चतुर्भिः ।
४. म—संप्रसूरितः ।
भ च—संप्रपुष्पितः ।
५. कै रा ल अ ब म—निष्पत्रो ।
६. अ ब—नस्यः ।
७. भ च—पंपातीररुहाश्चेमे पुष्पिताः सुसुगन्धिनः ।
केतक्यः सिन्दुवाराश्च वासंत्यश्च समंततः ॥
शोभन्ते माधवे मासि कर्णिकाराः सुपुष्पिताः ।
चूताश्च पाटलाश्चैव कोविदाराश्च पुष्पिताः ।
रा अ—नास्ति ।

३६पू] चंपकोद्दालकाश्चैव शिरी[1]षाः शिंशपा[1]स्तथा । [८१उ
३७उ] तत्र ता[2]लाश्च [2]सालाश्च नागवल्ल्यश्च पुष्पिताः[3]॥४३॥[N
३६उ] धवाः शाल्मलयश्चैवं[4] रक्ताः[5] कुरवकास्तथा ।
३७पू] पनसा नक्तमालाश्च चन्दनास्तिलकास्तथा ॥४४॥[6] [८२
उदुंबँराः[7] कदंबाश्च [8]पर्णकाश्च सु[9]पर्णकाः । [N
३८] नीवारा वरणाश्चैव खर्जूराम्राश्च पुष्पिताः ॥४५॥ [10][७२पू
विविधा विविधैः पुष्पैः शाद्वला वनसा[11]नुषु ।
N] विकीर्णाः पीतरक्ताभैः सौमित्रे प्रस्तरीकृताः॥४६॥ [९०
वसंते पश्य सर्वेषां वृक्षाणां पु[12]ष्पसंपदम् । [९१
३९] पुष्पमासं विकुर्वाणाः संघर्षात् पुष्पिता द्रुमाः ॥४७॥ [९२पू
पश्य पम्पां मधौ मासि वि[13]कसत्पुष्करायुताम्[14] ।
४०] चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥४८॥ [९८पू

---

१. कै—°षाशिमया° ।
२. भ च—तालास्तमालाश्च ।
३. भ च—कोष्ठयोरयं पाठः ४४ तम श्लोकानन्तरं पठितः ।
४. रा ल ब म—शल्मलय° ।
५. कै रा ल अ ब म—रक्ताः ।
६. ल—नास्ति ।
७. ल ब म—उडंबराः ।
भ च—उदुम्बराः ।
८. भ च—पूर्णकाः ।
९. भ च—पारिभद्रकाः ।
१०. एष पाठः दाक्षिणात्ये पाठे कोष्ठे धृतः ।
११. ल—वनराजिषु ।
१२. कै रा म—°संपदां ।
१३. अ—विक्रमत् ।
१४. भ च—पश्य पंपां शिवजलां सुशीतां पुष्करायुतां ।

शुकैः क्रौञ्चैश्च संकीर्णा विहंगमृगसेविता । [९८उ
४१] अधिकं शोभते पम्पा कूजद्भिर्विहगैः शुभैः ॥४९॥ [९९
दीपयंतीव मे कामं विविधा मुदिता द्विजाः ।
४२] श्यामां पद्ममुखीं स्मृत्वा मन्मथो वर्धते मम ॥५०॥ [१००पू
पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान् ।
४३] अहं तु मृगशावाक्ष्या वैदेह्या विरही कृतः ॥५१॥ [१०१
एक एव सुखी लोके चक्रवाको विहंगमः ।
N] यस्य दृष्टिमनोरम्या छायेवानुगता प्रिया ॥५२॥ [N
प्रत्यादिशति मां मुग्धं चक्रवाकः सुपण्डितः ।
N] एवं हि रक्ष्यते नारी न त्वया रक्षिता यथा ॥५३॥[N

---

१. कै रा ल अ ब म—संकीर्णां विहंगमृगसेविताम् ।
२. कै रा—विविधामुदितायुधां । कै - प्रान्तभागे संशोध्य "मुदिता द्विजा' इत्येव पठितम् ।
ल—विविधां मुदितां युताम् ।
ब म—विविधामुदितायुधम् ।
३. कै रा ल अ ब म—दृष्ट्वा ।
४. अतः परमधिकः पाठः—
च—अस्मिन् सानुवरे रम्ये मत्तद्विजवरायुते ।
भ— ,, सानुरुहे ,, ,,
भ च—रमेयं विहगोत्कुष्टे विविधे काननोत्तमे ।
पद्मसौगंधिकयुते शिवे शोकजरापहे ।
पश्येयं यदि वैदेहीं नलिन्युपवने सुखे ।
५. अ—एष एव सुखं ।
६. कै रा अ ब म—दृष्टिमनो० ।
७. कै रा—प्रियाम् ।
८. भ च—इत्यादिशति ।
९. भ च—भार्या ।
१०. अ—तथा ।

हा प्रिये मृगशावाक्षि तप्तकाञ्चनवर्णिनि ।

४६] कष्टं मां नाभिजानासि दुःखितं मूढचेतसम् ॥५४॥ [N

निर्वास्यमानं कैकेय्या हृतराज्यं वनेचरम् ।

४७] नात्यजः कथमद्य त्वं त्यक्त्वा निर्विषयं गता ॥५५॥ [N

क्व प्रीतिः क्व च सा भक्तिः क्व सा तुष्टिः क्व सा दया ।

४८] यन्न मां शोकदुःखार्तं ना?(र्तम)भिजानासि जानकि ॥५६॥[N

एवं स विलपंस्तत्र शोकोपहतचेतनः । [१२६पू

४९] अवैक्षत शिवां पम्पां रम्यां वारिमयीं शुभाम् ॥५७॥[१२७उ

निरीक्षमाणस्तु तदा महात्मा

रम्यं वनं पर्वतनिर्झरांश्च ।

उद्विग्नचेताः सहलक्ष्मणेन

५०] विलप्य दुःखोपहतः प्रतस्थे ॥५८॥ [१२८

तावृष्यमूकं सहितौ प्रयातौ

सुग्रीवशाखामृगसेवितं तम् ।

---

१. अ ब म—निर्वाप्य० ।

२. कै रा अ ब म—मान्यः कः ।

ल—नान्यतः ।

३. रा—शोकदुःखान्तं ।

४. कै ल अ ब म भ—निरीक्ष्य० ।

५. अ म—वनं रम्यं ।

त्रस्तास्तु दृष्ट्वा हरयो बभूवुर्
८१] महौजसौ राघवलक्ष्मणौ तौ ॥८९॥ [१२९

इत्यार्षे रामायणे आरण्यकाण्डे महर्षिवाल्मीकिविरचिते रामोन्मादो नाम द्व्यशीतितमः सर्गः ॥८२॥

समाप्तश्चेदमारण्यकाण्डम् ।

१. भ—दृष्टा ।

२. ल म—महोजसौ । ब—महौजसा ।

३. अ—महर्षिवाल्मीकिविरचिते आरण्यकाण्डे ।

ल—वाल्मीकिवि० । भ—दंडकारण्ये पम्पातीरे ।

४. कै रा ल ब म भ—नास्ति ।

## १—व्यक्तिविशेषनामसंग्रहः ।

## २–देशविशेषनामसंग्रहः



## ३–पुरनामसंग्रहः

## ४–पर्वतनामसंग्रहः



---

## ५–वनोपवननामसंग्रहः



---

## ६—नदनद्यादिनामसंग्रहः ।



---

## ७—लतावृक्षादिनामसंग्रहः

# ८—युद्धोपकरणनामसंग्रहः ।

# ९–शब्दविशेषसंग्रहः

## १०–अलङ्कृतपद्यांशसंग्रहः

देवप्रभावः ( शरभङ्गः ) ६, २.
सूर्यवैश्वानरप्रभः ( देवः ) ६, ३.
तरुणादित्यसन्निभं (छत्रम्) ६, ५.
पाण्डुराभ्रसितं तस्य चन्द्र-
मण्डलसन्निभं (छत्रम्) ६, ६.
निष्काः ज्वलनसन्निभाः ६, १२.
जुहोमि गात्राणि जीर्णां
त्वचमिवोरगः ६, ३०.
ज्वलनतेजस्-(राम-) ७, १.
ज्वलनार्कसमप्रभ-(ऋषि ) ७, ४.
देवानामिव वासवः ७, ११.
ब्रह्माणमिव वासवः ८, १२.
( मुनिपुङ्गवैः ) विधूमैरिव
पावकैः ९, ७.
(अविषह्यांशुः) अमार्गेणागतां
लक्ष्मीं प्राप्येवान्वयवर्जितः
९, ८.
सीतया चानया सार्धं छाय-
येव सुवृत्तया ९, ११.
स्वर्गसङ्काश-( आश्रम-) १३, ६.
दर्भाः वैडूर्यसन्निभाः १४, ७.
नवाभ्रशिखरोप-(धूमाग्र-)१४, ८.
सूर्यसन्निभ-( विमान-) १५, २२.
अगस्त्यं सूर्यसन्निभम् १६, २१.
सूर्यसंकाश-( शर-) १६, ३१.
बाणैर्ज्वलद्भिरिव पन्नगैः १६,३२.
वज्रं वज्रधरो यथा १६, ३४.
सूर्याग्निसदृशप्रभ-(तनुत्राण-)
१६, ३५.
मुनिं दीप्तमिवानलम् १७, ९.
रिपून् दिधक्षन्निव १९, ६१.
आदित्यसंकाशैः पद्मैः २०, ११.
नगाश्चला इवाभान्ति गजैः
परमदर्पितैः २०, १७.
स्वर्गलोके यथेश्वरः २०, २९.
अलङ्कृत इवाभाति येन
संवत्सरः किल २१, ४.
अगस्त्यसेवितां पुण्यां सेव-
माने दिशं रवौ । विहीन-
तिलकेव स्त्री नोत्तरा दिक्
प्रकाशते ॥ २१, ८.
रविसंक्रान्तसौभाग्यस्तुषा-
रारुणमण्डलः । निःश्वास-
वान्निवादर्शश्चन्द्रमा न
प्रकाशते ॥ २१, १२.
पौर्णमास्यामियं ज्योत्स्ना
तुषारकलुषीकृता । सीतेव
तपसा क्षामा दृश्यते न तु
शोभते ॥ २१, १३.
खर्जूरपुष्पाकृतिभिः शिरोभिः
पुष्पगुण्ठितैः । शोभन्ते
किञ्चिदालम्बाः शालयः

सुवर्णप्रतिरूपेण तन्यसे वै
शिखा(?रुषा) ग्निना ३४, २२.

धराधरमिवाक्षोभ्यमेकचक्र-
मिवाचलम् ३४, २३.

पाशहस्त इवान्तकः ३४, २४.

तोयवर्षमिवावर्षे चातक-
स्येव वाशतः ३५, २.

प्रदीप्तामशनीमिव (गदाम्) ३५,६.

मृत्युपाशोपमाम् (गदाम्) ३५,८.

(शरैः) गदा मन्त्रौषधैर्वीरैर्व्या-
लीव विनिपातिता ३५, ९.

प्राणानपहरिष्यामि गरुत्मा-
नमृतं यथा ३५, १५.

स्वप्स्यसे गां समालिङ्ग्य
सुदतीं वल्लभामिव ३५, १७.

(रक्तं सुस्राव) गिरेः प्रस्रवणा-
न्तस्य तोयधारा इवाम्बरात्
३५, ३३

(शरं) रामो जग्राह ब्रह्मदण्ड-
मिवोद्यतम् ३५, ३६.

स पपात खरो भूमौ दह्यमान
इवाग्निना ३५, ४०.

रुद्रेणेव विनिर्दग्धः श्वेतस्यार्थे
यथान्तकः ३५, ४०.

(पपात) वृत्रवज्रेण फेनेन न-
मुचिर्यथा ३५, ४१

सहोपविष्टं सचिवैर्मरुद्भिरिव
वासवम् ३६, ४.

आसीनं सूर्यसङ्काशं ज्वलन्त-
मिव पावकम् ३६, ५.

स्थितं व्यक्तमिवान्तकम् ३६, ८.

(शिरांसि) बालेन्दुनिभदंष्ट्राणि
वह्निवक्त्राम्बराणि च ३६.२०

नाराचान् सर्पानिव महाविषान्
३८, ६.

(सीता) वेदिप्रतिममध्यमा
३८, १२.

स सर्वेषु लोकेष्विव पुरन्दरः
३८, १४

पूर्णचन्द्रनिभानना (वैदेही)
३८, १७.

दशशीर्ष इवाद्रिराट् (रावणः)
३९, ९,

विद्युन्मण्डलवान्मेघः
सबलाक इवाम्बरे ३९, १०.

श्रीः पद्मेनेव भूषिता ३९, ५५.

निराबाधो हरिष्यामि राहु-
श्चन्द्रमसं यथा ३९; ६२

(रामः) महेन्द्रवरुणोपमः
४०, ३.

राजा सर्वस्य लोकस्य दे-
वानामिव वासवः ४०, १४.

प्रभामिव विवस्वतः ४०, १५.

शरार्चिषमनाधृष्यं चापखड्गे-

न्धनं रणे । रामाग्निं सहसा
दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ ४०, १६.
धनुर्व्यादितदीप्तास्यं शरदंष्ट्र-
ममर्षणम् । आशीविषमिव
क्रुद्धं न रामं द्रष्टुमर्हसि ॥
४०, १७.
रामान्तक- ४०, १८.
दीप्तस्येव हुताशस्य शिखां
दीप्तां तु मध्यमाम् ४०, २०.
रामो राजीवलोचनः ४१, ६.
बालश्चन्द्र इवोदितः ४१,१३.
मेघसङ्काश- ४१, १४.
वज्रसङ्काश- ४२. १०.
पाशहस्तमिवान्तकम् ४२, १२.
रकारादीनि नामानि रामत्रस्त-
स्य रावण । रत्नानि चैव रा-
माश्च त्रासं सञ्जनयन्ति मे॥४२,१५.
हितं न प्रतिजग्राह मर्तुकाम
इवौषधम् ४३, १.
वाक्यं निष्फलमत्यर्थं बीज-
मुप्तमिवोषरे ४३, ३.
सहस्राक्षः शचीमिव ४३, १८.
रक्ष्यमाणा न वर्धन्ते मेषा
गोमायुना यथा ४४, १२.
विमानमिव तं रथम् ४७, ७.
प्रभामिवार्कस्य विशोभमा-
नाम् ४७, २३.

कुन्देन्दुहंससदृशेनोदरेण ४८, २.
तं मृगं काञ्चनं दृष्ट्वा दिव्यं
मृगमिवाम्बरे ४९, ९.
जिह्वां मुखान्निःसरन्तीं सन्ध्या-
भ्रादिव विद्युतम् ४८, १७.
शंखशुक्तिनिभोदरः (मृगः)
४८, २०.
पादैर्विद्रुमसमप्रभैः ४८, १८.
प्राद्रवत् मृगरूपमिव क्रुद्धो
यज्ञं दक्षस्य शूलभृत् ४९, ३.
विच्छिन्नैरिव संवीतः शार-
दाभ्रैर्निशाकरः ४९, ५.
(उपार्कषत) कुटुम्बभरणा-
सक्तं नरं मोक्षपथादिव ४९,६.
सूर्याग्निसदृशम् (अस्त्रम्) ४९, ८.
(अस्त्रं) ज्वलन्तं पावकं
यथा ४९, ८.
रक्षसां वशमापन्नं सिंहाना-
मिव गोपतिम् ५०; ४.
त्रस्तां मृगवधूमिव ५०,९.
इन्दीवरश्यामं (रामम्) ५०, २५.
पद्मदलेक्षणं (रामम्) ५०, २५.
(वैदेहीं समुपागमद् रावणः)
रहितामर्कचन्द्राभ्यां सन्ध्या-
मिव महत्तमः ५१, ३.
कमलेक्षणा (सीता) ५१, ८.
विहीनां रामचन्द्रेण (सीतां

रावणः समुपागमत् ) ।
रोहिणीं शशिना हीनां
दिवि घोर इव ग्रहः ॥ ५१, ४.
(रावणो) अभ्यगच्छत वैदेहीं
चित्रामिव शनैश्चरः ५१, ८.
स (रावणः) पापः साधुरूपेण
तृणैः कूप इवावृतः ५१, ९.
पूर्णचन्द्रनिभानना ( सीता )
५१, १०.
(सीतां) पद्महीनामिव श्रियम्
५१, १३.
मनो हरसि मे भीरु नदी-
वेग इव प्लवम् ५१, १५.
( सीता ) काञ्चनाम्भोजगर्भाभा
५१, १६.
ह्रीः कान्तिश्च शुभा लक्ष्मीरथवा
त्वं वरानने ५१, १६.
महाचलमिवाकम्प्यं नागेन्द्र-
सदृशं पतिम् । महोदधि-
मिवाक्षोभ्यमहं राममनुव्रता॥
५२, ३२.
पूर्णचन्द्रनिभं रामम् ५२, ३२.
सिंहविक्रान्तगामिनं (रामम्)५२,३२.
सिंहं सिंहीव दुर्धर्षमहं राम-
मनुव्रता । जम्बुकस्त्वं नर-
व्याघ्रीं मामुपासितुमिच्छति॥
५२, ३३.

व्याघ्र्यास्तरुणपुत्रायाः प्रजामा-
दातुमिच्छसि । सिंहं सुप्तं वने
दुर्गे मौर्ख्याद् दोधूयसे पदा ।
५२, ३६.
(न शक्या स्प्रष्टुम्) आदित्यस्य
प्रभा यथा ५२, ३४.
अक्षि सूच्या तिमृशसि
जिह्वया लिह्यसि क्षुरम् । यो
रामस्य प्रियां भार्यामपहर्तुं
त्वमिच्छसि ॥ ५२, ३५.
यदन्तरं सिंहश्रृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः।
सौराष्ट्रसौवीरकयोर्यदन्तरं
तदन्तरं वै तव राघवस्य च॥
५२, ३७.
यदन्तरं काञ्चनसीसलोहयो-
र्यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिविडालयोर्वने
तदन्तरं वै तव राघवस्य च ॥
५२, ३८.
यदन्तरं वायसवैनतेययो-
र्यदन्तरं काकमयूरयोर्वने ।
यदन्तरं सारसगृध्रयोर्वने
तदन्तर वै तव राघवस्य च ॥
५२, ३९.
हृतापि तेऽहं न जरां गमिष्ये वज्रो
यथा मक्षिकया निगीर्णः। ५२,४०.

गात्रप्रकम्पैर्व्यथिता बभूव
स्पृष्ट्वेव मुक्ता कदली गजेन ५२, ४१.
मृत्युरिवोग्रतेजाः (रावणः) ५२, ४२.
विद्रवन्ति भयाद् भीता
मृत्योरिव सहप्रजाः ५३, २.
शिखिप्रभे ( नेत्रे ) ५३, ५.
दीप्तांशुः शिशिरांशुर्मे भया-
त्संपद्यते रविः ५४, ७.
निष्कम्पपत्रास्तरवो नद्यश्च स्ति-
मितोदकाः। भवन्ति तत्र यत्राहं
तिष्ठामि वरवर्णिनि ५३, ८.
(लङ्का) इन्द्रस्येवामरावती ५३, ९.
पदाभिहत्येव पुरा पुरूरवसमुर्वशी ५३, १७.
जीवेद्धि लोकान्तरगोऽप्यमर्त्यः ५३, २२.
(रावणः) जीमूतनिचयप्रभः ५४, ९.
पद्माक्षी ( सीता ) ५४, १६.
पन्नगेन्द्रवधूमिव वेष्टमानाम् ५४, २२.
वृन्तादिव फलं पक्वं पातयामि
रथोत्तमात् ५५, ७.
(मा त्वा घोरेण चक्षुषा) दहेद्
दहनभूतेन वृक्षमिन्द्राशनिर्यथा। ५५, १६
न शक्तस्त्वं बलाद्धर्तुं ... हेतुभि-
र्न्यायसंयुक्तैर्मूढो वेदश्रुतीमिव। ५५, २२.

कमलपत्राक्षी (सीता) ५५, २६.
स सम्प्रहारस्तुमुलः ... बभूव
वातोद्धतयोर्मेघयोर्गगने यथा। ५६, ३.
सपक्षयोर्माल्यवतोर्महा-
पर्वतयोरिव। ५६, ४.
पूर्णचन्द्रप्रतीकाशं (छत्रम्) ५६, १२.
विषपानं पिबस्येतत् पिपासित
इवोदकम्। ५७, ५.
बन्धाय बडिशं गृह्य सामिषं
जलजो यथा। ५७, ६.
अवरूढो वरारोहैर्यथा स्याद्
दुष्टवारणः। ५७, १४.
नीलजीमूतनिकाशवर्ण,
शान्तमिवाग्निदावम् (जटायुषम्) ५७, २३.
शशिप्रभानना (सीता) ५७, २४.
नक्षत्रमाला विमला मेरुं नग-
मिवोत्तमम्। ५८, २५.
सीता ताराधिपमुखी ५८, २.
आक्रन्दमानां सन्त्रस्तां
किन्नरीं वा वनान्तरे। ५८, ५.
क्रोशन्तीं कुररीमिव ५८, ७.
राजपुत्री रराजाथ विद्युत्
सौदामिनी यथा। ५८, १३
अधिकं परिबभ्राज गिरिर्दीप्त

इवाग्निना ५८, १४.

बभासे जलदं नीलं भित्त्वा चन्द्र इवोदितः। ५८, १६.

पद्मपत्राभम्,रुदितस्यापमृष्टास्रम्, चन्द्रवत् प्रियदर्शनम्, कनकप्रभम्। (वदनम्)

५८, १७; १८.

राक्षसेन्द्रसमाधूतं तस्यास्तद्वदनं शुभम्। शुशुभे न विना रामं विना नक्तमिवोडुपः॥

५८, १८.

सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपम्।शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता॥

५८, १९.

सा पद्मगौरी नीलाङ्गे रावणे जनकात्मजा। विद्युद्भ्रान्ता इवाम्भोदैः शुशुभे तप्तभूषणा॥

५८, २१.

तस्या भूषणशब्देन वैदेह्या राक्षसाधिपः।बभूव विमलो नीलः सघोष इव तोयदः॥

५८, २२.

भूषणैर्विविधैः सा तु राक्षसेन्द्रमशोभयत्।नक्षत्रमाला विमला मेरुं नगमिवोत्तमम्॥ ५८, २५.

सघोषाण्यवकीर्यन्त उल्का भ्रष्टा इवाम्बरात्। ५८, २६.

(नूपुरं) विद्युद्वलयसङ्काशम्।

५८, २७.

तनुपल्लवरक्ता सा नीलाङ्गं राक्षसेश्वरम्। अशोभयत वैदेही गजकक्षेव काञ्चनी॥

५८, २५; २८.

तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा। ५८, २९.

वैदेह्या न्यपतद् (हारो) दिवो गङ्गेव भूतले। ५८, ३०.

मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः। ५८, ३१.

नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः। सखीमिव निरुच्छ्वासाः शोचन्तीव स्म मैथिलीम्॥ ५८, ३२.

जलप्रवाहविरुतैःशृङ्गैरुच्छ्रितबाहवः।......विक्रोशन्तीव पर्वताः॥ ५८, ३४.

(मैथिली) पूर्णचन्द्रनिभानना

५९, २.

न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथञ्चन। वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः॥

५९, १५.

न हि त्वमीदृशं कृत्वा तस्या-

लीकं महात्मनः । जीवितुं शक्यसे मूढ विषं पीत्वेव बालिशः । ५९, २५.

कौशेयं कनकप्रभम् ६०, २.

जहार तां सुसंहृष्टो रूपिणीं मृत्युमात्मनः । उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् । ६०, ७.

तूर्णमतीयाय चापाच्छर इव च्युतः ६०, ८.

निदध्यौ रावणः सीतां मयो मायामिवासुरीम् ६०, १३.

शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ६०, २४.

वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ६१, ३.

मलिनामपि शोभिताम् ६१, ३; ४.

मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ६१, ४.

चन्द्रलेखामिवाम्भोदैराच्छन्नामम्बरे निशि ६१, ५.

सद्यो वनादुपानीतां त्रस्तां वत्सतरीमिव ६१, ५.

विमानं सूर्यसङ्काशम् ६१, ३०.

पद्मसङ्काशम् ( वदनं ) ६१, ३१.

धर्मसेतुरिवापरः ६२, २.

राघवे निर्विषाणि स्युः सुपर्णे पन्नगा यथा ६२, ६.

शरीरं विश्लिष्यन्ति गङ्गा-कूलमिवोर्मयः ६२, ७.

पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ६२, १०.

संरब्धश्चरणोत्क्षेपैर्दारयन्निव मेदिनीम् ६२, २८.

आनयध्वं मम वशे वन्यां गजवधूमिव । ६२, ३०.

राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा । ६२, ३३.

विस्वरं प्रतिमुञ्चन्तीं जलार्द्रामिव दुन्दुभिम् । ६६, ७.

श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ६७, ५.

रुदन्तमिव वृक्षैश्च म्लान-पुष्पफलद्रुमम् । ६७, ५

बिल्वोपमस्तनी ६७, ११.

करभोरु ६७, १३.

तिलकोपमा ६७, १४.

अशोक शोकापनुद शोकोपहतचेतसम् । ६७, १५.

पक्वतालनिभस्तनी । ६७, १६.

मृगशावाक्षी ६७, १८.

मृगविक्षोभिणीं कान्त्या मृगीभिः सहितां वने । ६७, १८.

चम्पकहेमाभा ६७, २७.
नवपल्लवकोमलौ (भुजौ) ६७,२८.
व्याघ्रमध्यगतेवासीद्धरणी
त्रस्तलोचना। ६७, ३०.
सार्थेनेव परित्यक्ता ६७, ३१.
जपापुष्पनिकाशैः (क्षत-
जबिन्दुभिः) ६८, ८.
रामो मत्त इव स्खलन्। ६८, १३.
मुक्तामणिनिभं (धनुः) ६८,१५
तरुणादित्यसङ्काशं (छत्रम्)
६८, १६.
प्रभा यथा सूर्यमिवास्तपर्वते
विहाय (याता) ६८, २४.
पङ्कमासाद्य विपुलं सीदन्त-
मिव कुञ्जरम् ६९, ९.
(प्राप्स्यसे मैथिलीं) यथा
विष्णुर्महाबाहो बलिं बद्ध्वा मही-
मिमाम् ६९, १२.
गतसूर्यमिवाकाशं पुरं वृत्तो-
त्सवं यथा। प्रतिभात्ययमा-
वासो हतवीर इवाहवः।६९, २२.
परित्यज्य यथा स्वर्गमभिजाने
यथामृतम्। ६९, २४.
नाशयित्वेव सर्वस्वम्
(अभिशोचामि) ६९, २४.
क्रुद्धोऽब्रवीद्गिरिं तं तु सिंहः
क्षुद्रमृगं यथा। ६९, ४४.
दिधक्षुरिव पावकः ६९, ४८.
सम्प्राप्य पण्डितः कृच्छ्रं नैव
शोके निमज्जति। मूर्खस्तु
कृच्छ्रमासाद्य शिलेवाम्भसि
मज्जति॥ ६९, ५६.
अप्राज्ञ इव किं प्राज्ञ भार्या-
हेतोर्विमुह्यसि। ६९, ५८.
संहृत्येव शशिज्योत्स्नां ज्वलन्
सूर्य इवोदितः। ७०, १.
निरन्तरमिवाकाशं करिष्या-
म्यद्य सायकैः। कालक्षयात्...
अभिक्रुद्ध इवान्तकः ७०, २४.
(शोकः प्रदीपयति) सीता-
हरणतीव्रोऽसौ दावाग्निरिव
पर्वतम्। ७०, ३१.
लोकानां शङ्कया युक्तं संवर्तक-
मिवानलम्। ७१, १.
हन्तुकामं पशुपतिं क्रुद्धं
दक्षक्रतुं यथा। ७१, २.
नालं ते विप्रियं कर्तुं दीक्षित-
स्येव साधवः। ७१, १४.
क्षुत्पिपासापरिश्रान्तमाशी-
विषमिवोद्धतम्। ७२, ३.
वज्राग्निसमवेगेन विद्धं शोक-

महेषुणा । सीताहरणदुःखार्तं
व्यथितात्मानमातुरम् । ७२, ४.
जातक्रोधः सहस्राक्षो वज्रेणेव
विरोचनम् । ७३, १३.
समुद्रान्तां चालयन्निव मेदिनीम् ।
७३, १४.
यामोषधिमिवापुष्पामन्वेषसि
महावने । ७३, १६.
तमसीव च वर्तेते बुबुधाते
न किञ्चन । ७४, २.
लब्धोऽमृतमिवामरैः ७४, ४.
या च त्वां सुषुवे देवी वज्रा-
युधमिवादितिः । ७४, १०.
चन्द्रज्योत्स्नेव निर्मला ७४, ११.
अरुन्धतीव पुण्याख्या ७४, ११.
सन्निपत्य शिरो भूमौ प्रसार्य
चरणौ तथा । विक्षिप्य च
शरीरं स्वं पपात धरणीतले ॥
७५, २०.
कालो हि दुरतिक्रमः ७५, २३.
संजज्ञे विपुलः शब्दो
भञ्जन्निव महद्वनम् । ७६, १४.
वनस्य तस्य शब्दोऽभूद्
दिवमापूरयन्निव । ७६, १५.
(कबन्ध–) महागिरिमिवो-
च्छ्रित-लेलिहानमिवान्तक-
७६, १८; २०.

( बाहू ) परिघसन्निभौ,
पञ्चास्याविव पन्नगौ ७६, २६.
सबाणायुधखड्गौ तु तीक्ष्ण-
शृङ्गाविवर्षभौ ७६, ३२.
कालाभिपन्नाः सीदन्ति
बालुकासेतवो यथा ७६, ४२.
नादयन् जलदो यथा ७७, ७.
तच्छरीरं कबन्धस्य घृत-
पिण्डोपमम् ७८, ३२.
देवारण्यसमे ( वने ) ७९, २५.
मेघघनप्रख्यं ( वनम् ) ८०, २२.
बालार्कसदृशैः पद्मैः प्रदीप्ता-
मिव सर्वतः ( पम्पाम् ) ८१, २१.
शैलाभा द्रुमाः सशिखरा इव
८२, ३.
पुष्पैः परिस्तोमैरिवोद्यतैः ८२, ४.
हाटकप्रतिसंच्छन्नान् वरान्
पीताम्बरानिव ८२, ११.
मृष्टं विनदमानश्च कोकिलो
मामिवाह्वयन् ८२, १३.
वक्ष्यतीव न भीः कार्या
हैमैरर्थी मृगैरयम् । ८२, १५.
मत्प्रसादमिवाशंकं करेण
परिमार्जति ८२, १६.
( सन्तापयति ) नवोदित
इव ग्रहः ८२, १८.
परिचुम्बति संश्लिष्य भ्रमर-

स्चूतमञ्जरीम् । नवसंगमसंहृष्टः
कामी प्रणयिनीमिव ८२, २३.
विक्षिप्तः साम्प्रतं नार्या
सव्यलीक इव प्रियः ८२, २४.
आह्वयन्तीव चान्योन्यम् ८२, २५.
एष पुष्पवहो वायुः सुखस्पर्शः
सुखावहः । तां विचिन्तयतः
कान्तां पावकप्रतिमो मम ॥
८२, २७.
तर्जयन्निव संयाति सिंहः ८२, ३१.
नलिन्यः सम्प्रकाशन्ते जले
तरुणसूर्यवत् ८२, ३३.
भीताभिरिव वल्लीभिः
कुड्मलाञ्जलयः कृताः ८२, ३४.
निःश्वास इव सीतायाः
वाति वायुः ८२, ३८.
निष्पत्रैर्दूरतो रम्यः प्रदीप्तैरिव
किंशुकैः ८२, ४१.
दीपयन्तीव मे कामं विविधा
मुदिता द्विजाः ८२, ५०.
एवं हि रक्ष्यते नारी न त्वया
रक्षिता यथा ८२, ५३

---

# ११—आर्षप्रयोगसंग्रहः

---

## १६—छन्दोवैषम्ययुक्तपद्यांशसंग्रहः

---

# १३—सूक्तिसंग्रहः

छलच्छिद्रा हि राक्षसाः १, २९.
यासां स्त्रीणां प्रियो भर्ता
तासां लोकाः सनातनाः। १, ५४.
स्त्रीणामार्यस्वभावानां
परमं दैवतं पतिः। १, ५५.
भर्तृनाथा हि योषितः। १, ५७.
नित्यं गुरुः पतिः। १, ६२.
पतिशुश्रूषणान्नान्यत्तपो
नार्या विधीयते। १, ६९.
मनुष्यसदृशी बुद्धिस्त-
स्यासीद् धैर्यनाशिनी। २, ११.
सदृशाच्चापकृष्टाच्च लोके
कन्या पिता वरात्। प्रधर्षणाम-
वाप्नोति शक्रेणापि समो यदि॥
२, २३.

पूजनीयश्च मान्यश्च
राजा दण्डधरो गुरुः। ४, १७
दण्डश्चै (इन्द्रस्यै-) व चतुर्भागः
प्रजा रक्षति राघव। ४, १८.
अवटे चापि मे राम
प्रक्षेप्तव्यं कलेवरम्। ५, ४७.
रक्षसां गतजीवानामेष धर्मः
सनातनः। अवटे ये निधीयन्ते
तेषां लोकाः सनातनाः॥ ५, ४८.
एतद्धि किल देवानां
वयो भवति नित्यदा। ६, १३.

ब्रह्मलोकं न गच्छामि
त्वनभ्यर्च्य प्रियातिथिम्। ६, २४.
राजा स्वानिव प्राणानिष्टाँ-
ल्लोकान् सुतानिव (रक्षेत्) ७, १५.

अधर्मो हि महांस्तस्य भवेदिह
महीपतेः। यो हरेद् बलिषड्-
भागं न च रक्षेत पुत्रवत्॥ ७, १४.
तस्माद् राज्ञस्तु षड्भागः
प्रजा धर्मेण रक्षतः। ७, १७.
मिथ्यावाक्यं न ते भूतं न
भविष्यति च प्रभो। १०, ५.
कुलेऽप्यसम्मतं स्त्रीणां परेषां
धर्मदूषणम्। १०, ५.

निर्वैरं क्रियते मोहात् परप्राण-
विहिंसनम्। १०, ५.
स्नेहाच्च बहुमानाच्च स्मारये
न च शिक्षये। १०, १९.

न कथञ्चिदसत्कार्यं
गृहीतधनुषा त्वया। १०, १९.
धनुषा कार्यमेतावदार्तानां
परिरक्षणम्। १०, २१.
क्व च शस्त्रं क्व च वनं क्व च
क्षात्रं तपः क्व च। व्याविद्ध-
मिदमस्माभिरेष धर्मस्तु पूज्यताम्।
१०, २२.

अनार्या कलुषा बुद्धिर्जायते शस्त्रसेवनात् । १०, २३.

धर्मादर्थः प्रभवते धर्मात् प्रभवते सुखम् । धर्मेण लभते स्वर्गं धर्मसारमिदं जगत् ॥ १०, २५.

न सुखाल्लभते सुखम् । १०, २६

क्षत्रियैर्धार्यते चापं नार्तशब्दो भवेदिति । ११, ३.

बहुविघ्नं तपो नित्यं दुश्चरं चैवं राघव । ११, १६.

सत्यमिष्टं हि मे सदा । १५, १९.

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् । न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः ॥ ११, २०.

तथा संवसतस्तस्य मुनीनामाश्रमान् प्रति । नव संवत्सराः साधं गता रामस्य धीमतः ॥ १३, ५.

अपूजयित्वा काकुत्स्थ तपस्विन-मुपागतम् । भुङ्क्ते यः स परे लोके स्वानि मांसानि खादति ॥ १६,२६.

यो गृहायातमतिथिं यथाशक्ति न पूजयेत् । दत्त्वा स दुष्कृतं तस्य पुण्यमादाय गच्छति ॥ १६, २७.

दुष्कृतं (?दुष्करं) कृतवत्येषा (सीता) वने त्वां न जहाति या । १७, ४.

एषात्र प्रकृतिः स्त्रीणां सृष्टिश्च पुरुषर्षभ । पदस्थमनुरज्यन्ते विषमस्थं त्यजन्ति च ॥ १७, ५.

शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । दहनानिलयोः शैघ्र्यमनुकुर्वन्ति योषितः । १७, ६.

न तथा कालकूटं हि विषं हन्याद् यथा स्त्रियः । १७, ६.

ऋषीणामभयं वीर दातुमर्हसि मानद । १६, २९.

उद्यतानां हि युद्धाय येषां भवति लक्ष्मण । निष्प्रभं वदनं दीनं तेषां विद्यात् पराजयम् ॥ २९, ९.

अनागतविधानं च कर्तव्यं शुभलक्षण । २९, १०.

स्नेहान्नो विक्लवं मनः । २९, २१.

उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् । त्रयाणामपि लोकानामीश्वरो नावतिष्ठति ॥ ३४, ३.

कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर । तीक्ष्णं सर्वो जनो हन्ति सर्पं दुष्टमिवागतम् ॥ ३४, ४.

न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः । ऐश्वर्यं प्राप्य तिष्ठन्ति जीर्णमूला इव द्रुमाः ॥ ३४, ७.

अवश्यं लभते कर्ता फलं पापस्य कर्मणः। क्षयं पर्यागते काले द्रुमः फलमिवाकृतौ ॥ ३४, ८.

न चिरात्प्राप्यते लोके पापानां कर्मणां फलम् । सविषाणा-मिवान्नानां भुक्तानां क्षणदाचर ॥ ३४, ९.

आत्मना कथमात्मानमप्रशस्यं प्रशंससि । ३४, १८.

विक्रान्ता बलवन्तो वै ये भवन्ति नरा भुवि । न ते गुणानां माहा-त्म्यं कथयन्ति स्वयं भुवि ॥ ३४, १९.

प्राकृतास्त्वकृतात्मानो लोके-स्मिन् कुलपांसनाः । निरर्थका विकत्थन्ते यथा राम विकत्थसे ॥ ३४, २०.

बलं व्यपदिशन् वीरः समरे कोभिधावति । ३४, २१.

कालपाशपरिक्षिप्तो भवेत पुरुषो यदा । वाच्यावाच्यं न जानीते प्राकृतोसौ भवेत्तदा ॥ ३५, २७.

प्रसक्तं कामभोगेषु स्वैरवृत्तं महीपतिम् । लोका न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३७, ३.

स्वयं कार्याणि यः काले नानु-तिष्ठति भूमिपः । तस्यात्मा सह कार्येण तेनैवाशु विनश्यति ॥ ३७, ४.

अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् । वर्जयन्ति नरा दूराग्नर्दीपङ्कमिव द्विपाः ॥ ३७, ५.

ये तु नेच्छन्ति विषयं पराधीना ( ?ने ) नराधिपाः । ते न मग्नाः प्रकाशन्ते गिरयः सागरेष्विव ॥ ३७, ६.

येषां चाराश्च कोपश्च नयश्च जयतां वर । अस्वाधीना नरेन्द्रा ये प्राकृतैस्ते नरैः समाः ॥ ३७, ७.

राजानश्चारचक्षुषः । ३७, ९.

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् । व्यसने सर्व-भूतानि नाभिनन्दन्ति भूमिपम् ॥ ३७, १५.

अभिमानिनमग्राह्यमात्मसंभावितं नरम् । क्रोधनं चैव नृपतिं व्यसने घ्नन्ति मानवाः ॥ ३७, १६

शुष्कैस्तृणैर्भवेत्कार्यमथवा लोष्टपांशुभिः । नतु राज्यपरिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ ३७, १८.

उपभुक्तं यथा वस्त्रं स्रजोऽपि

मृदिता यथा। एवं राज्य-
परिभ्रष्टः समर्थोऽपि निरर्थकः।
३७, १९.

अप्रमत्तश्च यो राजा धर्मज्ञो
विजितेन्द्रियः। कृतज्ञो धर्मशीलश्च
स राज्ये तिष्ठते चिरम्॥ ३७, २०.

नयनाभ्यां प्रसुप्तो यो जागर्ति
नयचक्षुषा। त्यक्तक्रोधो-
ऽप्रमादश्च यो नयज्ञः स
पार्थिवः॥ ३७, २१.

सुलभा वै महाराज पुरुषाः
प्रियवादिनः। अप्रियस्य
सुपथ्यस्य वक्ता श्रोता च
दुर्लभः॥ ४०, २.

पापवृत्तो बहिःशीलः पाप-
मन्त्री नराधिपः। आत्मानं
स्वजनं हन्ति प्रजां हन्ति सुदुर्मतिः॥
४०, ८.

अकुर्वन्तोऽपि पापानि शुचयः
पापसंश्रयात्। परपापैर्विनश्यन्ति
मत्स्या नागह्रदे यथा॥ ४१, २३.

सुहृदा तेन वक्तव्यं प्रथितेन
विपश्चिता। प्रबद्धाञ्जलिना
राज्ञे यद्रक्षेद् भूतिमात्मनः॥
४३, ९.

वाक्यं चाप्रतिकूलं हि मृदुपूर्वं
हितं शुभम्। उपचारेण संयुक्तं
वक्तव्यं साधु पार्थिवे॥ ४३, १०.

सावमानं तु यद्वाक्यं न्यायतो
हीनमुच्यते। नाभिनन्दति
तद्राजा मानदो मानवर्जितम्॥
४३, ११.

पञ्च रूपाणि राजानो धारयन्ति
महौजसः। अग्नेरिन्द्रस्य सोमस्य
यमस्य वरुणस्य च॥ ४३, १२.

राज्ञो हि प्रतिकूलो यो न जातु
सुखमेधते। ४३, २०.

बुद्धाः खलु न बुध्यन्ते सचि-
वास्तव रावण। ये त्वामत्यर्थ-
मापन्नं विनयन्ति न शाश्वताः॥
४४, ६.

धर्ममर्थं च कामं च यशश्च
विपुलं भुवि। स्वामिप्रसादात्
सचिवाः प्राप्नुवन्ति निशाचर॥
४४, ८.

पिपर्यये हि तिष्ठन्तो मन्त्रिणो
धनदानुज। वृजिनं स्वामि-
वैकल्ये प्राप्नुवन्ति सबान्धवाः॥
४४, ९.

राजमूलो हि विजयो जयश्च
जयतांवर। तस्मात्सर्वास्व
वस्थासु रक्षितव्यो नराधिपः॥
४४, १०.

न चापि प्रतिकूलेन नाविनीतेन
रावण। राज्यं पालयितुं
शक्यं न तीक्ष्णेन निशाचर॥
४४, ११.

परीतकाला हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् । ४४, १७.

मर्षयेत च काकुत्स्थः किञ्चिदन्यव्यतिक्रमम् । सतां धर्ममनुस्मृत्य न तु दारप्रधर्षणम् ॥ ४५, ८.

सर्वस्वहरणादेतद्देवं कर्म जुगुप्सितम् । स्वप्राणान् प्राणिनो ह्यत्र हित्वा कुर्वन्ति विक्रमम् ॥ ४५, ९.

स ( रामः ) तप्यमानस्तेजस्वी समुद्रमपि शोषयेत् । ४५, ११.

अमन्त्रयित्वा सचिवैर्यो राजा संप्रवर्तते । न स तिष्ठेच्चिरं राज्ये सलिलं पुष्करे यथा ॥ ४५, १७.

बलमारभतां संख्ये ऐश्वर्ये च निरीक्षणे । ४६, ३.

रामादपि च मर्तव्यं मर्तव्यं रावणादपि । उभाभ्यामपि मर्तव्यं वरं रामो न रावणः ॥ ४६, १८.

अकार्यं यदि वा कार्यं कर्तव्यं नात्र संशयः । भर्तुराज्ञार्थिना ह्यत्र स्वर्गं वाप्यभिकांक्षता ॥ ४७, १८.

काममुक्तमिदं रौद्रं स्त्रीणामसदृशं मया । ४८, २२.

मांसहेतोरपि मृगान् विहारार्थाय धन्विनः । घ्नन्ति लक्ष्मण राजानो मृगयायां वनं गताः ॥ ४८, २३.

राक्षसा दुष्टभावत्वाद् विकर्तुं प्रभवन्ति हि । ४८, २६.

अर्थः स्यादिह जीवन्त्या यः प्रधानः स्त्रियः पतिः । ५०, ८.

कष्टायामप्यवस्थायां न रामो गर्हितं वदेत् । ५०, १०.

अप्रमेयं हि तत्तेजः शक्यं तुलयितुं न वै । ५०, १९.

स्वभाव एष नारीणां त्रिषु लोकेषु कथ्यते । विमुक्तधर्माश्चपला भ्रातृभेदकराः स्त्रियः ॥ ५०, २९.

दद्यां न प्रतिगृह्णीयां सत्यं ब्रूयां न चानृतम् । ५२, १६.

याचकस्य समृद्धस्य शिखां त्वं स्प्रष्टुमिच्छसि । ५२, ३४.

कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि । ५२, ३५.

न तु सद्योऽपनीतस्य दृश्यते कर्मणः फलम् । काले ह्यन्तो भवेदत्र सस्यानामिव पक्तयः ॥ ५४, २६

कथं राजा स्थितो धर्मे परदान्

परामृशेत् । रक्षणीया विशेषेण
परदारा महायशः ॥ ५५, ५.
न तत्समाचरेद् वीर यत् परस्तु
विगर्हयेत् । ५५, ७.
यथात्मनस्तथाऽन्येषां दारा
रक्ष्या विशेषतः । आत्मानमुपमां
कृत्वा स्वेषु दारेषु रम्यताम् ॥
५५, ८.
कामं स्वभावो यो यस्य न
स शक्यः प्रमार्जितुम् । न हि
दुष्टात्मनामर्या निवसन्त्यालये
चिरम् ॥ ५५, ९.
अर्थं वा यदि वा कामं नष्टं
शास्त्रेष्वनागतम्। व्यवस्यन्ति
वरात्मानो धर्मं पौलस्त्य धर्मतः ॥
५५, १०.
राजा धर्मस्य कामस्य द्रव्याणां
चोत्तमो निधिः। धर्मं शुभं वा
पापं वा राजमूलं प्रवर्तते॥ ५५, ११.
ग्रीवायां प्रतिसंयुक्तं कालपाशं
न पश्यसि । ५५, १७.
सर्पमाशीविषं बद्धं वस्त्रान्ते
नावबुध्यसे । ५५, १७.
भारः स सम्यग् हर्तव्यो
भारो यो न विषादयेत् । ५५, १८.
तदन्नमुपभोक्तव्यं जीर्यते यद्-
नामयम् । ५५, १८.

यत् कृत्वा न भवेद्धर्मो न
कीर्तिर्न यशो भुवि शरीरतो भवेत्
कर्म कथं प्राज्ञस्तदाचरेत् ॥
५५, १९.
न श्रुतं न मे च दृष्टं परदाराभि-
मर्षणम् । ५५, २१.
हत्वा वा हरते शूरः शेते वा
निहतः परैः । ५७, ८.
पापानुबन्धो यस्य स्यात्कर्मणः को
नु कर्म तत् । कुर्वीत लोकाधिपतिः
स्वयंभूर्भगवानपि ॥ ५५, ११.
अनुबन्धमजानन्तः कर्मणाम-
विचक्षणाः । समित्रबान्धवजनाः
सामात्याः सपरिच्छदाः ।
क्षिप्रमेव विनश्यन्ति तथा त्वं
विनशिष्यसि ॥ ५७, १२.
निमित्तलक्षणं ज्ञानं ज्ञानिनां
स्वरलक्षणम् । अवश्यं सुख-
दुःखेषु नराणां प्रतिदृश्यते॥ ५८,३.
नास्ति धर्मः कुतः सत्यं नार्जवं
नानृशंसता । यत्र रामस्य
वैदेहीं भार्यां हरति रावणः॥५८,३६.
मृत्युकाले यथा मर्त्यो विपरीतानि
सेवते । मुमूर्षूणां हि मर्त्यानां
यत्पथ्यं तन्न रोचते ॥ ५९, २१.
यौवनं ह्यध्रुवं भीरु । ६१, २३.
तृणमन्तरतः कृत्वा रावणं
प्रत्यभाषत । ६२, १.

यदा विनाशो देशाना दृश्यते कालनिर्मितः । तदानार्याः प्रवर्तन्ते नराः कालवशं गताः ॥
६२, १७.

न शक्या यज्ञमध्यस्था वेदी स्रुग्भाण्डमण्डिता । द्विजाति-मन्त्रसंयुक्ता चण्डालेनोपस्पर्शितुम् ॥ ६२, १९.

एतदत्स्यसि मद्धस्ताच्च त्वां बाधिष्यते शुभे । क्षुधा तृष्णा च रंभोरु वर्षाणामयुतैरपि ॥
६३, १६.

पृथिवीं नास्पृशत् पद्भ्या-मनिमेषेक्षणानि च । अरजोऽम्बर-धारी च ह्यम्लानकुसुमस्तथा ॥
६३, २०.

अशुभं वत घोरोऽयं गोमायुर्वाशते यथा ॥ ६४, ४.

विगर्हितं च नीचं च कथ-मार्योऽभिधास्यति । ६६, १०.

न भवत्या व्यथा कार्या कुना-रीजनसेविता । ६६, १२.

यदा धर्मप्रधानस्य धर्मसे-तुर्विपद्यते । तदा दीनस्य सौमित्रे नास्तिक्यमुपजायते । ७०, ४.

भर्तारमपि लोकानां शूरं करुणवेदिनम् । अज्ञानादव-मन्यन्ते सर्वभूतानि लक्ष्मण ॥
७०, ७

मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् । निर्वीर्यमिति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥
७, ८.

यथा राजा यथा मृत्युर्यथा कालो यथा विधिः । मिथ्या नेह प्रवर्तन्तते सर्वभूतेषु लक्ष्मण ॥
७०, २५.

पुरा भूत्वा मृदुर्दान्तः सर्व-भूतहिते रतः । न क्रोधव-शमापन्नां प्रवृत्ति कर्तुमर्हसि ॥
७१, ४.

चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा । एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ७१, ५.

युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः । ७१, १२.

समाश्वस नरश्रेष्ठ प्राणिनां का न आपदः । स्पृशन्त्यनि-लवल्लोके क्षणेन व्यथयन्ति च ॥
७२, ६.

न बुद्ध्या निहतः प्राज्ञो विविनक्ति शुभाशुभे । ७२, १७.

न शोचन्ति न हृष्यन्ति

तत्तत्प्राप्य शुभाशुभम् । अदृष्ट-
गुणदोषाणामाहितानां च
कर्मणाम् । अन्तरेण क्रिया
येषां फलकाले प्रवर्तते ॥ ७२, १८.

त्वद्विधा बुद्धिसम्पन्ना महात्मानो
नरर्षभाः । आपत्स्वपि न कम्पन्ते
वायुवेगैरिवाचलाः ॥ ७३, ८.

न चावसी (?स) दनं साधो
त्वद्विधस्य महात्मनः । अत्यन्ता-
सदृशं कर्म प्राकृतस्येव विद्यते ॥
७४, १८.

उपरुन्ध्यन्ति मे प्राणा दृष्टि-
र्भ्रमति राघव । पश्यामि वृक्षान्
सौवर्णान् शिरसो धूतमूर्धजान् ।
७५, १३.

येन राम मुहूर्तेन सीतामादाय
रावणः । तस्मिन् नष्टं धनं
स्वामी क्षिप्रं सप्रंतिपद्यते ॥
७५, १४.

सर्वत्र खलु दृश्यन्ते साधवो
धर्मचारिणः । शूराः शरण्याः
सौमित्रे तिर्यग्योनिगता अपि ॥
७५, २७.

शूराश्च बलवन्तश्च कृतास्त्राश्च
नरा रणे । कालाभिपन्नाः सीदन्ति
बालुकासेतवो यथा ॥ ७६, ४२.

कालस्य सुमहद् वीर्यं सर्वभूतेषु
लक्ष्मण । ७६, ४१.

देशकालौ सहायांश्च स्वशक्तेश्च
बलाबले । नित्यं सञ्चिन्तयानस्तु
नानर्थानुपपद्यते ॥ ७८, ४२; ४३.

हृदयं हि नरस्याह शुभं वा यदि
वाशुभम् । पूर्वं हि मनसा ध्यात
पश्चादेव तदाप्यते ॥ ८१, ६.

# * संशोधन-पत्रिका *

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १ | र्गतक्रमं० | र्गतक्र्मं० |
| ५ | ११ | ममाश्रमं | स्वमाश्रमं ? |
| ८ | ७ | पर्यपृच्छयद्० | पर्यपृच्छद्० |
| १० | ९ | यच्छ्रु[illegible] | यच्छ्रुत्वा |
| १० | १६ | एषामार्ये | एषाप्यार्ये |
| ११ | ५ | स्नहृणा | स्नंहृणा |
| १६ | ५ | दंष्ट्व | दृष्ट्व |
| ५१ | ७ | समाहि: | समाहित: |
| ५४ | २ | ववन्दतु० | ववन्धतु० |
| ६४ | ४ | संप्रेक्ष्यमाणान् | संप्रेक्षमाणान् ? |
| ९२ | ३ | दीप्ततेजसाम् | दीप्ततेजसम् |
| ९२ | ७ | विषक्त० | निषक्त० |
| ९५ | ४ | क्रौञ्चवशां | क्रोधवशा |
| ९८ | २ | हरिभद्रा | हरी भद्रा |
| १०१ | १३ | भासिनी | भामिनी |
| १०२ | ४ | वाध्री शशान् | वाध्रीणसान् |
| १०३ | १२ | जैटायुषा | जटायुषा |
| १०४ | ८ | लक्ष्मणा | लक्ष्मणः |
| १०९ | २ | नवाग्ग्रयण० | नवाग्रयण० |
| १०९ | ३ | कृताग्ग्रयण० | कृताग्रयण० |
| ११५ | ६ | पौर्वाह्लिकं | पौर्वाह्णिकं |
| ११८ | १० | देवी सलक्ष्मणा सीता | देवीं सलक्ष्मणां सीतां |
| १२५ | १ | एव | एष |
| १२५ | १७ | °प्रहसाश्च | °प्रसहाश्च |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३१ | ६ | उपेयुषो | उपेयुषा |
| १३६ | ८ | मुन्नदद्० | मुन्नदन् । |
| १३९ | १७ | सास्रः | सास्रु ( ? श्रु ): सास्रा वा |
| १४० | १५ | पुण्यकर्मणः | पुण्यकर्मिणः |
| १४१ | ११ | महाकपालाः | महाकपालः |
| १४३ | १५ | बाहु | बाहुः |
| १४४ | १० | प्रतिकूलितु० | प्रतिकूलित० |
| १४६ | ५ | विप्रकीर्णास्तु | विप्रकीर्णास्तु । |
| १४६ | १४ | वचनम् | वनम् |
| १४९ | १ | दा–२१ | दा–२५ |
| १५१ | १५ | चिच्छिद् | चिच्छिद्० |
| १५१ | १६ | विकर्मभिः | विकर्णिभिः |
| १५७ | ३ | नुद्यमानः | उद्यम्य |
| ,, | ,, | स्वपरिघं | परिघं घोरं |
| १६९ | ४ | तिष्ठता | तिष्ठतः |
| १७१ | ३ | परिचरन् | पर्यचरन् |
| १७२ | ७ | ०स्तवं | ०स्तवः ? |
| १७२ | ८ | कथितं न | कत्थितेन |
| १७३ | ३ | युद्धविघ्नं | युद्धविघ्नः ? |
| १७४ | ४ | दुर्लभ | दुर्लभं |
| १७६ | १० | प्रवृद्धनिद्रां | प्रवृद्धनिद्रं ? |
| १८० | १५ | पद्रिषदैः | पारिषदैः |
| १८७ | ३ | मग्नाः | भग्नाः |
| १९१ | १२ | कानकाङ्ग० | कनकाङ्ग० |
| १९२ | ८ | काम | कामं |
| ११३ | १३ | शरैः | खरैः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९८ | ८ | त्वां | त्वं |
| २०३ | ५ | बहिः शीलः | हि दुःशीलः |
| २०३ | ९ | धर्मैः | धर्म्यैः |
| २१७ | ६ | वदति च | न नन्दति |
| २२८ | ९ | भूत्वाऽश्रमपदे | भूत्वाऽऽश्रमपदे |
| २५० | १२ | सचराचरा | सचराचराः |
| २७१ | १० | तयोमुहूर्त्तं | तयोर्मुहूर्त्तं |
| २७५ | १० | विननक्त० | विना नक्त० |
| २७७ | ८ | °तवाहवः | °तवाहवः |
| २८३ | १५ | तीक्ष्णदण्ष्ट्रां | तीक्ष्णदंष्ट्रां |
| २९१ | ४ | पाशैर्बर्द्धं | पाशैर्बद्धं |
| ३२४ | ९ | काञ्चनोरुच्छद:० | काञ्चनोरुच्छदा० |
| ३३२ | ८ | दशर्श | ददर्श |
| ३५५ | ११ | यदा | यथा |
| ४०० | ५ | वहुविधैः | बहुविधैः |
| ४०८ | १७ | द्दश्यन्ते | दृश्यन्ते |